कथं पुनरधिकः कार इत्यनेन पूर्वविप्रतिषेधाः शक्या न पठितुम्? लोकतः। तद्यथा—लोके'ऽधिकमयं कारं करोती'त्युच्यते योऽयं दुर्बलः सन्बलवद्भिः सह भारं वहति। एवमिहाप्यधिकमयं कारं करोतीत्युच्यते योऽयं पूर्वः सन्परं बाधते।

**अधिकारगतिस्त्यर्था विशेषायाऽधिकं कार्यम्।**
**अथ योऽन्योऽधिकः कारः पूर्वविप्रतिषेधार्थः सः॥**

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य तृतीयेपादे प्रथममाह्निकम्।

प्र०-मुख्यमेवाधारत्वमित्यप्रयोजनमेतत्स्यात्। नद्यास्तु तत्सामीप्याद् गौणमाधारत्वमिति यत्नात्संज्ञा सिद्धा। पूर्वेति। विप्रतिषेधे परं कार्यमिति वचनात्पूर्वो बाध्यः स्वरितत्वप्रतिज्ञानेन बाधकः सम्पद्यते। तुल्यजातीयस्य बाधको, न तु नित्यत्वादियुक्तस्य॥११॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याऽध्यायस्य तृतीये पादे प्रथममाह्निकम्।

उ०—विपरीतस्त्वभ्यायय इति प्रतिपादनेन प्रवाहैकदेशे तरन्तीष्वपि गोषु प्रवाहस्य न मुख्यमाधारत्वमिति किं सामीप्यपर्यन्तधावनेनेति चेन्न, कृत्स्नपदं न तथातात्पर्यकं, 'कटे आस्ते' इत्यादेर्मुख्यत्वाऽनापत्तेः। तस्माद् व्याप्यवृत्त्यव्याप्यवृत्त्युभयसाधारणमेवाधारत्वम्। कृत्स्नत्वं च बह्ववयवाभिप्रायकम्। बह्ववयवसंबद्धाधेयकत्वमेव विवक्षितं, 'सर्वे' इत्यपि तदभिप्रायकमेवेत्याशयात्। प्रकृतिः स्वार्थे, सप्तम्येव गौणाधारत्वार्थिकेति भाव इति कैयटानुसारिणः। वस्तुतः कृत्स्नपदसंकोचे न मानं, 'कटे आस्ते' इत्यप्यमुख्यमेव गङ्गापदस्य प्रवाहपरत्वे तीरपरत्वे चोक्तरीत्या न मुख्यमाधारत्वम्। गङ्गासर्वावयवानामिव तत्समीपदेशसर्वावयवानामपि व्याप्त्यभावात्। किं चाऽत्रौपश्लेषिकमधिकरणत्वम्। अत एव 'मासेऽतिक्रान्ते यद्दीयते तस्यापि मास औपश्लेषिकमधिकरण'मिति 'तत्र च दीयते' इति सूत्रे भाष्ये उक्तम्। समीपेऽप्यौपश्लेषिकं तत्त्वम्। व्यापकाधारस्यैवाऽधिकरणता न्याय्येत्यत्र मानं तु प्रकृत्यर्थतावच्छेदकविशिष्टे विभक्त्यर्थान्वयौचित्यं, नहि कटैकदेशे कटत्वमस्ति, तस्मादेकदेशगताधारत्वस्य कटे आरोपेण बोध इति गौण एव स आधार इति तत्त्वम्। ननु स्वरितत्वेन प्रबलः पूर्वः परमिव नित्यादीनपि बाधेतेत्यत आह—तुल्यजातीयस्येति। यादृशदौर्बल्ये प्रसक्ते प्राबल्याय स्वरितत्वं प्रतिज्ञायते तादृशमेव दौर्बल्यं तेनाऽपनीयत इति भावः। उक्तमर्थं गाथया संगृह्णाति भाष्ये—अधिकारगतिरुत्यर्थेति। द्वितीयफलम्—विशेषायेति। गौणसंग्रहायेत्यर्थः। तृतीयमाह—अथ योऽन्य इति॥११॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते प्रथमस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्।

## अनुदात्तङित आत्मनेपदम् ॥ १ । ३ । १२ ॥

### [ विकरणेभ्यः प्रतिषेधः । ]

विकरणेभ्यः प्रतिषेधो वक्तव्यः । चिनुतः सुनुतः लुनीतः पुनीतः । ङित इत्यात्मनेपदं प्राप्नोति[1] ॥ नैष दोषः । नैवं विज्ञायते—'ङकार इद्यस्य सोऽयं ङित्, 'ङितः' इति । कथं तर्हि ? ङकार एवेन्ङित्, ङित इति ॥ अथवोपदेश इति वर्तते‡ ॥ अथवोक्तमेतत् 'सिद्धं तु पूर्वस्य कार्यातिदेशा'दिति× ।

सर्वथा चङङ्भ्यां प्राप्नोति । एवं तर्हि 'धातो'रिति वर्तते । क्व प्रकृतम् ? 'भूवादयो धातवः' [ १. ३. १ ] इति । तद्वै प्रथमानिर्दिष्टं, पञ्चमीनिर्दिष्टेन चेहार्थः । अर्थाद्विभक्तिविपरिणामो भविष्यति । तद्यथा—'उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनम्' । 'देवदत्त'मिति गम्यते । 'देवदत्तस्य गावोऽश्वा हिरण्यं च, आढ्यो वैधवेयः[2] । 'देवदत्त' इति गम्यते । पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात् प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति । एवमिहापि पुरस्तात्प्रथमा-निर्दिष्टं सदर्थात्पञ्चमीनिर्दिष्टं भविष्यति ।

किमर्थं पुनरिदमुच्यते ?

प्र०— अनुदात्त । विकरणेभ्य इति । लादेशेषु कृतेषु नियमात् पूर्वं नित्यत्वाद्विकरणा-स्तेषां 'सार्वधातुकमपि'दिति ङित्त्वातिदेशादात्मनेपदनियमोऽनेन प्राप्नोति । ङकार इदिति । अन्यपदार्थापेक्षणाद्बहिरङ्गो बहुव्रीहिः । तत्पुरुषस्तु वर्तिपदार्थप्रधानत्वाद-न्तरङ्ग इति स एवाश्रीयते । केवलाच्च ङकारादिति आत्मनेपदाऽसम्भवात्सामर्थ्या-त्तदन्तविधेर्वाऽत्र ङिदन्त आश्रीयते । तेन ङिदन्तादात्मनेपदमित्यर्थः । अथवेति । तेनोपदेशे यो ङित्तस्मादात्मनेपदं, न त्वातिदेशिकङित्त्वेभ्यः । एवं तर्हीति । अत्रापि पक्षे उच्चुकुटिषतीत्यतिप्रसङ्गनिवारणार्थं 'सिद्धं तु पूर्वस्य कार्यातिदेशा'दित्यप्या-श्रयणीयम् । किमर्थमिति । किं विहितानां लादेशानामनेन नियमः क्रियते, अथ

उ०— अनुदात्तङि । ननु लादेशविधायकस्यैतैरेकवाक्यत्वान्नियमोत्तरमेव विकरणोऽत आह—लादेशेष्विति । एकवाक्यतापक्षस्तु भाविसंज्ञाश्रयणक्लेशदुष्ट इति भावः । पक्षप्राप्त-परस्मैपदनिवर्त्तकतया चाऽस्य नियमत्वम् । स्पष्टा चेयं रीतिः'द्युभ्यमनुपपद' इति सूत्रे कैयटे । केवलाच्चेति । तस्य लोपावश्यंभावादिति भावः ।

सामर्थ्यादिति । तेन च येन विधिरितिशास्त्रप्रवृत्त्यभावेऽपि तदन्तग्रहणमित्यर्थः । तदन्तविधेर्वेति । शब्दं विशेष्यीकृत्य तत्सामर्थ्याच्छास्त्रप्राप्तेर्वेत्यर्थः । तेन ङिदन्तादिति ।

१–इदं क्वचिदेव दृश्यते । † सार्वधातुकमपित् १. २. ४. ‡ उपदेशेऽजनुनासिक इत् १. ३. २.
× १. २. १. वा० ७. २–'वैधेयः' पा० ।

## आत्मनेपदवचनं नियमार्थम् ॥ १ ॥

नियमार्थोऽयमारम्भः। किमुच्यते नियमार्थोऽयमिति, न पुनर्विध्यर्थोपि स्यात् ?

## लविधानाद्धि हितम् ॥ २ ॥

लविधानाद्ध्यात्मनेपदं परस्मैपदं च विहितम्+ ॥ अस्ति प्रयोजनमेतत्। किं तर्हीति। विकरणैस्तु व्यवहितत्वान्नियमो न प्राप्नोति। इदमिह संप्रधार्यं— 'विकरणाः क्रियन्तां नियम' इति किमत्र कर्तव्यम् ? परत्वाद्विकरणाः* । नित्याः खल्वपि विकरणाः, कृतेऽपि नियमे प्राप्नुवन्त्यकृतेपि प्राप्नुवन्ति। नित्यत्वात्परत्वाच्च विकरणेषु कृतेषु विकरणैर्व्यवहितत्वान्नियमो न प्राप्नोति।

नैष दोषः। अनवकाशो नियमः। साऽवकाशः। कोऽवकाशः ? य एते लुग्विकरणाः श्लुविकरणा लिङ्लिटौ च।

प्र०—वाक्यैकवाक्यतया विधिरिति प्रश्नः। नियमार्थ इति। एकवाक्यतायां भाविनी संज्ञाश्रयणीयेति वाक्यभेद एवाश्रीयते तेन नियमोऽयं सम्पद्यते। परत्वादिति। विकरणानामवकाशः—अलादेशाश्चानशादयः। नियमस्यावकाशः—लिङ्लिटावाढ्ढे-

उ०—इत्संज्ञककङकारान्तादित्यर्थः। अतिदेशे तु ङिदिति बहुव्रीहिरेव, 'क्ङिति च'इत्याद्यनुरोधादिति भावः। तनेति। अत्र पक्षे ङिदिति बहुव्रीहिरेवेति भावः। बहिरङ्गोऽपि 'क्ङिति च'इत्याद्यैक-रूप्याय शास्त्रे आश्रीयत इति बोध्यम्। भाष्ये—सिद्धं तु पूर्वस्येति। पूर्वपदस्य परभिन्न-परत्वात्पचेते इत्यादा'वातो ङित' इति भवत्येव। अत्रापीति। कुटेः सनो 'गाङ्कुटादिभ्य' इति ङित्वात्सनन्तस्य ङिदन्तधातुत्वादिति भावः। शेत इत्यादौ तु व्यपदेशिवद्भावात्सिद्धिरिति बोध्यम्। इत्यपीति। उपदेशपदानुवृत्तिर्वा, कर्मधारयो वेत्यपि बोध्यम्। इति प्रश्न इति। प्रयोजनस्य स्पष्टत्वात्तदाक्षेपपरमिति भावः। वक्ष्यमाणे प्रकारान्तरेणाऽतिव्याप्तिं परिहर्तु-मयमुपक्षेप इति बोध्यम्। [ वाक्यैकवाक्यतयेति। ] आपाततोऽवान्तरवाक्यार्थबोधोत्तरं वाक्यैकवाक्यतया महावाक्यार्थबोध इत्यर्थः। एकवाक्यतायामिति। लादेशाश्रयसंज्ञामूल-विधानेऽन्योन्याश्रयापत्तेरनुदात्तङित इत्यादौ भाविसंज्ञाऽऽश्रयणीया स्यात्। 'अनुदात्तङितो लस्य स्थाने ते तिबादयो भवन्ति येषां जातानामात्मनेपदसंज्ञा भविष्यती'त्यर्थापत्तेरिति भावः। वाक्यभेद एवेति। वाक्यभेदेप्येतन्मुखनिरीक्षणेनैव लक्ष्यसंस्कारकं तिबादिसूत्रं, न ततः स्वतन्त्रमिति बोध्यम्। नियमार्थत्वपक्षेऽन्येषां प्राप्तानामेतत्सामर्थ्यान्निवृत्तिः। एकवाक्यतापक्षे तु तेषामप्राप्तिरेवेति विशेषः। भाष्ये—तिप्तसित्यादिना सिद्धत्वान्नियमार्थत्वमित्यज्ञानात् आह—किमुच्यत इति। लविधानादिति। लपदं तदादेशलक्षकमिति बोध्यम्। अन्य-तरस्याऽनवकाशत्वे विप्रतिषेधाऽप्रयोगाद् द्वयोः सावकाशतां दर्शयति—विकरणानामिति।

+ तिप्तस्झि०' माहिङ् ३. ४. ७८. * स्थानी लुटोः १. १. ११.

यदि पुनरियं 'परिभाषा' विज्ञायेत ? किं कृतं भवति ? 'कार्यकालं संज्ञापरिभाषं, यत्र कार्यं तत्र द्रष्टव्यम्' 'लस्य तिबादयो भवन्ती'त्युपस्थितमिदं भवत्य'नुदात्तङित आत्मनेपदम्' 'शेषात्कर्तरि परस्मैपदम्' [ १.३.७८ ] इति ॥ एवमपीतरेतराश्रयं भवति । केतरेतराश्रयता ? अभिनिर्वृत्तानां लस्य स्थाने तिबादीनामात्मनेपदपरस्मैपदसंज्ञया भवितव्यम्†, संज्ञया च तिबादयो भाव्यन्ते । तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च [ कार्याणि ] न प्रकल्पन्ते ।

परस्मैपदेषु तावन्नेतरेतराश्रयं भवति । परस्मैपदानुक्रमणं न करिष्यते ।

प्र०–धातुकसंज्ञौ । स्पर्द्धत इत्यादावुभयप्रसङ्गे परत्वाद्विकरणस्तेन व्यवधानान्नियमाऽप्रसङ्गः । अनवकाश इति । सर्वत्र विकरणानां व्यवधायकत्वादिति भावः । यदि पुनरिति । आत्मनेपदपरस्मैपदाभ्यां लिङ्गाभ्यामिदं प्रकरणं लादेशविधावुपतिष्ठते । तत्र महावाक्येन विहितेषु लादेशेषु विकरणा इति दोषाभावः । स्यादिषु कथम् । ते हि लावस्थायामेव विधीयन्ते इति तैर्व्यवधानान्नियमो न प्राप्नोति । उच्यते—लमात्रापेक्षत्वादन्तरङ्गत्वाल्लादेशेषु कृतेषु लकारविशेषापेक्षया बहिरङ्गाः स्यादयो भविष्यन्ति, येन नाप्राप्तिन्यायेन शबादीन्बाधित्वा । शबादिविधावनुवर्त्तनाद्वा ।

एवमपीति । एकवाक्यतापक्षे विहिता लादेशा न सन्ति येन तेषां सतामात्मनेपदपरस्मैपदसंज्ञे स्याताम् । ततश्चैतत्परिभाषोपस्थाने सति संज्ञाश्रयं लादेशविधानम्,

उ०–यद्यपि नित्याऽनित्ययोरप्ययुक्तः स तथापि पूर्वं नित्यत्वाऽस्मृतेर्न दोष इति बोध्यम् । परत्वादिति । यद्यपि प्राप्तस्यैव बाध इति सार्वधातुकपरत्वं दुरुपपादं तथापि शास्त्रतः प्राप्तिमात्रेण बौद्धं परत्वमादाय तत्प्रवृत्तिरिति भावः । इति भाव इति । इत्यभिमान इत्यर्थः । परिभाषाया लिङ्गत्वनियमात्तद्दर्शयति—आत्मनेपदेति । यथोद्देशे वाक्यभेदस्यैव स्वस्वात्कार्यकालाश्रयणम् । उपस्थितस्य च वाक्यैकवाक्यतयाऽन्वयः । स चेत्थम्—'लस्य स्थाने तिबादयो भवन्ति, ते चानुदात्तङितः परस्य लस्य स्थाने तादृशा भवन्ति येषां तातामात्मनेपदसंज्ञा भवती'ति । न चाऽवान्तरवाक्यार्थबोधोत्तरं तेषां लस्थानिकत्वज्ञानादात्मनेपदादिसंज्ञोत्तरमेवैकवाक्यताऽस्तु, किं भाविसंज्ञाश्रयेणेनेति वाच्यम् । अत्र तत्रोपस्थितौ तावत्पर्यन्तं तेनाऽसंबद्धतयाऽवस्थाने मानाभावात् । अन्तरङ्गतयाऽनेन संबन्धानुभवोत्तरमेव तिबादिभिः संज्ञाऽनुभवात् । तत्र महावाक्येनेति । अत एव भाष्येऽपि 'लस्य तिबादयो भवन्तीत्युपस्थितमिदं भवति—अनुदात्ते'त्याद्युक्तम् । अत्रेदं बोध्यम्—कार्यकालपक्षेपीदमेव सूत्रं स्वाकाङ्क्षया तेनैकवाक्यतामनुभवति । 'परिभाषे'त्यस्य परिभाषावदित्यर्थः । यथा परिभाषा कार्याकाङ्क्षावशात्तेनैकवाक्यतापन्ना, तथेदमपि, स्वाकाङ्क्षावशात् । आकाङ्क्षोत्थापके च लिङ्गव्यवहारः । प्रकृते चास्य तदाकाङ्क्षोत्थापकात्मनेपदत्वा-

† कः परस्मैपदम्, तङानावात्मनेपदम् १. ४. ९९; १००. १—मवचिन्त्य

अवश्यं कर्तव्यम्—'अनुपराभ्यां कृञः' [ १. ३. ७९ ] इत्येवमर्थम्। ननु चैतदप्यात्मनेपदानुक्रमण एव करिष्यते 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' [ १. ३. ७२ ] आत्मनेपदं भवति, 'कर्तर्यनुपराभ्यां कृञो ने'ति।

आत्मनेपदेषु चापि नेतरेतराश्रयं भवति। कथम्? भाविनी संज्ञा विज्ञास्यते सूत्रशाटकवत्। तद्यथा—कश्चित्कंचित्तन्तुवायमाह—'अस्य सूत्रस्य शाटकं वये'ति। स पश्यति—'यदि शाटको न वातव्योऽथ वातव्यो न शाटकः, शाटको वातव्यश्चे'ति विप्रतिषिद्धम्। भाविनी खल्वस्य संज्ञाभिप्रेता—स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति। एवमिहापि स लस्य स्थाने कर्तव्यो यस्याऽभिनिर्वृत्तस्यात्मनेपदमित्येषा संज्ञा भविष्यति।

प्र०—लादेशविधानाश्रया च संज्ञेति भावः। परस्मैपदानुक्रमणमिति। नन्वसति परस्मैपदानुक्रमणे परस्मैपदमनुदात्तङिद्भ्यः प्राप्नोति। नैष दोषः। आत्मनेपदसम्बन्धावगमेन तेषां परस्मैपदसम्बन्धस्य बाधनाच्छेषादेव परस्मैपदमवस्थास्यते। अवश्यमिति। आत्मनेपदबाधनार्थमित्यर्थः। यदर्थमिति। कृतनियमानामसङ्करेण स्थितानां हि निमित्तभावोपपत्तिः। अभिनिर्वृत्तानीति। प्रागपि नियमात्तेषां सम्भव-

उ०—दिना बोधकावेतौ शब्दाविति तत्र लिङ्गत्वव्यवहारः। एतेन सर्वत्र परिभाषालिङ्गं विधेः परिभाषाकाङ्क्षोत्थापकत्वं विधौ दृष्टं, न चात्र तथा, विधिसूत्रे आत्मनेपदत्वादिनाऽनुपस्थितेरितीदमयुक्तमित्यपास्तमिति। एवं च धातोरित्यनुवृत्त्यर्थं मण्डूकप्लुतिर्विभक्तिविपरिणामश्च नाश्रयणीयाविति बोध्यम्। लकारविशेषेति। अपरनिमित्तकत्वेन लादेशानामन्तरङ्गत्वं वक्तुं योग्यम्, इदशान्तरङ्गत्वस्य भाष्ये क्वाप्यनाश्रयणादिति केचित्। नन्वेवं परत्वाच्छबादयः स्युरत आह—येन नेति। ननु भावकर्मणोरव्यभिचारितार्थ्यात्कथमयं न्यायः। न च तत्रापि यका बाधः। एवं तर्हि 'पुरस्तादपवादा' इतिन्यायेन यक एव बाधः स्यान्न शबादेः। किं च श्यनादिभिर्येन नाप्राप्तिन्यायाऽभावात्तद्विषये सावकाशाः। किं च लुग्विकरणादिषु शपो निवृत्तौ श्यादयः सावकाशा इत्यत आह—शबादीति। आदेशेषु कृतेषु लावस्थाऽभावात्स्याद्यप्राप्तेश्चिन्त्यमिदम्। 'लावस्थायां स्यादय' इत्यनाश्रित्येदमिति वक्तुं युक्तम्। तत्पक्षे तु धातोरितिवदनुदात्तङित इत्यपि विहितविशेषणमिति बोध्यम्। एकवाक्यतेति। परिभाषापक्ष इति भावः। नन्वसतीति। प्रत्ययनियमाश्रयणेऽनुदात्तादिभ्य एवात्मनेपदं धातुमात्रात्परस्मैपदमिति पर्यवसानात्कादिविषये क्विविवेति भावः। बाधनादिति। प्रकृतिनियमाश्रयणेनेत्यर्थः। कक्विपोस्तु वाऽसरूपविधिना समावेश इति भावः। भाष्ये—अथवा पुनरिति। वाक्यभेदेनेत्यर्थः। कृतेति। भिन्नवाक्यतायां तिबादिसूत्रेणाऽऽपातरूपतया प्रसक्तत्वेन प्रतिपन्नस्य न निमित्तत्वमिति भावः। भाष्ये—अभिनिर्वृत्तानीत्यस्य प्राप्तानीत्यर्थः। वृत्तस्य इति। अन्यथा विकरणव्यवधाने नियमाऽप्रवृत्तावुभयोरपि पदयोः सामान्यशास्त्रेण सिद्धतया

अथवा पुनरस्तु नियमः। ननु चोक्तं विकरणैर्व्यवहितत्वान्नियमो न प्राप्नोतीति। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति—'विकरणेभ्यो नियमो बलीय'नीति, यदयं विकरणविधावात्मनेपदपरस्मैपदान्याश्रयति—'द्युताद्यलृदितः परस्मैपदेषु' [३. १. ५५] 'आत्मनेपदेष्वन्यतरस्याम्' [५४] इति। नैतदस्ति ज्ञापकम्। अभिनिर्वृत्तानि हि लस्य स्थान आत्मनेपदानि परस्मैपदानि च। यत्तर्हि—'अनुपसर्गाद्वा' [ १. ३. ४३ ] इति विभाषां शास्ति।

किं पुनरयं प्रत्ययनियमः—'अनुदात्तङित एवात्मनेपदं भवति' 'भावकर्मणोः' [ १. ३. १३ ] एवात्मनेपदं भवती'ति। आहोस्वित्प्रकृत्यर्थनियमः—'अनुदात्तङित आत्मनेपदमेव' 'भावकर्मणोरात्मनेपदमेवे'ति। कश्चात्र विशेषः ?

**तत्र प्रत्ययनियमे शेषवचनं परस्मैपदस्याऽनिवृत्तत्वात् ॥ ३ ॥**

तत्र प्रत्ययनियमे शेषग्रहणं कर्तव्यं परस्मैपदनियमार्थं—'शेषात्कर्तरि परस्मैपदम्' [ १. ३. ७८ ] इति। कि कारणम् ? 'परस्मैपदस्याऽनिवृत्त-

प्र०—मात्रेण निमित्तत्वाऽविरोधात्। यत्तर्हीति। एतत्तु लिङ्लिडर्थं स्यात्। चक्रमे चकाम, क्रम्यात् क्रंसीष्टेति। तस्माज्ज्ञापकदिक्प्रदर्शिता भाष्यकृता। ज्ञापकं तु 'वृद्भ्यः स्यसनो'रित्यत्र स्ये विकल्पविधानम्। किं पुनरिति। उभयनियमस्तावन्न संभवति, अनेकस्मिन्नर्थे वाक्यस्यैकस्य तात्पर्याऽयोगात्। तस्मादन्यतरनियमसंभवात्प्रश्नः। ननु प्राधान्यात्प्रत्ययानां तन्नियमो युक्तः, एवं तर्हि प्रधानोपरोधो मा भूदिति प्रकृत्यर्थनियमोऽपि संभवति। भावकर्मणोरेवेति। ननु पूर्वेण नियमाद्भाव-

उ०—तद्विधानं विफलं सदेतदर्थज्ञापकम्। 'स्ये' इति स्वेतत्पक्षे विषयसप्तमीति भावः। विकरणव्यवधानेऽपि नियमप्रवृत्तिर्ज्ञाप्यत इति 'शदेः शित'इति सूत्रे भाष्ये ध्वनितमिति वक्ष्यते। अत एव 'लावस्थायां स्यादय' इति पक्षेऽपि न दोषः। केचित्तु भाष्यप्रामाण्यादनुपसर्गाद्वेत्यस्याशीर्लिङ्लिटोरप्रवृत्तिरित्याहुः। उभयनियमपक्षोऽपि सम्भवन् किमिति नोक्त इत्यत आह—उभयेति। एकस्येति। 'सकृदुच्चरित' इति न्यायादिति भावः। नन्विति। 'प्रधाने कार्यसंप्रत्यया'दिति न्यायादित्यर्थः।

एवं तर्हीति। न्यायद्वयस्यापि सत्त्वात्संदेह इति प्रश्नः। प्रकृत्यर्थेति द्वन्द्वः। नन्विति। 'अनुदात्तङित एवे'त्यत्रैवकारस्यान्ययोगव्यवच्छेदार्थकत्वात्प्रकृत्यन्तरात्तत्प्राप्त्यर्थे तदप्राप्तौ विध्यर्थत्वमेव न्याय्यमिति भावः। नैष इति। खलेकपोतन्यायेन संपूर्णं प्रकरणं युगपदेव प्रवृत्तमिति भावः। भाष्ये—तत्र परस्मैपदमपीति। अनुदात्तङित्त्वय इत्यर्थः।

त्वात्' । प्रत्यया नियताः प्रकृत्यर्थावनियतौ, तत्र परस्मैपदमपि प्राप्नोति । तत्र शेषग्रहणं कर्तव्यं परस्मैपदनियमार्थम् । 'शेषादेव परस्मैपदं भवति नान्यत' इति ।

**क्यष आत्मनेपदवचनं तस्याऽन्यत्र नियमात् ॥ ४ ॥**

क्यष आत्मनेपदं वक्तव्यम् । लोहितायति लोहितायते† । किं पुनः कारणं न सिध्यति ? 'तस्यान्यत्र नियमात्' । तद्ध्यन्यत्र नियम्यते ॥ उच्यते च, न च प्राप्नोति, तद्वचनाद्भविष्यति ॥ अस्तु तर्हि प्रकृत्यर्थनियमः ।

**प्रकृत्यर्थनियमेऽन्याऽभावः ॥ ५ ॥**

प्रकृत्यर्थनियमेऽन्येषां प्रत्ययानामभावः । अनुदात्तङितस्तृजादयो न प्राप्नुवन्ति । नैष दोषः । अनवकाशास्तृजादयः, उच्यन्ते च‡, ते वचना-

प्र०—कर्मणोरिति सूत्रं विध्यर्थं न्याय्यं, न तु नियमार्थम् । नैष दोषः । समस्तमात्मनेपदप्रकरणमेकं वाक्यमिति तदपेक्षयैवमुक्तम् । क्यष इति । 'वा क्यष' इति परस्मैपदे विकल्पिते आत्मनेपदस्यानुदात्तङिदादिषु नियतत्वादप्राप्तत्वाल्लकारस्य श्रवणप्रसङ्गः । उच्यते चेति । लकारे तिबादिभिर्निवर्तिते नियमः प्रवर्तते, तत्र परस्मैपदस्य सिद्धत्वाद्वावचनेन तस्मिन्विकल्प्यमाने वचनमनर्थकं स्यात्, केवलायाः प्रकृतेरप्रयोगार्हत्वाच्छब्दमन्तरेणार्थस्य प्रतिपादयितुमशक्यत्वात्प्रयोगविकल्पाऽयोगात् । तस्मा-

उ०—प्रत्ययनियमे दोषान्तरमाह भाष्ये—क्यष आत्मनेपदं वक्तव्यमिति । 'वा क्यष' इत्यादिचतुःसूत्री 'शेषा'दित्यतः प्राक्कार्येति भावः । लकारस्येति । वाग्रहणादिति भावः । लान्तस्यापि कृदन्तत्वात्प्रातिपदिकत्वे सुपि पदत्वादपदं न प्रयुञ्जीतेत्यस्य न विषय इति बोध्यम् । भाष्ये—'उच्यते चे'त्यस्य 'विकल्पद्वाराऽऽत्मनेपद'मिति शेषः । 'न च प्राप्नोती'त्यस्य—'आत्मनेपद'मिति शेषः । तत्—आत्मनेपदम् । वचनात्—'वा क्यष' इति वचनादित्यर्थः । ननु वावचनेन लकारस्यैव पाक्षिकत्वमुच्यते न त्वात्मनेपदस्येत्यत आह— लकार इति । भिन्नवाक्यतापक्षे सामान्यसूत्रप्रवृत्त्यनन्तरभावित्वादेतत्प्रकरणेन पूर्वनिवृत्तलस्य प्रत्यायनमशक्यं, तिङ्विषयत्वाच्च तदन्तस्य कृत्वमप्यशक्यम् । ननु केवलप्रकृतिप्रयोगस्तर्हि तेनोच्यतेऽत आह—केवलाया इति । नन्वेवमपि प्रयोगविकल्पोऽस्त्वत आह—शब्दमिति । साधुप्रयोगनिर्वाहप्रवृत्तशास्त्रेण क्यषन्तप्रयोगाऽभावस्य बोधयितुमयुक्तत्वादिति भावः । एवं च 'क्यष आत्मनेपदवचन'मिति द्वितीयदोष उद्धृतः । 'शेषग्रहणं कर्तव्य'मिति दोषस्त्वस्त्येव । आपाततस्तिबादिसूत्रेण प्रसक्तमुभयपदित्वं यथा पाश्चात्यैर्नियमैरपोद्यते, एवं प्रथमं नित्यवत्कृतं लकारनिवर्तनं पाक्षिकमिति कल्पयितुं युक्तम् । किं च 'दधी'त्यादिवत्केवलप्रकृति-

† वा क्यषः १. ३. ९०. ‡ ण्वुल्तृचौ ३. १. १३३

द्भविष्यन्ति । सावकाशास्तृजादयः । कोऽवकाशः ? परस्मैपदिनोऽवकाशः । तत्रापि नियमान्न प्राप्नुवन्ति ।

तव्यदादयस्तर्हि भावकर्मणोर्नियमान्न प्राप्नुवन्ति । तव्यदादयोऽप्यनवकाशास्ते वचनाद्भविष्यन्ति‡ ॥ चिणतर्हि भावकर्मणोर्नियमान्न प्राप्नोति । चिणपि वचनाद्भविष्यति× ॥ घञ्तर्हि भावकर्मणोर्नियमान्न प्राप्नोति+ । तत्रापि प्रकृतं कर्मग्रहणमनुवर्तते । क्व प्रकृतम् ? 'अणकर्मणि च' [ ३. ३. १२ ] इति ॥ तद्वै तत्रोपपदविशेषणमभिधेयविशेषणेन चेहार्थः । न चान्यार्थं प्रकृतमन्यार्थं भवति । न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति । नहि गोधा सर्पन्ती सर्पणादहिर्भवति ।

प्र०-दात्मनेपदमेव विकल्पेन विधीयते । तव्यदादयोपीति । यद्यपि स्नानीयं चूर्णमित्यादौ करणादीन्यवकाशः, तथापि 'तयोरेवे'ति चोदनया भावकर्मणोर्यद्विधानं तदनवकाशम् । चिणतर्हीति । ननु भावकर्मणी सार्वधातुकस्याऽर्थौ, न चिणस्तत्कथमप्राप्तिश्चोद्यते । सहाभिधानपक्षे चिणोऽपि भावकर्मणी अर्थावित्यदोषः । घञ्तर्हीति । अकर्तरि विधीयमानोऽपादानादिषु घञ्सावकाशः । उपपदविशेषणमिति । सप्तमीस्थस्य सामान्यस्य कर्मणीत्यनेन विशेषस्य प्रतिपादनादुपपदविशेषणमुच्यते । एव-

उ०-प्रयोगोऽपि वक्तुं शक्य इति चेन्न, तिबादिसूत्रेण युगपदुभयप्रत्ययपरत्वाऽसम्भवादर्थाक्षिप्तस्तयोर्विकल्पः । स एव तत्तन्नियमैरप्राप्तः पुन'र्वा क्यष' इत्यनेन प्रतिप्रसूयत इति कल्पनाया एव युक्तत्वान्न दोषः । एकवाक्यतापक्षेऽपि 'यदीदं प्रकरणं न स्यात्स्यादेव विकल्प' इति सम्भावितस्य तस्यैव प्रतिप्रसव इति न दोषः । ननु प्रत्ययनियमपक्षे 'शेषा'दिति कृतेपि दोषः, 'कर्त्तरी'त्यस्य सत्त्वेन 'कर्त्तरि शेषादेवे'त्यर्थेऽर्थान्तरे परस्मैपदस्य सर्वत आपत्तेरिति चेत्सत्यम् । विनिगमनाविरहेण 'कर्त्तर्येव', 'शेषादेवे'ति नियमद्वयाऽङ्गीकारेणाऽदोषात् । नन्वेवमपि 'भावकर्मणोरेवे'ति धातुमात्रविषयनियमेनानुदात्तङित्त्वयोऽपि कर्त्तरि तङानापत्तिः । न चाऽनुदात्तङित इत्यस्य वैयर्थ्यम्, शेषान्नावकर्मणोस्तद्वयावृत्त्यर्थं चारितार्थ्यादिति चेन्न । योगविभागसामर्थ्येनाऽस्य कर्त्रर्थत्वाददोषः । भाष्ये—अस्तु तर्हीति । 'शेषादिति कर्त्तव्यसारूपाद्दोषा'दित्यादिः । परस्मैपदिनोऽवकाश इति भाष्यादवकाशशब्दो नित्यैकवचनान्तः, 'करणादीन्यवकाश' इति कैयटाच्चित्यपुंल्लिङ्गः, 'तिङन्तान्यवकाश' इति सरूपसूत्रस्थभाष्याच्चेति बोध्यम् । तत्रापि नियमान्नेति । 'तेषु परस्मैपदमेवे'ति नियमादित्यर्थः । एवं चाऽनवकाशत्वाद्वचनसामर्थ्याद्भविष्यन्तीति प्रकृत्यर्थनियमे न दोष इति भावः । तथापीति । बहुलग्रहणोक्तनिषेधचारितार्थ्येपि 'तयोरेवे'ति विधेश्चारितार्थ्यादिति भावः । सहाऽभिधानेति । यद्यप्यनिर्दिष्टार्थानां स्वार्थिकत्वेन प्रकृत्यर्थोऽर्थकत्वैव व्याख्या, तथापि व्याकरणान्तरेऽति-

‡ तयोरेव कृत्यक्तखलर्थाः ३. ४. ७० × चिण् भावकर्मणोः ३. १. ६६. + भावे ३. ३. १८.

यत्तावदुच्यते—'नान्यार्थं प्रकृतमन्यार्थं भवती'त्यन्यार्थमपि प्रकृतमन्यार्थं भवति। तद्यथा—शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उपस्पृश्यते च, शालयश्च भाव्यन्ते। यदप्युच्यते—'न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति, नहि गोधा सर्पन्ती सर्पणादहिर्भवती'ति। भवेद् द्रव्येष्वेतदेवं स्यात्। शब्दस्तु खलु येन येनाभिसम्बध्यते तस्य तस्य विशेषको भवति।

**शेषवचनं च ॥ ६ ॥**

शेषग्रहणं च कर्तव्यम्। 'शेषात्कर्तरि परस्मैपदम्' [ १. ३. ७८ ] इति। किं प्रयोजनम्? शेषनियमार्थम्। प्रकृत्यर्थौ नियतौ, प्रत्यया अनियताः, ते शेषेऽपि प्राप्नुवन्ति। तत्र शेषग्रहणं कर्तव्यम्—'शेषात्कर्तरि परस्मैपदमेव नान्य'दिति।

**कर्तरि चात्मनेपदविषये परस्मैपदप्रतिषेधार्थम् ॥ ७ ॥**

कर्तरि चाऽऽत्मनेपदविषये परस्मैपदप्रतिषेधार्थं द्वितीयं शेषग्रहणं कर्तव्यम्। 'शेषाच्छेषे' इति वक्तव्यम्। इह मा भूत्—'भिद्यते कुसूलः स्वयमेवे'ति*।

---

प्र०–मभिधेयविशेषणेनेति व्याख्येयम्। कर्तरि चेति। यदा 'कर्मव'दित्ययं शास्त्रातिदेशस्तदा कर्मकर्तरि परत्वात्परस्मैपदं प्राप्नोति। शुद्धौ तु कर्मकर्तारावुभयोरवकाशौ।

---

उ०–प्रत्ययादिकल्पनादर्शनादयं पक्ष आश्रितः। सहाभिधानेपि द्वावितिवदर्थवत्ता प्रत्येकमेव पर्याप्तेति बोध्यम्। सहाभिधानं द्योतकत्वेन, उभयोरपि द्योतकत्वादिति तत्त्वम्। अकर्त्तरीति। भावघञ्स्थनवकाशत्वादसिद्ध इति भावः। ननूपपद इति विशेष्याऽभावात्कथं 'कर्मणी'त्यस्य तद्विशेषणत्वमत आह—सप्तमीति। विशेषोपस्थापकत्वमत्र विशेषणपदेन विवक्षितमिति भावः। स्वघटितसूत्रे भावलक्षणसप्तम्यन्तमनुवृत्तिमात्रेण कथं विषयसप्तम्यन्तं स्यादिति शङ्काभाष्यार्थः। शब्दाऽधिकार एवाश्रित इति परिहारः। भाष्ये प्रत्ययनियमवादी मत्पक्षे त्वयोद्भावितं गौरवमत्रापि समानमित्याह—शेषवचनं चेति। अत्रापि पक्षे शेषग्रहणं कर्त्तव्यमित्यर्थः। शेषग्रहणान्तरं च कर्त्तव्यमित्यधिकं गौरवं प्रत्ययनियमपक्षे इत्याह—कर्त्तरि चेति। आत्मनेपदविषयः कर्त्ता—कर्मकर्त्ता। ननु स्वाश्रयकर्तृत्वप्रयुक्तं परस्मैपदमातिदेशिकेन विरुद्धमिति कथं तत्स्यादत आह—यदेति परस्मैपदं प्राप्नोतीति। द्वितीयशेषग्रहणे तु कर्मकर्तुः शेषत्वाऽभावान्नेति भावः। उभयोः—कर्मकर्त्राश्रयविध्योः। भावाऽभावकृतविरोधवदेव स्वाश्रयं निवर्त्यत इति भावः। न चातिदेशोऽनवकाशः, कार्यान्तरे सावकाशत्वादिति तात्पर्यम्। कार्यातिदेशे त्विति। केचित्त्वेतद्भाष्यप्रामाण्यात्कार्यातिदेशोऽपि परत्वादिव्यवहारे उत्पत्तिदेश एव देशोऽतिदिश्यमानकार्याणामित्याहुः। वस्तुतः कार्यातिदेशः

---

१–'शेषवचन' पा०। * कर्मवत् कर्मणा तुल्यक्रियः ३. १. ८७.

कतरस्मिन्पक्षेऽयं दोषः ? प्रकृत्यर्थनियमे । प्रकृत्यर्थनियमे तावन्न दोषः । प्रकृत्यर्थौ नियतौ, प्रत्यया अनियताः, तत्र नार्थः कर्तृग्रहणेन, कर्तृग्रहणाच्चैव दोषः ॥ प्रत्ययनियमे तर्ह्ययं दोषः । प्रत्यया नियताः, प्रकृत्यर्थावनियतौ, तत्र कर्तृग्रहणं कर्तव्यं भावकर्मणोर्निवृत्त्यर्थम् । कर्तृग्रहणाच्चैष दोषः ।

प्रकृत्यर्थनियमे शेषग्रहणं शक्यमकर्तुम् । कथम् ? प्रकृत्यर्थौ नियतौ, प्रत्यया अनियताः । ततो वक्ष्यामि—'परस्मैपदं भवती'ति । तन्नियमार्थं भविष्यति—'यत्र परस्मैपदं चान्यच्च प्राप्नोति तत्र परस्मैपदमेव भवती'ति ।

तत्तर्हि प्रत्ययनियमे द्वितीयं शेषग्रहणं कर्तव्यम् ? न कर्तव्यम् । योगविभागः करिष्यते[†] । 'अनुदात्तङित आत्मनेपदम्' । ततः—'भावकर्मणोः' । ततः

प्र०-कार्यातिदेशे तु परत्वादात्मनेपदं सिध्यति । प्रकृत्यर्थौ नियताविति । भावकर्मणोरात्मनेपदमेवेति नियमादन्तरेणापि कर्तृग्रहणं कर्तर्येव परस्मैपदं लभ्यत इति नार्थः कर्तृग्रहणेन । कर्तृग्रहणाच्चेति । परस्तात्तु परिहरिष्यति । परस्मैपद-

उ०-शास्त्रातिदेशद्वारैवेत्युक्तम् । 'कर्त्तरि चे'त्यादिचकारस्य प्रकृत्यर्थनियमपक्षे दोषान्तरमिति भाति, तच्च न, वक्ष्यमाणयुक्तेरित्याशयेन पृच्छति—कतरस्मिन्निति । भाष्ये चकारस्वारस्येनाह तृतीयः—प्रकृत्यर्थेति । प्रकृत्यर्थनियमवाद्याह—तावन्न दोष इति । अन्तरेणापीति । भावकर्मणोस्तङानयोर्नैयत्येन कर्त्तर्येवोभयप्रसङ्गात् । उभयप्राप्तौ नियमार्थं शास्त्रं कर्त्तर्येव पर्यवस्यतीति भावः । भाष्ये—नार्थः कर्तृग्रहणेन कर्तृग्रहणाच्चैष दोष इति । तथा च प्रकृत्यर्थनियमपक्षे तदभावाच्चैष दोषः । अयं भावः—यदि कर्तृग्रहणं क्रियते तदा भिन्नविषयत्वाद्भावकर्मणोरिति परस्मैपदापवादो न भवतीति परत्वात्कर्मकर्त्तरि परस्मैपदं प्राप्नोतीति तन्निवृत्तये शेषग्रहणं कर्त्तव्यम् । यदा तु कर्तृग्रहणं न क्रियते तदा परस्मैपदे प्राप्ते भावकर्मणोरित्यारभ्यमाणं येन नाप्राप्तिन्यायेन शेषादित्यस्याऽपवाद इति भावकर्मणोरित्येतद्विषये शेषादिति न प्रवर्तत इति कर्मकर्त्तरि परस्मैपदनिवृत्तये शेषग्रहणं न कर्त्तव्यमिति । शेषदः स्वाशयमाह—प्रत्ययनियमे तर्हीति । द्वितीय'कर्तृग्रहणाच्चे'त्यनेन,—शेषवानेव प्रत्ययनियमस्तत्करणात्कर्मकर्त्तर्यतिव्याप्तेश्चेति सूचितम् । तत्राह—परस्तादिति । इदानीं प्रकृत्यर्थनियमवादी स्वपक्षे आपादितशेषग्रहणकर्त्तव्यत्वनिराकरणद्वारा प्रत्ययनियमे तत्करणप्रयुक्तगौरवमाह—प्रकृत्यर्थनियमे इत्यादिना । शेषादिति पञ्चम्यन्तमित्यर्थः । सिद्धे इति । 'तिबादिसूत्रेणे'ति शेषः । एवं च प्रकृत्यर्थनियमपक्ष एव ज्यायानिति स्थितम् । कर्तृग्रहणं शेषग्रहणं च कुर्वतः पाणिनेः प्रत्ययनियमपक्षे एव तात्पर्यमिति तत्पक्षेऽपि कर्मकर्त्तर्यतिव्याप्तिनिरासायं पृच्छति भाष्ये—तत्तर्हि प्रत्ययेति । सप्तम्यन्तमित्यर्थः । ततः कर्त्तरीति । वाक्ये भावकर्मणोरित्यनुवृत्तं कर्तुर्विशेषणमिति भावः । ननु प्रत्यासत्त्या तद्धात्वर्थनिरूपित-

[†] कर्तरि कर्मव्यतिहारे १. ३. १४.

'कर्तरि' । कर्तरि चात्मनेपदं भवति भावकर्मणोः । ततः 'कर्मव्यतिहारे' । कर्तरीत्येव । 'भावकर्मणो'रिति निवृत्तम् ।

यथैव तर्हि कर्मणि कर्तरि भवति, एवं भावेऽपि कर्तरि प्राप्नोति—'एति[1] जीवन्तमानन्दः'‡ 'नास्य किंचिद्रुजती'ति× ।। द्वितीयो योगविभागः करिष्यते+ । 'अनुदात्तङित आत्मनेपदम्' ततो 'भावे' । ततः 'कर्मणि' । कर्मणि चात्मनेपदं भवति । ततः 'कर्तरि' । कर्तरि चात्मनेपदं भवति । कर्मणीत्यनुवर्तते, भाव इति निवृत्तम् । ततः 'कर्मव्यतिहारे' । कर्तरीत्येव, कर्मणीति निवृत्तम् ।

प्र०-मिति । सिद्धे परस्मैपदे पुनर्विधानमात्मनेपदनिवृत्त्यर्थं सम्पद्यत इत्यर्थः । नास्य किंचिदिति । पीडारूपं भावस्वभावं वस्त्वित्यर्थः । यदि तर्हि कर्मणि कर्तर्यात्मनेपदं भवति 'हन्यमानो हन्ती'त्यत्र प्राप्नोति । नैष दोषः । प्रत्यासत्त्यैकधातुविषयं कर्मकर्तृत्वं विज्ञायते । यस्य स्वाश्रयं कर्तृत्वं कर्मशास्त्रातिदेशाच्चौपचारिकं कर्मत्वं तत्रैव भवति ।

उ०—कर्मकर्तृत्ववत्तद्धात्वर्थभावकर्तृत्वमेव ग्राह्यम्, एवं च 'एति जीवन्तमानन्द' इत्यत्र कथं दोष इति चेन्न । भावांशे प्रत्यासत्त्याश्रयणस्याऽशक्यत्वात् । तदाह—पीडारूपमिति । प्रत्यासत्त्येति । अत्र तु हन्तिभेद इत्यर्थः । तद्धात्वर्थनिरूपितकर्मत्वस्यैव कर्मवद्भावेनाऽतिदेशादिति भावः । व्यवहित इति । एवं चानन्तरस्येतिन्यायेन कर्तरीति योगविभागः शेषात्कर्तरीत्यस्यैव बाधको न त्व'नुपराभ्या'मित्यस्येति भाव । कर्तरीति योगविभागेनानुपराभ्यामित्यस्याऽबाधे युक्त्यन्तरप्याह—कक्षान्तरेति । प्रथमं सामान्यतस्तिबादिप्राप्तिः, ततः कर्मवद्भावाद्भावकर्मणोरिति, ततः परत्वाच्छेषादिति प्राप्तं, कर्तृगामिक्रियाफलाऽभावेनाप्यपि शेषत्वात्, ततो योगविभागादात्मनेपदं प्राप्तं, ततोऽनुपराभ्यामिति, ततश्चोत्तरकक्षाभावित्वाद्योगविभागस्याऽपि तद्बाधकमिति न कर्तरीति योगविभागेन तद्बाधनमिति भावः । आत्मनेपदापवादत्वाच्चेति । परत्वेन योगविभागबाधकस्वरितञित इति प्राप्तेरित्यर्थः । एवं च बाधकाऽपवादत्वाच्चाऽस्य तद्बाध्यत्वमिति भावः । प्राप्तिमात्रमिति । बाध्यसामान्यचिन्तयेति भावः । भाष्ये परा प्राप्तिरप्रतिषिद्धेति । अबाधितेत्यर्थः । ननु 'इय'मित्यनेन पूर्वप्रक्रान्तत्वाद्योगविभागरूपाया एव परामर्शः स्यात्, स चायुक्तः उक्तरीत्या बाध्यबाधकभावस्य वैपरीत्यापत्तेरत इयमित्यनेन शेषादिति प्राप्तिर्ग्राह्या, तत्र च बाधकत्वमनुपपन्नमत आह—पूर्वविप्रतिषेधेनेति । तदेवाह—शेषादित्यस्यावकाश इति । एवं च तृतीयकक्षायामेव

१—"कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥६॥"

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकाण्डे ३४ तमे सर्गे हनुमन्तं प्रति सीतोक्तिः ।

‡ भावे ३. ३. १८ "अस्त्यत्रानन्दो भावः कर्त्ता" इति न्यासे (१।३।५४) श्रीजिनेन्द्रबुद्धिपादः ।

× रुजार्थानां भाववचनानामज्वरेः २. ३. ५४. + भावकर्मणोः १. ३. १३.

एवमपि शेषग्रहणं कर्तव्य'मनुपराभ्यां कृञः' [ १. ३. ७९ ] इत्येवमर्थम्। इह मा भूत्—अनुक्रियते स्वयमेव, पराक्रियते स्वयमेव। ननु चैतदपि योगविभागादेव सिद्धम्। न सिध्यति। अनन्तरा या प्राप्तिः सा योगविभागेन शक्या बाधितुम्। कुत एतत्? 'अन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति। परा प्राप्तिरप्रतिषिद्धा तया प्राप्नोति। ननु चेयं प्राप्तिः परां प्राप्तिं बाधते। नोत्सहते प्रतिषिद्धा सती बाधितुम्।

एवं तर्हि 'कर्तरि कर्मव्यतिहारे' [ १. ३. १४ ] इत्यत्र कर्तृग्रहणं प्रत्याख्यायते। तत्प्रकृतमुत्तरत्राऽनुवर्तिष्यते—'शेषात्कर्तरि कर्तरी'ति†। किमर्थमिदं—'कर्तरि कर्तरी'ति? 'कर्तैव यः कर्ता तत्र यथा स्यात्, कर्ता

प्र०–अनुपराभ्यां कृञ इत्येवमर्थमिति। एष हि योगो व्यवहितः। कक्षान्तरप्राप्तत्वादात्मनेपदाऽपवादत्वाच्च बलवानिति न शक्यते योगविभागेन बाधितुम्। ननु चैतदपीति। प्राप्तिमात्रं योगविभागेन बाध्यते। ननु चेयमिति। पूर्वविप्रतिषेधेनेति भावः। शेषादित्यस्यावकाशो—याति वातीति। अनुपराभ्यामित्यस्याऽवकाशः—अशेषः—कर्त्रभिप्रायक्रियाफलविषयः—अनुकरोतीति। कर्मकर्त्रोरुभयप्रसङ्गे पूर्वविप्रतिषेधेन शेषादिति प्राप्तिर्भवति। साऽपि योगविभागेन बाध्यते। नोत्सहते इति। शेषादिति प्राप्तिर्योगविभागेनापवादेन कर्मकर्तृविषयान्तरं नीता नोत्सहते परां प्राप्तिं बाधितुमित्यर्थः। अथवा—इयं योगविभागप्राप्तिरविशेषादनुपराभ्यामित्येतामपि प्राप्तिं बाधिष्यत इत्यर्थः। नोत्सहत इति। अपवादापवादत्वादनुपराभ्यामित्यनया प्राप्त्या प्रतिषिद्धा नोत्सहते तामेव बाधितुमित्यर्थः। कर्तैव यः कर्तेति। यस्य व्यप-

उ०–शेषादित्यनेनानुपराभ्यामित्यस्य पूर्वविप्रतिषेधेन बाधे चतुर्थकक्ष्यायां योगविभागप्राप्त्या शेषादिति बाध्यते। न च पुनरनुपराभ्यामित्यस्य प्राप्तिः, सकृद्गतिन्यायादिति भावस्तदाह—सापि योगविभागेनेति। शेषादितीति। उत्सर्गापवादयोरेकवाक्यतयाऽपवादविषये उत्सर्गाऽप्रसक्तेरिति भावः। परां प्राप्तिमिति। कर्मकर्तृविषयामनुपराभ्यामिति प्राप्तिमित्यर्थः। भाष्ये प्रतिषिद्धेत्यस्य बाधितेत्यर्थः। पूर्वविप्रतिषेधारम्भे गौरवात्। इयमित्यनेन योगविभागप्राप्तिरेव परामृश्यत इत्याह—अथवेति। बाध्यसामान्यचिन्तयेति भावः। अपवादाऽपवादत्वादिति। पूर्वमपवादपदं बाधकपरं, तत्र योगविभागस्य परत्वाद्बाधकं 'स्वरितञित' इति, तदपवादत्वादित्यर्थः। क्वचित्त्वपवादत्वादित्येव पाठस्तदापि तद्बाधकत्वोपलक्षकं, परत्वाद्धि योगविभागस्यानुपराभ्यामिति बाधकम्। भाष्येपि प्रतिषिद्धेत्यस्य परत्वाद्बाधितेत्यर्थः। भाष्ये—प्रत्याख्यायते इति। वर्तमानसामीप्ये लट्। कर्मकर्तरि

१–अनुपराभ्यां कृञः १. ३. ७९ इत्येवमात्मिका। † शेषात् कर्तरि परस्मैपदम् १. ३. ७८.

चाऽन्यश्च यः कर्ता तत्र मा भू'दिति। ततो'ऽनुपराभ्यां कृञः'। कर्तरि कर्तरी'त्येव ॥१२॥

### कर्तरि कर्मव्यतिहारे ॥ १ । ३ । १४ ॥

क्रियाव्यतिहार इति वक्तव्यम्। कर्मव्यतिहार इत्युच्यमान इहापि प्रसज्येत—'देवदत्तस्य धान्यं व्यतिलुनन्ती'ति, इह च न स्यात्—व्यतिलुनते व्यतिपुनत इति।

तत्तर्हि वक्तव्यम्? न वक्तव्यम्। क्रियां हि लोके कर्मेत्युपचरन्ति। 'कां क्रियां करिष्यसि'। 'किं कर्म करिष्यसी'ति॥ एवमपि कर्तव्यम्। 'कृत्रिमाऽकृत्रिमयोः कृत्रिमे संप्रत्ययो भवति'॥ क्रियाऽपि कृत्रिमं कर्म। न सिद्धयति। 'कर्तुरी-

प्र०—देशान्तरं नास्तीत्यर्थः। यद्येवमसिश्छिनत्तीति करणकर्तरि न प्राप्नोति। नैष दोषः। कर्त्रवस्थायां करणत्वाऽभावात्। 'भिद्यते कुसूलः स्वयमेवे'त्यत्र तु स्वाश्रयं कर्तृत्वमातिदेशिकं तु कर्मत्वमिति न भवति परस्मैपदम्॥१२॥

कर्तरि। क्रियाव्यतिहारे इति वक्तव्यमिति। प्रत्यासन्नत्वात्कृत्रिमस्यैव साधनकर्मणो ग्रहणं प्राप्नोति। साधनकर्मणि च धातोर्वृत्त्यसम्भवाद्धात्वर्थस्य तद्विषयत्वं विज्ञायेत। देवदत्तस्य धान्यमिति। देवदत्तस्वामिकं धान्यं लवनेन स्वीकुर्वन्तीत्यर्थः। क्रियाणां साध्यैकस्वभावानां कथं व्यतिहार इति चेत्, योग्यतावशादस्येयं क्रिया साध्या, अस्य इदं साधनमिति निर्ज्ञाते साध्यसाधनभावे यो व्यत्यासः स क्रियाव्यतिहारः। परस्परकरणमपि क्वचित् क्रियाव्यतिहारः—यथा सम्प्रहरन्ते राजान इति। अत्रैकैव क्रिया सञ्चारिणीव लक्ष्यते। क्रियामिति। लौकिकाश्चाऽर्था इहानूद्यन्ते।

उ०—वस्तुतः कर्मत्वाऽभावात्पुनः कर्तृग्रहणेऽपि नेष्टसिद्धिरत आह—व्यपदेशान्तरमिति। भाष्ये—कर्ता चान्यश्चेति। कर्तृव्यवहारवान्कर्मव्यवहारवांश्चेत्यर्थः॥१२॥

कर्तरि कर्म। ननु क्रियावचनस्यैव कर्मशब्दस्य लोकप्रसिद्धत्वाद्धात्वन्वयं साक्षात्सम्बन्धकाभावेन तस्यैव ग्रहणं भविष्यतीत्यत आह—प्रत्यासन्नत्वादिति। लोकप्रसिद्ध्यपेक्षया शास्त्रप्रसिद्धिरेव बलवती, प्रकरणादिति भावः। साधनकर्मणि—ईप्सिततमे। तद्विषयत्वमिति। कर्मव्यतिहारविषयार्थकाद्धातोरित्यर्थ इति भावः। ननु देवदत्तस्वामिकधान्यस्याऽन्येन लवनेपि तत्स्वत्वानुत्पत्तेर्विनिमयाऽभावात्कथमत्र प्राप्तिरत आह—स्वीकुर्वन्तीत्यर्थ इति। स्वीकारपर्यन्तं धातोर्लक्षणेति भावः। क्रियाऽत्र कर्मणः स्वत्वविनिमय एव कर्मविनिमय इति बोध्यम्। क्रियाणामिति। स्थिरेषु द्रव्येष्वन्यसंबन्धिनोऽन्यसंबन्धरूपव्यति-

१—'अपि' क्वचिन्न।

प्सिततमं कर्म' [१.४.४६] इत्युच्यते, कथं च क्रिया नाम क्रियये प्सिततमा स्यात्? क्रियाऽपि क्रियये प्सिततमा भवति। कया क्रियया? संपश्यतिक्रियया प्रार्थयतिक्रिययाऽध्यवस्यतिक्रियया वा। इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुद्ध्या तावत्कंचिदर्थं संपश्यति, संदृष्टे प्रार्थना, प्रार्थितेऽध्यवसायो आरम्भः, आरम्भे निर्वृत्तिर्निर्वृत्तौ फलावाप्तिः। एवं क्रियाऽपि कृत्रिमं कर्म।

एवमप्युभयोः कृत्रिमयोरुभयगतिः प्रसज्येत। तस्मात्क्रियाव्यतिहार इति वक्तव्यम्॥ न वक्तव्यम्। इह 'कर्तरि व्यतिहारे' इतीयता सिद्धम्। सोयमेवं सिद्धे सति यत्कर्मग्रहणं करोति तस्यैतत्प्रयोजनं—'क्रियाव्यतिहारे यथा स्यात्कर्मव्यतिहारे मा भू'दिति।

प्र०- कथं च क्रियेति। द्वयोरपि साध्यत्वात्परस्पराऽसम्बन्धं मत्वा प्रश्नः। क्रियापीति। भोक्तुमिच्छति भोक्तुं जानातीति दर्शनात्। कया क्रिययेति। क्रियान्तरवाचिप्रयोगाऽभावात्प्रश्नः। संपश्यतिक्रिययेति। सन्दर्शनादीनामव्यभिचारात्प्रतीयमानत्वात्प्रतीयमानक्रियापेक्षया च 'प्रविश पिण्डी'मित्यादौ कर्मादिभावदर्शनात्। इह कर्तरीति। क्रियायाः साध्यत्वात्प्राधान्यात्क्रिययाप्तुमिष्टतमत्वात्तादर्थ्येन

उ०-हारसंभवेपि क्षणस्थायिक्रियासु तदसंभव इति भावः। योग्यतेति। नाऽन्यसंबन्धिनोऽन्यसंबन्धित्व सः, किं त्वन्यदीयत्वेन प्रसक्ताऽन्यसंबन्ध इति भावः। एवं च साधनव्यत्यास एव क्रियाव्यत्यास इति तात्पर्यम्। नन्वेवं स्वस्वक्रियाया एव स्वेन करणात्संप्रहरन्त इत्यत्र व्यतीहाराऽभावेनाऽऽत्मनेपदं न स्यादत आह—परस्परेति। परस्परसंबन्धि करणमित्यर्थः। संबन्धश्च कर्मकरणसंप्रदानाऽपादानादिलक्षणो बोध्यः। प्रायेण व्यती अस्य द्योतकौ। क्वचित्समपि। यथा 'संप्रहरन्ते' इत्यत्र। क्वचित्तु प्रकरणादिकमपि तथा बोध्यम्। नन्वेवमप्येकक्रियानिरूपितकारकशक्तिव्यत्यासो नोपपादितः, प्रहाराणां भिन्नभिन्नत्वादित्यत आह—अत्रेति। साधनभेदात्क्रियाभेदावश्यम्भावेन सर्वत्र जातिकृतमेवैक्यमपेक्षणीयमिति भावः। एकधातुवाच्यत्वेन वैकत्वम्। लौकिका इति। पशुरपत्यं देवतेतिवदिति भावः। इह—शास्त्रे। तदुक्तम्—उभयगतिरिहेति। कर्मणि द्वितीयेति कृत्रिमम्। अत्र लौकिकं—क्रियारूपम्। स्पष्टं चेदं सङ्ख्यासंज्ञासूत्रे भाष्ये। इह तु कृत्रिमाकृत्रिमन्यायमेवाभ्युपेत्याह—क्रियापि कृत्रिममिति। ननु द्वयोरपि क्रिययोः 'पश्य मृगो धावती'त्यादौ संबन्धो दृश्यत इत्यत आह—मत्वा प्रश्न इति। भोक्तुमिच्छतीति। अव्ययकृत्वादयमसत्त्वभूतो भाव इति भावः। 'भोजनमिच्छती'त्यादि क्रमेणार्थः। ननु क्रियाया अपि जन्यत्वेन किंचित्क्रियासाध्यत्वनिश्चये किमुच्यते 'कये'त्यत आह—क्रियान्तरेति। भाष्ये 'संपश्यतिक्रियये'त्यादि। दर्शनक्रियाजन्यं प्रार्थनं तज्जन्याध्यवसायजन्यारम्भेणेत्यर्थः। 'क्रियया चे'ति चपाठोऽसांप्रदायिकः। प्रेक्षापूर्वकारी—विचारपूर्वं क्रियाकर्ता, स बुद्ध्या—बुद्धिवृत्त्या, तावत्—प्रथमं, कंचिदर्थं—फलरूपं पश्यति। फलविषयसंकल्पोऽत्र दर्शनम्। तज्जन्यः फलोपाय-

अथ कर्तृग्रहणं किमर्थम् ?

**कर्मव्यतिहारादिषु कर्तृग्रहणं भावकर्मनिवृत्त्यर्थम् ॥ १ ॥**

कर्मव्यतिहारादिषु कर्तृग्रहणं क्रियते, भावकर्मणोरनेनाऽऽत्मनेपदं† मा भूदिति ।

**इतरथा हि तत्र प्रतिषेधे भावकर्मणोः प्रतिषेधः ॥ २ ॥**

अक्रियमाणे कर्तृग्रहणे भावकर्मणोरप्यनेनात्मनेपदं प्रसज्येत । तत्र को दोषः ? 'तत्र प्रतिषेधे भावकर्मणोः प्रतिषेधः' । तत्र प्रतिषेधे‡ भावकर्मणोरप्यनेनात्मनेपदस्य प्रतिषेधः प्रसज्येत—व्यतिगम्यन्ते ग्रामाः, व्यतिहन्यन्ते दस्यव इति ।

**न वाऽनन्तरस्य प्रतिषेधात् ॥ ३ ॥**

न वैष दोषः । किं कारणम् ? 'अनन्तरस्य प्रतिषेधात्' । अनन्तरं यदात्मनेपदविधानं तस्य प्रतिषेधात् । कुत एतत् ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते । नोत्सहते प्रतिषिद्धा सती बाधितुम् । उत्तरार्थं तर्हि कर्तृग्रहणं कर्तव्यम् । न कर्तव्यम् । क्रियते तत्रैव 'शेषात्कर्तरि परस्मैपदम्' [१.३.७८] इति । द्वितीयं कर्तृग्रहणं कर्तव्यम् । किं प्रयोजनम् ? 'कर्तैव यः कर्ता तत्र यथा स्यात्, कर्ता चान्यश्च यः कर्ता तत्र मा भू'दिति ॥१४॥

प्र०–क्रियाप्रवर्तनात्कर्मणोपि प्राधान्यादुभयव्यतिहारे लब्धे कर्मग्रहणात् क्रियाव्यतिहारोऽयं गृह्यते, क्रियाया धातुवाच्यत्वादन्तरङ्गत्वात् । तत्र प्रतिषेध इति । कर्मव्यतिहारे 'न गतिहिंसार्थेभ्य' इत्यनेन प्रतिषेध इत्यर्थः ॥१४॥

उ०–विषयोऽभिलाषः प्रार्थना । तज्जन्यः क्रियाविशेषस्य फलसाधनत्वनिश्चयोऽध्यवसायः । अभिलाषे सति तन्निश्चयकरणात् । तज्जन्या मानसी प्रवृत्तिरारम्भः । तज्जन्या क्रियानिर्वृत्तिः । ततः फलाऽवाप्तिरित्यर्थः । 'फलावाप्ति'रित्यनेन दर्शनं फलविषयकमिति सूचितम् । सप्तमीभिस्तृतीयाभिश्च पूर्वपूर्वस्योत्तरकारणता बोधिता । तत्रारम्भव्याप्यमानत्वेन प्रकृतक्रियायाः कर्मत्वम् । अव्यभिचारादिति । स चोक्तविभक्तिभिर्भाष्ये दर्शितः । ननु कर्मग्रहणाऽभावे करणादिव्यतीहारोपि गृह्येतेत्यत आह—क्रियाया इति । साध्यत्वेन प्रतीयमानत्वाच्छाब्दं प्राधान्यं क्रियायाः । क्रियोद्देश्यत्वलक्षणमार्थं प्राधान्यं च कर्मकारकस्यैवेति तयोरेव ग्रहणं न करणादेरिति भावः । कर्मग्रहणेन क्रियामात्रग्रहणे उपायमाह—क्रियाया इति । कारकपरत्वे कर्मेति कर्मणि प्रत्ययः कार्यः, क्रियापरत्वे तु भावे । भावश्चाऽन्तरङ्ग इति भावः । भाष्ये—कर्मव्यतिहारादिष्विति । आदिग्रहणं शेषात्कर्तरीत्यतः प्रागनुवृत्तावपि फलाऽभावप्रतिपादनार्थम् । भावकर्मणोरप्यनेनेति । 'विहितस्ये'ति शेषः ॥१४॥

† भावकर्मणोः १. ३. १३ ‡ न गतिहिंसार्थेभ्यः १. ३. १५.

## न गतिहिंसार्थेभ्यः ॥ १ । ३ । १५ ॥

### प्रतिषेधे हसादीनामुपसंख्यानम् ॥ १ ॥

प्रतिषेधे हसादीनामुपसंख्यानं कर्तव्यम् । व्यतिहसन्ति । व्यतिजल्पन्ति । व्यतिपठन्ति ।

### हरिवह्योरप्रतिषेधः ॥ २ ॥

हरिवह्योरप्रतिषेधो भवतीति वक्तव्यम् । संप्रहरन्ते राजानः । संविवहन्ते गर्गैरिति ॥ न वहिर्गत्यर्थः । देशान्तरप्रापणक्रियोऽत्र वहिः ॥१५॥

प्र०— न गति । हसादीनामिति । हसिप्रकाराणां शब्दक्रियाणामित्यर्थः । हरिवह्योरिति । हरतेर्हिंसार्थत्वाद्वहतेर्गत्यर्थत्वात्प्राप्तिः । 'ततः संप्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ' इत्यत्र व्यतिहारो न विवक्षित, किं तर्हि, योत्स्यमानावित्येतावद्विवक्षितम् । देशान्तरप्रापणक्रिय इति । 'भारं वहती'त्यादौ देशान्तरप्राप्त्युपसर्जनप्रापणमस्य वाच्यम् । तत्र तु गतिर्नान्तरीयकत्वात्प्रतीयते न त्वसौ धात्वर्थः । अस्यैव न्यायसिद्धार्थस्यानुवादकमर्थग्रहणम् । गर्गाणां तु प्रापणं कन्याद्वारकमिति वहेर्गत्यर्थत्वाभावः ॥१५॥

उ०— न गति । 'हसादीना'मित्यादिशब्दस्य व्यवस्थार्थत्वे हसेरुत्तरेषां धातुपाठपठितानां ग्रहणं स्यादत आह—हसीति । व्यतिपठन्तीतिभाष्योदाहरणादाह—शब्दक्रियाणामिति । अशब्दहासे भवति नवेति बहुदर्शिनो विचारयन्तु । 'हवह्यो'रित्येव पाठः[1] । 'हरिवह्यो'रितिपाठे इत एव निर्देशादिकः किरवेपि गुणः । कृतगुणानुकरणाद्वा इगिति कल्प्यम् । योत्स्येति । संप्रहारशब्दस्य युद्धेऽपि रूढत्वादिति भावः । वार्तिकस्थवहिग्रहणं प्रत्याचष्टे भाष्ये—न वहिरित्यादिना । नान्तरीयकत्वादिति । 'ग्रामं प्राप्त' इत्यादौ देशान्तरप्राप्तेर्गतिं विनाऽनुपपत्तेरिति भावः । प्राप्तिस्तु संबन्धमात्रं न संयोग एव, देशान्तरस्थेपि 'भूरनेन प्राप्ते'ति व्यवहारात् । 'ग्रामं प्राप्तवा'नित्यादौ संयोगमूलकाधाराधेयभावः प्राप्तिः । कश्चित्तत्र[2] स्थितिरेव प्राप्तिः । 'द्वितीयाश्रिते'त्युदाहरणे 'सुखप्राप्त'इत्यादा'वादिकर्मणि क्तः कर्त्तरि चे'ति कर्त्तरि क्तो बोध्यः । नान्तरीयकतया प्रतीयमानस्यापि तदर्थत्वाभिमानेन वार्तिकारम्भः । तत्रैव मानमाह—अस्यैवेति । अन्यथा 'न गतिहिंसयोः' इत्येव वदेत् । गतिहिंसयोर्वं समानेभ्यो धातुभ्य इत्यर्थं इति भावः । भाष्योक्तोदाहरणेऽपि गत्यर्थत्वाऽभावं दर्शयति—गर्गाणां त्विति । प्रापणं—संबन्धः । कन्याद्वारकमिति । कन्याप्राप्तिफलकपाणिग्रहणद्वारकसंबन्धो विवाह इत्यर्थः । 'गर्गै'रिति तृतीया तु सहार्थे बोध्या । गर्गैः सह कन्याद्वारकम् । संबन्धं प्राप्नुवन्तीत्यर्थः । भाष्ये—देशान्तरग्रहणं पलक्षणमिति तात्पर्यम् ॥१५॥

---

१–'हवह्योरित्येव पाठः' इति नागेशभट्टः । २–क्वचिन्न ।

## इतरेतरान्योन्योपपदाच्च ॥ १ । ३ । १६ ॥

## परस्परोपपदाच्च ॥ १ ॥

परस्परोपपदाच्चेति वक्तव्यम् । परस्परस्य व्यतिलुनन्ति । परस्परस्य व्यतिपुनन्ति ॥१६॥

## विपराभ्यां जेः ॥ १ । ३ । १९ ॥

उपसर्गग्रहणं[1] कर्तव्यम् । इह मा भूत्—पराजयति सेनेति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । यद्यपि तावदयं पराशब्दो दृष्टापचार उपसर्गश्चाऽनुपसर्गश्च, अयं तु खलु विशब्दोऽदृष्टापचार उपसर्ग एव । तस्यास्य

प्र०— इतरेतरा । लौकिकशब्दव्यवहारे लाघवानादरादितरेतरादिशब्दा उपसर्गाश्च कर्मव्यतिहारद्योतनाय प्रयुज्यन्ते ॥१६॥

विपराभ्यां । विशब्द इति । पक्षिवाची तु यो विशब्दस्तस्य नपुंसकत्वाऽभावात्पुंसि विभक्त्या व्यवधानाद्वेरनन्तरो जयतिर्न सम्भवति । 'बहुवि जयति वन'मित्यत्र तु जहत्स्वार्थायां वृत्तौ वेरानर्थक्यादिह चाऽर्थवतो ग्रहणादजहत्स्वार्थायामपि तदर्थस्योपसर्जनत्वादग्रहणम् । संबुद्ध्यन्तं तु वे इति रूपान्तरयुक्तत्वान्न गृह्यते । एकदेशविकृतस्याऽनन्यत्वाद्विशब्द एवायमिति चेत् । विरित्यस्य विभक्त्यन्तस्य 'वे' इति विकारो, न तु विशब्दस्येत्यदोषः । 'वी जयत' इत्यत्र एकादेशस्य पूर्वं प्रत्यन्तवद्भावाद्विशब्दात्परो जयतिः सम्भवत्येवेति चेत् । पूर्वस्य कार्यं कर्तव्येऽन्तव-

उ०— इतरेतरा । नन्वितरेतरशब्देनैव कर्मव्यतिहारस्य द्योतितत्वादुक्तार्थानामितिन्यायेनाऽत्रात्मनेपदाऽप्रसक्तिरत आह—लौकिक इति । लाघवादरानादरयोः प्रयोगानुसार एव बीजमिति भावः । 'उपपद'शब्दश्चाऽत्र यौगिको न तु रूढः ॥ १६ ॥

विपराभ्यां जेः । भाष्ये—दृष्टापचार इति । दृष्टव्यभिचारो, दृष्टोपसर्गत्वाऽभाववानिति यावत् । पक्षिवाचकविशब्दस्यानुपसर्गस्यापि सत्त्वादाह—पक्षीति । इह चेति । उपसर्गस्तु द्योत्यार्थेनाऽर्थवानेवेति भावः । इदं चिन्त्यम् । तत्पक्षे नीतपूर्विकाऽर्थवत्त्वस्यैव ग्रहणात् । शुद्धरूढातिरिक्ते जहत्स्वार्थत्वाऽभावाच्च । विभक्त्यन्तस्येति । संबुद्धिगुणस्य विभक्त्युत्पत्त्यनन्तरं प्रवृत्तेरित्यभिमानः । ननु विभक्त्युत्पत्त्यनन्तरं गुणप्रवृत्तावपि विशब्दास्यवर्णावच्छेदेन विकारसत्त्वात्तस्याप्येकदेशविकृतत्वमस्त्येवेति चेच्चिन्त्यमेवैतत् । पूर्वस्य कार्ये इति । चिन्त्यमिदम् । हे ज्ञानेत्यादौ संबुद्धिलोपेऽमि पूर्वस्याऽन्तवद्भावाऽनापत्तेः, सर्वासामित्यत्र सुडनापत्तेश्च । भाष्यं त्वित्थं व्याख्येयं—विशब्द इत्यस्य जयतिसंबद्ध इत्यादिः । तेन जयतिसंबद्धो विशब्दोऽदृष्टापचारोऽदृष्टान्यार्थक इत्यर्थः । ईदृशप्रयोगाणां

[1] १—'विपराभ्यामित्युपसर्गग्रहण'मिति वा, 'उपसर्गग्रहण'मिति वा वार्त्तिकं केचिदधीयते ।

कोऽन्यो द्वितीयः सहायो भवितुमर्हत्यन्यदत उपसर्गात् । तद्यथा—'अस्य गोर्द्वितीयेनाऽर्थः' इति गौरेवोपादीयते नाऽश्वो न गर्दभ इति ॥१६॥

## आङो दोऽनास्यविहरणे ॥ १ । ३ । २० ॥

### आङो दोऽव्यसनक्रियस्य ॥ १ ॥

आङो दोऽव्यसनक्रियस्येति वक्तव्यम् । इहापि यथा स्यात्—विपादिकां व्याददाति ।

---

प्र०-द्वावः । न चाऽत्र पूर्वस्य किंचित्कार्यमित्यदोषः । अस्य गोरिति । द्वितीयशब्दो लोके प्रयुज्यमानो यदपेक्षं द्वितीयत्वं तत्तुल्यजातीय एव सम्प्रत्ययं करोति । एवमिहाऽपि विशब्दसाहचर्यात्पराशब्दोऽप्युपसर्गो गृह्यते । पक्षिवाचिनो विशब्दस्य सम्भवे तु द्वयोरपि दृष्टाऽपचारत्वात्परस्परसाहचर्यादुपसर्गग्रहणं व्याख्येयम् ॥१९॥

आङो दो । अव्यसनक्रियस्येति । व्यसनं विभागः । विकासनमित्यर्थः । केवलोऽपि विहरणशब्द उपादीयमानः पादविहरणं गमयतीत्यास्यग्रहणं सूत्रे कृतम् । केवलो व्यसनशब्दो दुःखादिषु वर्तत इति वार्तिके क्रियाग्रहणं कृतम् । आङो

---

उ०-काऽप्यदर्शनादिति । कुतोऽन्यत्वं, तदाह—अन्यदत इति । अत उपसर्गादन्यत्वमित्यर्थः । ननु पूरणप्रत्ययान्तस्य सजातीयविषयत्वेऽपि प्रकृते किमायातमत आह—द्वितीयेति । दृष्टान्तार्थः स इति भावः । यदपेक्षं द्वितीयत्वमिति । यदीयं सहायत्वमित्यर्थः । द्वितीयशब्दः सहायवाची । एवं च यथा लोकः स्वजातीयमेव सहायमुपादत्ते, एवं शब्दोपि प्रयोगे सहायं सजातीयमेवोपादत्ते न विजातीयम् । एतन्मूलिकैव 'सहचरिताऽसहचरितयोः सहचरिते संप्रत्यय' इति परिभाषा । तत्र सहचरितत्वं सदृशत्वमेवेति दिक् । संभवेत्विति । 'वी जयतः' 'वे जयसी'त्यादौ । अत्र तुना पूर्वोक्तप्रयोगाभावरूपस्तदसंभवो ध्वनितः । परस्परेति । विशब्दसाहचर्यात् पराशब्दोऽदाबन्तः प्रसिद्धो गृह्यते, तत्साहचर्याच्च विरुपसर्ग एवेति भावः । 'प्रकृतिवदनुकरण'मित्यस्याऽनित्यत्वाज्जेरित्यत्रेपदभावः ॥१९॥

आङो दो । विभाग इति । व्यसनशब्दस्य पीडायां रूढत्वेऽपि पवाते: पीडार्थकत्वाऽसंभवेन निषेधवैयर्थ्यात्स न गृह्यते इत्यर्थः । विभागशब्देन तदनुकूलव्यापारो गृह्यते । तदाह—विकासनमिति । पादविहरणमिति । इदमुपलक्षणम्, अभीन्विहरत्येत्यादौ प्रवक्तनस्य, 'विहारशय्यासनभोजनेष्वि'त्यादौ क्रीडायाश्च प्रतीतेः । अत एव 'वेः पादविहरण' इत्यत्र पादग्रहणं चारितार्थम् । दुःखादिष्विति । 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इति कोशाद् दुःखादिसंबन्धिक्रियावृत्तेरपि प्रतीतिप्रसङ्ग इति भावः । क्रियाग्रहणे तु व्यसनरूपक्रियावाचकस्यैव ग्रहणाद्विभागार्थकत्वलाभः । स्वरूपतो दुःखादिकं तु न क्रिया, नापि धात्वाच्यमिति बोध्यम् । विपादिकां व्याददातीति । विपादिकाद्वारिविभागानुकूलो व्यापार

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । इह 'आङो दोऽनास्ये'तीयता सिद्धम् । सोऽयमेवं सिद्धे सति यद्विहरणग्रहणं करोति तस्यैतत्प्रयोजनम्—'आस्यविहरणसमानक्रियादपि यथा स्यात्' । यथाजातीयका चाऽऽस्यविहरणक्रिया तथाजातीयकाऽत्रापि ।

स्वाङ्गकर्मकाच्च ॥ २ ॥

स्वाङ्गकर्मकाच्चेति वक्तव्यम् । इह मा भूत्—'व्याददते पिपीलिकाः पतङ्गस्य मुख'मिति ॥२०॥

---

प्र०-दोऽनास्य इति । आस्यसमवायिन्यां क्रियायां ददातिर्वर्तमान आस्यवृत्तिर्भवति । यथा लोमविषयहर्षणवृत्तिर्हृषिर्लोमसु वर्तत इत्युच्यते । ददातेरेवाऽऽस्ये वृत्तिसम्भवो नान्येषां दारूपाणामिति तेषामिह ग्रहणाऽभावः । यद्येवं 'स्वं मुखमादत्ते'इत्यत्रापि मुखविषयत्वादादानस्य प्रतिषेधः प्राप्नोति । नैष दोषः । आस्यसमवेतैव या क्रिया तस्यां वृत्तौ ददातिरास्ये वृत्तो भवति । ग्रहणं तु ग्राह्यग्रहीतृविषयः । अनास्य इति च पर्युदासः । आस्यानास्यसमुदायश्चास्यसदृश इति विधिरेव तत्र भवति । स्वोयमिति । आस्यग्रहणं विहरणविशेषोपलक्षणार्थमित्यसत्यप्यास्ये विहरणसद्भावान्निषेधो भवति । स्वाङ्गकर्मकादिति । स्वमङ्गं स्वाङ्गं न तु पारिभाषिकम्—'अद्रवं मूर्तिमत्स्वाङ्गम्' इति । तेन परकीयाऽऽस्यविहरणे विधिरेव भवति ॥२०॥

---

उ०-एककर्तृक इति बोध: । आस्यस्य द्रव्यत्वात्कथं तत्र धातोर्वृत्तिरत आह—आस्येति । आस्यवृत्तिविभागानुकूलव्यापारे इत्यर्थः । नन्वेवमास्यसमवेतक्रियेनरार्थवृत्तेर्दाधातोरित्यर्थे गामादाग्रहणेष्वविशेषात्सर्वदाशब्दानां ग्रहणं स्यादत आह—ददातेरेवेति । 'आङ्पूर्वस्ये'ति शेषः ।

नान्येषामिति । अनभिधानादिति भावः । एतेन शोधनखण्डनादीनामप्यास्यसमवेतक्रियात्वाऽविशेषादन्येषामपि दारूपाणां ग्रहणं प्राप्नोतीति परास्तम् । आस्यसमवेतैवेति । आस्यमात्रसमवेतफलजनकक्रियावृत्तेर्नेत्यर्थः । आस्यमात्रसमवेतफलजनकक्रियालक्षकास्यशब्देन च नञ्समासः । एवं च 'स्वं मुख'मित्यादौ न दोषः, तदर्थफलस्य संयोगस्य कर्तृकर्मोभयसमवेतत्वात् । न्याय्यत्वादाह—पर्युदास इति । तेन 'मुखविपादिके व्याददते' इत्येव । वस्तुतः प्रसज्यप्रतिषेध एव, स्वाङ्गकर्मकादित्यस्याऽन्वयसंभवात् । प्रत्युदाहरणभाष्येण तस्य तत्संबन्धस्यैव बोधनात् । नहि विधिशेषत्वे तत्प्रत्युदाहरणं संभवतीति परे । विहरणविशेषेति । विकासरूपेत्यर्थः । आस्ये इदं विहरणमित्यर्थादिति भावः । अत एव 'यथाजातीयके'-त्यादिभाष्यं सङ्गच्छते । न तु पारिभाषिकमिति । कृत्रिमत्वाद्गुरुत्वाच्च यद्यपि तस्यैव ग्रहणं न्याय्यं तथापि व्याख्यानलक्ष्यानुसाराच्चेवमेव गृह्यत इति भावः । 'स्वाङ्गकर्मका'दिति पञ्चमीनिर्देशाद्व्यस्तक्रियस्येतिषष्ठीनिर्देशाच्च सूत्रस्य 'द' इति पदं पञ्चम्यन्तं षष्ठ्यन्तं चाश्रित्येति वार्तिककारो मन्यते ॥२०॥

## क्रीडोऽनुसंपरिभ्यश्च ॥ १ । ३ । २१ ॥

उपसर्गग्रहणं कर्तव्यम् । इह मा भूत्—'अनुक्रीडति† माणवक'मिति ।

### समोऽकूजने ॥ १ ॥

समोऽकूजन इति वक्तव्यम् । इह मा भूत्—संक्रीडन्ति शकटानि ।

### आगमेः क्षमायाम् ॥ २ ॥

आगमेः क्षमायामुपसंख्यानं कर्तव्यम् । आगमयस्व तावन्माणवक ।

### शिक्षेर्जिज्ञासायाम् ॥ ३ ॥

शिक्षेर्जिज्ञासायामुपसंख्यानं कर्तव्यम् । विद्यासु शिक्षते । धनुषि शिक्षते ।

---

प्र०— क्रीडोऽनु । अनुक्रीडतीति । 'तृतीयाऽर्थे' इत्यनुः कर्मप्रवचनीयसंज्ञः । माणवकेन सह क्रीडतीत्यर्थः । एतच्च समा साहचर्याल्लभ्यते । आगमयस्वेति । सहस्व कंचित्कालं मा त्वरिष्ठा इत्यर्थः । शिक्षेरिति । केचिदाहुः—शकिः सन्नन्तो गृह्यते इति विध्यर्थमिदम् । क्रियाविषयश्च शकिः प्रयुज्यते भोक्तुं शक्नोति शयितुं शक्नोतीति प्रयोगदर्शनात् । इह तु जिज्ञासाविषयः शकिर्गृह्यते, विद्यां जिज्ञासितुं घटत इत्यर्थः । आत्मनेपदेनैव जिज्ञासाया अवगमाज्जिज्ञासितुमिति न प्रयुज्यते । अन्ये तु 'शिक्ष विद्योपादाने' इत्यस्य ग्रहणं नियमार्थं वर्णयन्ति । विधेरेव तु ज्यायस्त्वात्सनन्तशकि-

---

उ०— क्रीडोऽनुसं । कर्मप्रवचनीयेति । धात्वर्थविशेषकत्वे तु धातोरकर्मकत्वान्माणवकमिति द्वितीयाऽनापत्तिरिति भावः । आगमेरिति वार्तिके गमेर्ण्यन्तस्य निर्देश इति बोध्यम् । मा त्वरिष्ठा इति । अध्ययनाद्यर्थं कंचित्कालं क्षमस्व, मा त्वरां कुर्वित्यर्थः । शिक्षेरिति । शकेः सनि 'सनि मीमे'तीस्भावेऽभ्यासलोपे 'स्को'रिति लोपे षत्वे इक्प्रत्यये 'शिक्षे'रिति निर्देशः । नन्वेवं 'जिज्ञासाया'मित्यसङ्गतं, ज्ञानेच्छा हि तदर्थः । लक्ष्ये तु ज्ञानं शक्तौ विषयः, शक्तिः सनर्थेच्छायामिति चेन्न, ज्ञानविशिष्टायाः शक्तेरिच्छाविषयतया ज्ञानस्यापि तत्त्वाऽनपायात् । इयांस्तु विशेषः, इच्छा सनर्थः, शक्तिः प्रकृत्यर्थः, तस्य ज्ञानविषयत्वमात्मनेपदद्योत्यमिति । तदाह—केचिदिति । ननु प्रतिपदोक्तशिक्षेरेव ग्रहणं युक्तमत आह—विध्यर्थमिति । एवं च विधित्वानुरोधेनैव परिभाषात्याग इति भावः । नन्वेवं शक्तीच्छावाचकस्य शिक्षेः कथं जिज्ञासायां वृत्तिरत आह—क्रियाविषयश्चेति । एवं च जिज्ञासाविशेषणीभूतज्ञानविषयकत्वेन जिज्ञासाविषयकत्वं तस्य । 'जिज्ञासाया'मिति च विषयसप्तमीति भावः । तदाह—इहेति । जिज्ञासितुमिति । जिज्ञासाविषयज्ञानार्थशक्तौ जिज्ञासार्थत्वारोपः ।

---

१–इतः पूर्वं 'उपसर्गग्रहणम्' इति वार्तिकं केचित् पठन्ति । † तृतीयार्थे १. ४. ८५ इति कर्मप्रवचनीयसञ्ज्ञा ।

### किरतेर्हर्षजीविकाकुलायकरणेषु ॥ ४ ॥

किरतेर्हर्षजीविकाकुलायकरणेषूपसंख्यानं कर्तव्यम् । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वाऽऽश्रयार्थी ।

### हरतेर्गतताच्छील्ये ॥ ५ ॥

हरतेर्गतताच्छील्य उपसंख्यानं कर्तव्यम् । पैतृकमश्वा अनुहरन्ते । मातृकं गावोऽनुहरन्ते ।

### आशिषि नाथः ॥ ६ ॥

आशिषि नाथ उपसंख्यानं कर्तव्यम् । सर्पिषो नाथते । मधुनो नाथते ।

प्र०-ग्रहणं न्याय्यम् । किरतेरिति । विक्षेपार्थः किरतिः, हर्षादयस्तु विषयत्वेनोपात्ताः । हर्षादिष्वेव 'अपाच्चतुष्पा'दिति सुड्विधीयते । हरतेरिति । गतं—प्रकारः । पैतृकमिति । पितुरागतं प्रकारं सततं शीलयन्तीत्यर्थः । 'मातुरनुहरती'त्यत्र सादृश्यमात्रं विवक्षितम्, न तु प्रकारताच्छील्यमित्यात्मनेपदं 'तद्धितार्थे'त्यत्र भाष्यकारेण न कृतम् । आशिषि नाथ इति । आशिष्येव नाथ इति नियमार्थमिदम् । सर्पिषो

उ०-वार्तिककृता शिक्षेः सम्नन्तस्य ग्रहणमिति ज्ञापयितुं जिज्ञासाया विषयत्वेन निर्देशः कृत इति बोध्यम् । विद्याविषयज्ञानफलशक्तीच्छेति बोधः । आत्मनेपदसमभिव्याहारे सम्प्रकृतेः शकेर्ज्ञानविषयशक्तिबोधकत्वमिति तात्पर्यम् । जिज्ञासायाः—इच्छाविशेषणीभूतज्ञानस्य । विधेरेव त्विति । शिक्षेरनुदात्तेत्त्वेनात्मनेपदस्य सिद्धत्वादित्यर्थः । विषयत्वेनेति । तत्र हर्षः कारणं, जीविकाकुलायकरणे फले इति विवेकः । 'हृष्टा बाला धूलिमपकिरन्ती'त्यत्रापि स्यादत आह—हर्षादिष्वेवेति । हर्षादिपूर्वकाऽऽलेखन एवेत्यर्थः । इहाऽऽलेखनाऽभावान्न सुट् । शब्दशक्तिस्वभावात्सुड्विषय एवात्मनेपदमिति भावः । ताच्छील्यमविच्छेदेन शीलनं, तदाह—सततमिति । 'पैतृक मित्यत्र 'तत आगत' इत्यधिकारे 'ऋतठञ्' । ताच्छील्ये किम् ? रावणमनुहरति नटः । नाथतेरनुदात्तेत्त्वाद्वचनानर्थक्यमत आह—आशिष्येवेति । 'इदं भूया'दितीच्छा आशीः । तत्प्रयुक्तः परदित्सानुकूलो व्यापारो याचनेत्याशीर्याचनयोर्भेदः । अस्याऽनुदात्तेत्त्वं तु युजर्थमिति बोध्यम् । शब्दं करोतीति । स्तुत्यर्थकोऽपि गुराक्पूर्व उत्कण्ठापूर्वकशब्दमात्रे कव इति भावः । शपतिर्नामार्थः । अस्याक्रोशे, 'देवदत्तं शपती'ति निन्दतीत्यर्थः । अस्ति तत्त्वावेदनपूर्वकं तत्प्रत्यायनाय ब्राह्मणादेः कचिद्धस्तादिना साक्षात्स्पर्शरूपे, मानसस्पर्शरूपे वा शपथे, यथा—'विप्रैः शपे' 'आत्मधर्मेण शपे' इत्यादौ । तृतीया तु कर्मणोऽपि करणत्वविवक्षया । अस्ति प्रकाशने—'देवदत्ताय शपते' । कथयतीत्यर्थः । तत्र

१-वृषः । २-भक्ष्यार्थी । ३-कचिदिद'माकि नुप्रच्छयं'।'रित्यस्य पश्चाद् दृश्यते ।

**आङि नुप्रच्छयोः ॥ ७ ॥**

आङि नुप्रच्छ्योरुपसंख्यानं कर्तव्यम् । आनुते शृगालः । आपृच्छते गुरुमिति ।

**शप उपलम्भने ॥ ८ ॥**

शप उपलम्भन उपसंख्यानं कर्तव्यम् । देवदत्ताय शपते । यज्ञदत्ताय शपते ॥२१॥

**समवप्रविभ्यः स्थः ॥ १ । ३ । २२ ॥**

**आङः स्थः प्रतिज्ञाने ॥ १ ॥**

आङः स्थः प्रतिज्ञान इति वक्तव्यम् । अस्ति सकारमातिष्ठते । आगमौ गुणवृद्धी आतिष्ठते । विकारौ गुणवृद्धी आतिष्ठते ॥२२॥

**उदोऽनूर्ध्वकर्मणि ॥ १ । ३ । २४ ॥**

**उद ईहायाम् ॥ १ ॥**

उद ईहायामिति वक्तव्यम् । इह मा भूत्—उत्तिष्ठति सेनेति ॥२४॥

---

प्र०—नाथत इति । 'सर्पिर्मे भूया'दित्याशास्त इत्यर्थः । आनुत इति । उत्कठापूर्वकं शब्दं करोतीत्यर्थः । शप उपलम्भन इति । उपलम्भनं—प्रकाशनम् । देवदत्ताय शपत इति । 'श्लाघह्नु'ङिति सम्प्रदानसंज्ञा । ज्ञीप्स्यमाने विवदन्ते । केचिदाहुः—यस्मा आख्यायते स सम्प्रदानम् । य आख्यायते स इत्यन्ये ॥२१॥

उदोनू । उद ईहायामिति । ईहा विशिष्टा चेष्टा कायपरिस्पन्दात्मिका गृह्यते । उत्तिष्ठति सेनेति । उत्पद्यते जायते सेनेत्यर्थः ॥२४॥

---

उ०—स्वरितेत्त्वात्सिद्धेऽकर्त्रभिप्रायार्थमिदम् । तदपि प्रकाशनार्थ एव । तदाह—उपलम्भनं प्रकाशनमिति । यद्येवं शपतेर्ण्यन्तजानात्यर्थत्वेन द्विकर्मकत्वे 'देवदत्तं शपत' इत्यापत्तिरत आह—श्लाघह्नुङिति । ननु ज्ञापयितुमिष्टस्य संप्रदानत्वम् । ज्ञापयितुमिष्टं चाऽणौ कर्मैव न तु णौ कर्मेत्याशङ्क्याह—केचिदिति । प्रधानभूतप्रत्ययार्थकर्मण एव ग्राह्यत्वादिति भावः । य इति । प्रथमोपस्थितत्वात्प्रकृत्यर्थकर्मैव ग्राह्यमिति भावः । प्रकृते देवदत्तस्तादृश एवेत्याशयः । अत्राद्यं मतं न युक्तं, तथा हि सति 'ज्ञाप्यमान' इत्येव सिद्धे सन्नुपादानवैयर्थ्यापत्तेः । 'सत्यः शपामि यदि किञ्चिदपि स्मरामी'त्यादौ तु शपथार्थकत्वादात्मनेपदम् । काशिकादौ तूपलम्भनं शपथ इति व्याख्यातं, तच्चिन्त्यम् । उपलम्भनशब्दस्य योगेन प्रकाशनार्थकत्वात् शपथे रूढिकल्पने न मानम् । अत एव हरिणैतदुदाहरणे 'शपिर्द्विकर्मक' इति व्याख्यातम् ॥२१॥

समवप्र । अस्तिमिति । केचित्सकारमात्रं धातुं पठित्वा पिति सार्वधातुकेऽकारौ गुणवृद्धिरूपावागमावित्याहुः । विकाराविति । सस्थानेऽस्तिमासि चेत्यर्थः ॥२२॥

उदोऽनूर्ध्वे । सर्वस्यापि धात्वर्थस्येहानुविद्धत्वाद्विशिष्योपादानं व्यर्थमत आह—ईहेति । प्रत्युदाहरणे तादृशव्यापाराऽभावं दर्शयति—उत्पद्यत इति ॥२४॥

## यचि भम् ॥ १ । ४ । १८ ॥

### भसंज्ञायामुत्तरपदलोपे षषः प्रतिषेधः ॥ १ ॥

भसंज्ञायामुत्तरपदलोपे षषः प्रतिषेधो वक्तव्यः । अनुकम्पितः षडङ्गुलिः षडिकः× ।

### सिद्धमचः स्थानिवत्त्वात् ॥ २ ॥

सिद्धमेतत् । कथम् ? अचः स्थानिवद्भावाद्भसंज्ञा न भविष्यति ॥ इहापि तर्हि प्राप्नोति—वागाशीर्दत्तो वाचिक इति । वक्ष्यत्येतत्—'सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचना'दिति* । इहापि तर्हि प्राप्नोति—षडङ्गुलिः षडिक इति । वक्ष्यत्येतत्—'षषष्ठाजादिवचनात्सिद्ध'मितिं† ।

### नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् ॥ ३ ॥

नभोऽङ्गिरोमनुषां वत्युपसंख्यानं कर्तव्यम् । नभस्वत् अङ्गिरस्वत् मनुष्वत्‡ ।

प्र०— यचि भम् । षडिक इति । षडङ्गुलिशब्दादनुकम्पायां 'बह्वचो मनुष्यनाम्न' इति ठचि कृते 'ठाजादावूर्ध्वं'मिति'ङ्गुलि'शब्दस्य लोपे 'यस्येति चे'त्यकारलोपे च कृते तुल्यावधिकया भसंज्ञया प्रत्ययलक्षणेन 'सुबन्तं पद'मिति प्राप्तायाः पदसंज्ञाया बाधनाज्जश्त्वं न स्यादिति वचनम् । सिद्धमच इति । अचो लोपस्येत्यर्थः । तत्र भसंज्ञायां विधीयमानायामकारलोपस्य स्थानिवत्त्वादकारान्तमेतद्भसंज्ञां प्रतीति भिन्नावधिविषयत्वाद्भपदसंज्ञयोर्बाध्यबाधकभावाऽभावः । 'न पदान्ते'ति स्थानिवत्त्वनिषेधोऽत्र न भवति । यत्र पदान्तो विधीयते तत्रासौ निषेधः । यथा कौ स्तः कानि सन्तीति । अत्र हि वकारो यकारश्च पदान्तो विधेयः । इह तु पूर्वमेव जश्त्वं प्रवृत्तं, न त्विदानीं विधेयम् । सिद्धमिति । उत्तरपदलोपस्य हलजादेशत्वान्नास्ति स्थानिवत्त्वमिति तुल्यावधिकया भसंज्ञया पदसंज्ञा बाध्यते । मनुष्वदिति । सत्यां पदसञ्ज्ञायां रुत्वं स्यान्न तु षत्वम्,

उ०— यचि भम् । सपूर्णोत्तरपदस्य लोपविधायकाऽभावादुत्तरपदलोपे इत्यसङ्गमत आह—षडङ्गुलीति । एवं च स फलित इति भावः । जश्त्वं न स्यादिति । तत्तत्सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया पूर्वं न जश्त्वमिति भावः । ननु नाऽचः स्थानिवत्त्वं, किं तु तदादेशस्येत्यत आह—लोपस्येति । यत्र पदान्त इति । पदचरमावयव इत्यर्थः । न त्विति । उक्तरीत्या पूर्वमप्रवृत्तेरिदं चिन्त्यम् । तस्मादयमर्थः—षषष्ठाजादीतिवचनबोधितद्वितीयादच ऊर्ध्वं लोपविधायकवचनप्रवृत्तिप्रामाण्यादत्र भत्वे न स्थानिवत्त्वप्रतिषेध इति । भाष्ये—

× बह्वचो मनुष्यनाम्नष्ठज्वा; ठाजादावूर्ध्वं द्वितीयादचः ५. ३. ७८; ८३; यस्येति च ६. ४. १४८; झलां जशोऽन्ते ८. २. ३९. * ५.१.८४ वा० ४. † ५.१.८४ वा० ५.

‡ अपदान्तस्य मूर्धन्यः; आदेशप्रत्यययोः ८. ३. ५५; ५९.

### वृषण्वस्वश्वयोः ॥ ४ ॥

'वृष'णित्येतस्य वस्वश्वयोर्भसंज्ञा वक्तव्या× । वृषण्वसुः । 'वृषणश्वस्य यच्छिरः', 'वृषणश्वस्य मेने' ॥१८॥

### तसौ मत्वर्थे ॥ १ । ४ । १९ ॥

अर्थग्रहणं किमर्थं न 'तसौ मता'वित्येवोच्येत ? 'तसौ मता'वितीयत्युच्यमान इहैव स्यात्—पयस्वान् यशस्वान् । इह न स्यात्—पयस्वी यशस्वी । अर्थग्रहणे पुनः क्रियमाणे मतुपि च सिद्धं भवति, यश्चाऽन्यस्तेन समानार्थस्तस्मिंश्च ।

---

प्र०-अपदान्तस्येति वचनात् ।

वृषण्वसुरिति । पदत्वेसति 'पदान्तस्ये'ति निषेधाण्णत्वं न स्यात्, नलोपश्च प्रसज्येत । भत्वे सत्यप्य'ल्लोपोऽन' इत्यकारलोपोऽत्र न भवति । अङ्गसंज्ञाया अभावात् । 'अङ्गस्ये'ति च तत्राधिकारात् । उपसङ्ख्यानान्येतानि च्छन्दोविषयाणीत्याहुः ॥१८॥

तसौ मत्वर्थे । अर्थग्रहणमिति । 'स्यादिष्वि'ति वर्तते । तत्रैवं सम्बन्धः क्रियते—मतौ यः स्वादिर्वर्तत इति । शब्दे च वृत्त्यसंभवात्तदर्थवृत्तिर्विज्ञास्यत इति प्रश्नः । इहैव स्यादिति । मतौ स्वादाविति सामानाधिकरण्येन मुख्यकल्पनया संबन्धे संभवत्यर्थग्रहणं न लभ्यत इति भावः । पयस्वानिति । मत्वर्थीयप्रकरणेऽन्यतरस्याङ्ग्रहणानुवर्तनाद्विनिना मतुब्न बाध्यते । नहि मतुबिति । उपलक्षणस्याऽन्योपलक्षणे

---

उ०-षषष्ठेति । 'एकाक्षरपूर्वपदाना'मित्यत्र षड्भिन्नैकाक्षरेति वाच्यमित्यर्थः ।

नभोऽङ्गिर इति भाष्ये । अत्र वति'स्तेन तुल्य'मित्यादिविहितः । ननु मनुष्शब्दे सान्तत्वाऽभावेन रुत्वाऽप्राप्तेर्भत्वमनर्थकमत आह—सत्यामिति । मनेरुसिर्बाहुलकादिति भावः । ननु वार्त्तिके 'वृष'णिति णान्तश्रवणेन णान्तशब्दे भत्वं व्यर्थमत आह—पदान्तस्येति । प्रयोगस्यकृतणत्वानुकरणं तदिति भावः । अङ्गसंज्ञाया अभावादिति । अन्तर्वर्त्तिविभक्तेर्लुका लुप्तत्वाद् वसोश्च प्रत्ययत्वाऽभावादिति भावः । छन्दोविषयाणीति । भाषायामप्रयोगादिति तद्भावः ॥१८॥

तसौ म । नन्वर्थग्रहणाऽभावे मतावेव स्यान्नाऽन्यत्रेत्यत आह—स्वादिष्वितीति । मतौ य इति । सामानाधिकरण्ये हि तदनुवृत्तिर्निष्फला स्यात्, अव्यभिचारादिति भावः ।

---

× अदङ्कुल्याक्नुमुल्यवायेऽपि; पदान्तस्य ८. ४. २; १७; ( नलोपः प्रातिपदिकान्तस्य ८. २. ७ ).

यद्यर्थग्रहणं क्रियते पयस्वान् यशस्वान् अत्र न प्राप्नोति । किं कारणम् ? न हि मतुब्मत्वर्थे वर्तते । मतुबपि मत्वर्थे वर्तते । तद्यथा—'देवदत्तशालायां ब्राह्मणा आनीयन्ता'मित्युक्ते यदि देवदत्तोपि ब्राह्मणो भवति, सोऽप्यानीयते ॥१९॥

## अयस्मयादीनि च्छन्दसि ॥ १ । ४ । २० ॥

उभयसंज्ञान्यपीति वक्तव्यम् । 'स सुष्टुभा स ऋक्वता गणेन'‡ ॥२०॥

---

प्र०—चरितार्थत्वात्स्वतः कार्यं प्रति निमित्तत्वाऽवगमाऽभावात् । मतुबपीति । अस्याऽस्मिन्निति मतुपोऽर्थः । स च विप्रादीनामिव मतुपोऽपीति भावः । तद्यथेति । अयमत्रार्थः—यत्र रूपान्तरेणोपलक्षणत्वं, रूपान्तरेण च कार्ययोगः प्रतिपाद्यते तत्रोपलक्षणस्याप्युपलक्ष्यरूपसद्भावे सति कार्ययोगो भवति । तद्यथा—'देवदत्तशालायां ब्राह्मणा आनीयन्ता'मित्युक्ते सति ब्राह्मण्ये देवदत्तस्याप्यानयनं भवति । कार्यनिमित्तरूपान्तराऽभावे तु न भवत्युपलक्षणस्य कार्ययोगः । यथा 'देवदत्तशाला भिद्यता'मिति ॥१९॥

अयस्मया । आनन्तर्याद्भसंज्ञाविधानद्वारेणैव निपातनं प्राप्तमित्याह—उभयसंज्ञान्यपीति । ऋक्वतेति । पदत्वात्कुत्वं, भत्वाज्जश्त्वं न भवति । जश्त्वविधानार्थपदसंज्ञाबाधनाय भसंज्ञाप्रवर्तनात्तन्निबन्धनकार्याऽभावात् ॥२०॥

---

उ०—मुख्येति । उपरञ्जकतया विशेषणमिति भावः । नन्वसन्तत्वाद्विनिना मतुब्बाध्येतेत्यत आह—मत्वर्थीयेति । अन्योपलक्षणे—अन्यबोधने । जहल्लक्षणायामतद्गुणबहुव्रीहौ चोपलक्षणस्य कार्ययोगो न दृष्टचर इति भावः । ननूपलक्षणस्यापि कार्यान्वयेऽतिप्रसङ्गोऽत आह—अयमत्रेति । यत्र रूपान्तरेणेति । यथा दृष्टान्ते देवदत्तत्वेनोपलक्षणता, ब्राह्मणत्वेन कार्ययोगः । तथा प्रकृते मतुप्त्वेनोपलक्षणता मत्वर्थकत्वेन कार्ययोग इति भावः । रूपान्तराभावे त्विति । उपलक्ष्यतावच्छेदकरूपस्योपलक्षणेऽभावे त्वित्यर्थः । यथा शालात्वं न देवदत्ते इति भाव. ॥१९॥

अयस्मया । इत्याहेति । इत्यत आहेत्यर्थः । ननु भत्वे किं फलमत आह—जश्त्वमिति ॥२०॥

---

१—'मतुबर्थे' पा० । † चो॰ कु:; ( झलां जशोऽन्ते ). ८. २. ३०; ( ३९ ) ‡ ऋ० ४. ५०. ५.

## बहुषु बहुवचनम् ॥ १ । ४ । २१ ॥

'बहुषु बहुवचन'मित्युच्यते । केषु बहुषु ? अर्थेषु । यद्येवं वृक्षः प्लक्षः अत्रापि प्राप्नोति । बहवस्तेऽर्थाः—मूलं स्कन्धः फलं पलाशमिति ।

एवं तर्हि एकवचनं द्विवचनं बहुवचनमिति शब्दसंज्ञा एताः । येष्वर्थेषु स्वादयो विधीयन्ते तेषु बहुषु । केषु चाऽर्थेषु स्वादयो विधीयन्ते ? कर्मादिषु ?

---

प्र०- बहुषु बहु । केषु बहुष्विति । जातिवादी प्रत्यवतिष्ठते । जातेः प्रातिपदिकार्थत्वे तस्या एकत्वाद् बहुत्वाऽसम्भवात्तत्सहचरितद्रव्यगतं बहुत्वमाश्रयणीयम् । ततश्च 'वृक्ष' इत्यत्राप्यवयवगतबहुत्वसद्भावात्स्याद्बहुवचनमिति भावः । अत्रोत्तरम्—अर्थेष्विति । अस्याप्ययं भावः—द्रव्यं पदार्थः, तत्राभिधेयगतमेव बहुत्वमाश्रीयते । वृक्षशब्दस्य चाऽवयवी वाच्यो, न त्ववयवाः । आकृतिपक्षेपि प्रत्यासत्त्या तदाधारद्रव्यगतं बहुत्व माश्रीयते, न त्ववयवगतम् । 'दारा' इत्यादौ त्ववयवावयव्यभेदविवक्षायां बहुत्वमाकृत्याधारगतमेव बहुवचनवाच्यमित्यदोषः । इतरोऽगृहीताभिप्राय आह—यद्येवमिति । अर्थशब्दो भवता वस्तुपर्यायः प्रयुक्तः । मूलादीनि च बहूनि वस्तूनीति मन्यते । एवं तर्हीति । अयमर्थः—नेदं स्वातन्त्र्येण विधायकम्, किं तर्हि ? विहितानामनेन नियमः क्रियते । बहुवचनादिभिर्निष्पन्नशब्दसंज्ञाभिः सुप्तिङोऽत्र प्रत्याय्यन्ते । तेषां च शास्त्रान्तरेण स्थिते विधाने इदमारभ्यमाणं नियमाय भवति । न त्विदमेव विशिष्टार्थानुवादेन सुप्तिङोर्विधायकमित्येत'च्छब्दसंज्ञा एता' इत्यनेन प्रदर्श्यते । येष्वर्थेष्विति ।

---

उ०- बहुषु । ननु बहुष्वित्युक्तेऽस्य प्रत्ययनियमत्वात्प्रकृत्यर्थेषु बहुष्वित्यर्थः सुलभोऽत आह—जातिवादीति । अवयवगतेति । अवयवानामपि 'वृक्षे शाखे'त्यादिव्यवहाराज्जातिसहचरितत्वादिति भावः । नत्ववयवेति । तादृशपरम्पराग्रहणे मानाऽभावादिति भावः । नन्वेवं 'दारा' इत्यादावाधारगतबहुत्वाऽभावादव्याप्तिः । अवयवगततदाश्रयणं तु 'वृक्षाः' इत्यादावपि दोषोऽत आह—दारा इति । ईदृशाऽभेदोपचारेण 'वृक्षाः', इत्यादौ नाऽनिष्टापादनम्, अनभिधानादिति भावः । वस्त्विति । 'दारा' इत्याद्यनुरोधाद्वस्तुपर्याय अवश्याश्रयणीयः । एवं च 'वृक्ष' इत्यादौ दोष इति भावः । नन्वयवगतबहुत्वाश्रयेण बहुवचने प्रसञ्जिते एकवचनादीनां शब्दसंज्ञात्वकथनमसङ्गतमत आह—नेदमिति । विहितानामिति । न च सुप्तिङ्विध्येकवाक्यतया विधायकमेवेदम्, अन्योन्याश्रयपरिहाराय भाविसंज्ञाविज्ञानाश्रयणापत्तेः ।

निष्पन्नशब्दसंज्ञाभिरिति । निष्पन्नशब्दस्य संज्ञाभूतैरित्यर्थः । प्रदर्श्यत इति । नियमश्च बह्वर्गतैकत्वादिषु प्राप्तिस्तद्विषय एव, कर्मादिगतैकत्वादिषु च तेषां प्राप्तिरिति न मूलादिगतबहुत्वे तेषां प्राप्तिरिति भावः । तदाह भाष्ये—येष्वर्थेष्विति । इदं प्रोत्यपरं, पूर्व-

न वै कर्मादयो विभक्त्यर्थाः । के तर्हि ? एकत्वादयः । एकत्वादिष्वपि वै विभक्त्यर्थेष्ववश्यं कर्मादयो निमित्तत्वेनोपादेयाः—कर्मण एकत्वे, कर्मणो द्वित्वे, कर्मणो बहुत्व इति ।

स तर्हि तथा निर्देशः कर्तव्यः, न ह्यन्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देशः । इह च 'इत्येके मन्यन्ते' 'तदेके मन्यन्त' इति परत्वादेकवचनं प्राप्नोति* ॥ 'बहुषु बहुवचन'मित्येष योगः परः करिष्यते ॥ सूत्रविपर्यासः

प्र०-क्वचित्तु पाठः—'एवं तर्हि येष्वर्थेष्वि'ति । 'एकवचन'मित्यादि तु भाष्यं नास्त्येव । अयमर्थः—पञ्चकः प्रातिपदिकार्थः । तथा हि—'दधि पश्ये'त्यादौ विभक्तिश्रवणमन्तरेणापि पञ्चाऽप्यर्थाः प्रतीयन्ते स्वार्थादयः । विभक्तयस्तु क्वचिद्द्योतकत्वेनाऽपेक्ष्यन्ते । तत्रा'ऽनिदिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ती'ति सङ्ख्यायां कर्मादिषु च सिद्धा एव स्वादयः । अनेन तु नियम्यन्ते । तत्र कर्मादिशक्त्येकार्थसमवेत एव बहुत्वे बहुवचनं भवति, न त्ववयवगते ।

नैवं कर्मादय इति । 'अनभिहिते' इति सूत्रारम्भसामर्थ्यात्कर्मादीनां नैव विभक्तिवाच्यत्वमिति मन्यते । तेषां हि विभक्त्यर्थत्वे तिङ्कृत्तद्धितसमासैस्तेषूक्तेषु गतार्थत्वाद्द्वितीयादीनां प्रसङ्ग एव नास्ति, किमनभिहिताधिकारेण । एकत्वादिष्वपीति । वाक्यैकवाक्यत्वे सति महावाक्यं संपद्यते—'कर्मण्यनभिहिते यदेकत्वं तत्रैकवचन'मित्यादि । स तर्हीति । 'बहुत्वे' इत्येवमित्यर्थः । एके मन्यन्त इति । प्रातिपदिकार्थ-

उ०-वाक्योपदर्शितनियमोपपादकत्वात् । तत्र द्योत्यत्वमुपपादयति । पञ्चक इति । नन्वेवं विभक्त्युपादानं व्यर्थमत आह—विभक्तयस्त्विति । कर्मादिशक्त्येति । अनेन कर्मादिशब्देभ्यो विभक्तीनां वैधर्म्यं दर्शितम् । इतरः प्रत्यासत्त्या कर्मगतबहुत्वे बहुवचनमिति भावः । अवयवगतबहुत्वमादायाऽतिप्रसङ्ग इति मत्वाह—न वै इत्यादि भाष्ये । प्राधान्येन सूत्रे विभक्तिद्योत्यतयोक्ता इत्यर्थः । तत्रैकत्वादिषु बहुष्विति तु वक्तुमशक्यमिति भावः । ननु 'कर्मणि द्वितीये'त्याद्यनुशासनात्कथं तेषामवाच्यत्वमत आह—अनभिहितेति । अनुशासनं तु द्योतकत्वेनाऽप्युपपन्नमिति भावः । किमनभिहिताधिकारेणेति । द्योतकत्वे तु यथा प्रकृत्युक्ते भवन्ति एवं तिङादिभिरभिहितेऽपि स्युरिति तद्व्यावृत्त्यर्थमनभिहिताऽधिकार आवश्यक इति भावः । 'अनभिहितसूत्रेऽस्याऽऽदेर्ग्रन्थस्याऽत्र प्रतीके उपयोगश्चिन्त्यः । अतएव 'न वै कर्मादय' इति प्रतीकपाठोऽसांप्रदायिक इति बहवः । तदा पञ्चकप्रातिपदिकार्थपक्षोपपादकोऽयं ग्रन्थः । अत्रापि पक्षे एकत्वादीनामाश्रयाकाङ्क्षायां कर्मादीनामेव प्रत्यासत्त्या संभवेन च तत्त्वमित्यभिप्रायेणाह—भाष्ये—एकत्वादिष्वपीति । सूत्रे प्राधान्येन विभक्तिद्योत्यतयोक्तेत्यर्थः । तत्र प्रत्यासत्तिं दर्शयति—वाक्यैकेत्यादिना । कर्मण्यनभिहिते यदेकत्वमिति ।

* द्व्येकयोर्द्विवचनैकवचने १. ४. २२.

कृतो भवति। इह च 'बहुरोदनः' 'बहुः सूप' इति परत्वाद् बहुवचनं प्राप्नोति।

नैष दोषः। यत्तावदुच्यते—'न ह्यन्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देश' इति, तन्न। अन्तरेणापि भावप्रत्ययं गुणप्रधानो भवति निर्देशः। कथम्? इह कदाचिद्गुणो गुणिविशेषको भवति। तद्यथा,—'पटः शुक्ल' इति। कदाचिच्च गुणिना गुणो व्यपदिश्यते—'पटस्य शुक्ल' इति। तद्यदा तावद्गुणो गुणिविशेषको भवति 'पटः शुक्ल' इति तदा सामानाधिकरण्यं गुणगुणिनोः। तदा नान्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देशः। यदा तु गुणिना गुणो व्यपदिश्यते 'पटस्य शुक्ल' इति स्वप्रधानस्तदा गुणो भवति। तदा द्रव्ये षष्ठी। तदाऽन्तरेण भावप्रत्ययं गुणप्रधानो भवति निर्देशः।

---

प्र०-एकत्वमप्यस्ति, बहुत्वं, च 'द्व्येकयो'रित्यत्र च विशेषाऽनुपादानाद्यावान्कश्चिदेकशब्दार्थस्तस्य ग्रहणेन भाव्यम्। तत्र परत्वादेकवचनप्रसङ्गः। इह चेति। इह यदि 'द्व्येकयो'रिति योगात्परोऽयं योगः क्रियते तदा विशेषाऽभावाद्वैपुल्यरूपस्यापि बहुत्वस्य ग्रहणे सति परत्वाद्बहुवचनप्रसङ्गः। गुणिविशेषक इति। अत एव वचनादनित्यः षष्ठीसमासप्रतिषेधः। शेषषष्ठ्या वा समासः। सामानाधिकरण्यमिति। मतुब्लोपादभेदोपचाराद्वा। तदा नान्तरेणेति। गुणिवाचिनः शुक्लशब्दाद्भावप्रत्यये कृते गुणः प्रतीयते नाऽन्यथेत्यर्थः। द्रव्ये षष्ठीति। षष्ठीग्रहणं व्यतिरेकविभक्तेरुपलक्षणार्थम्।

---

उ०-एकत्वादेराश्रयाकाङ्क्षानिवृत्तये एवमेकवाक्यतेति भावः। भाष्ये—कर्मादयो निमित्तत्वेनेति। विशेषणत्वेनेत्यर्थः। न ह्यन्तरेणेति। तदर्थे भावप्रत्ययस्य साधुतया विधानेन केवलस्याऽसाधुत्वादिति भावः। नन्वस्य संख्यावाचकत्वाऽभावान्न दोषोऽत आह—द्व्येकयोरित्यत्रेति। नन्वस्य पूर्वत्वेन 'परत्वा'दित्यसङ्गतमिति मत्वाह—इह यदीति। ननु 'कर्तरि चे'त्यादिषष्ठीसमासनिषेधः स्यादत आह—अत एवेति। अनित्यत्वस्य भाष्याऽनुक्तत्वादाह—शेषेति। सामानाधिकरण्यम्—एकार्थवृत्तिता। ननु गुणगुणिनोरत्यन्तभेदात्कथं तद्वित्यत आह—मतुब्लोपादिति। अभेदोपचाराद्वेति। उपचरिताऽभेदस्योद्भूतत्वेन विवक्षणादिति भावः। गुणः प्रतीयते इति। निष्कृष्टो गुणः प्रतीयत इत्यर्थः। ननु 'द्रव्ये षष्ठी'ति भाष्यदर्शनाद्विभक्त्यन्तरस्य किमसाधुत्वम्। नेत्याह—उपलक्षणेति। 'पटे शुक्ल' इति प्रयोगात्सप्तम्यन्तस्य कर्त्राद्यन्वयद्वारैव क्रियाऽन्वय इति गुणिनो गुणव्यपदेशकत्वेऽपि सप्तमी भवतीति भावः। अत्र व्यतिरेकविभक्तिर्भावप्रधानतातात्पर्यग्राहकोपलक्षणम्। तेन 'आख्याख्याता'मित्यादिसूत्रस्थभाष्येण न विरोधः। तदान्तरेणापीति। अयं भावः—'मञ्चाः क्रोशन्ती'त्यादौ यथा मञ्चत्वस्य तत्स्थे आरोपान्मञ्चत्वेनैव तद्बोधस्तथा शुक्लगुणे तत्स्थैव भेदेनाऽऽ-

न चेह वयमेकत्वादिभिः कर्मादीन्विशेषयिष्यामः । किं तर्हि ? कर्मादिभिरेकत्वादीन्विशेषयिष्यामः । कथम् ? एकस्मिन्नेकवचनम् । कस्यैकस्मिन् ? कर्मणः । द्वयोर्द्विवचनम् । कयोर्द्वयोः ? कर्मणोः । बहुषु बहुवचनम् । केषां बहुषु ? कर्मणामिति ॥ कथं बहुषु बहुवचनमिति ? एतदेव ज्ञापयत्याचार्यो 'नानाधिकरणवाची यो बहुशब्दस्तस्येदं ग्रहणं न वैपुल्यवाचिन' इति । किमेतस्य ज्ञापने प्रयोजनम् ? यदुक्तं 'बहुरोदनः बहुः सूप इति परत्वाद्बहुवचनं प्राप्नोती'ति स दोषो न भवति ।

यदप्युच्यत—'इत्येके मन्यन्ते', 'तदेके मन्यन्त' इति परत्वादेकवचनं प्राप्नोतीति, नैष दोषः । एकशब्दोऽयं बह्वर्थः । अस्त्येव संख्यावाची । तद्यथा,—एको द्वौ बहव इति । अस्त्यसहायवाची । तद्यथा,—एकाग्नयः एकहलानि एकाकिभिः क्षुद्रकैर्जितमिति । अस्त्यन्यार्थे वर्तते । तद्यथा,—

प्र०-गुणिनो ह्याधारत्वविवक्षायां सप्तम्यपि भवति । यथैवेह 'कर्मणि या संख्ये'ति । कथमिति । बहुत्वस्यैकत्वाद्बहुष्विति भाष्यमिति प्रश्नः । एतदेवेति । आश्रयगतं बहुत्वं बहुत्वे गुणे आरोप्य निर्देशः कृतः । तस्यैतत्प्रयोजनं 'भिन्नवस्त्वाधारस्य बहुत्वस्य संख्यारूपस्य ग्रहणं यथा स्यादेकाश्रयवर्तिनो वैपुल्यरूपस्य मा भू'दिति । एकशब्दोऽयमिति । 'द्व्येकयो'रित्यत्र संख्यापदेन द्विशब्देन साहचर्यादेकशब्दस्यास्ति संख्यावाचिनो ग्रहणम् । द्वित्वैकत्वयोश्च 'द्व्येक'शब्दौ वर्तेते इति 'द्व्येकयो'रिति द्विवचनेन निर्देशः । अन्यथा बहुवचनं स्यात् । प्रसिद्ध्या च संख्येयार्थत्वमेकादीनामष्टादशान्ता-

उ०-रोपाद्गुणप्रकारक एव गुणबोधः । गुणे भेदेन गुण्यारोपश्चाहार्य इति । किं बहुना, सर्वत्र लक्षणास्थले प्रवृत्तिनिमित्तारोप आहार्य एव । भाष्ये—न चेह वयमिति । 'एकं कर्मे'त्येवमित्यर्थः । एवं च 'पटस्य शुक्ल' इतिवद्भेदनिबन्धनसंसर्गबोधकविभक्त्यैव निष्कृष्टगुणप्रतीतेरुपपन्नत्वान्नावप्रत्ययापेक्षा नास्तीति भावः । बहुत्वस्येति । षष्ठ्यन्तपदेन संबन्धिनिर्देशाद् गुणपरतयेति भावः । नन्वसाधुत्वे शङ्किते प्रयोजनकथनमसङ्गतमत आह—आश्रयगतमिति । एवमेव 'द्वयोर्द्विवचनम् । कयोर्द्वयोः ? कर्मणो'रिति भाष्ये'द्वयो'रित्यादिद्विवचनाद्युपपत्तिर्बोध्या । एवं च धर्मपरत्वेपि न द्विशब्दस्यैकवचनान्तत्वम्, किं तु दारशब्दवदारोपितसंख्यानिमित्त एव प्रत्ययस्तस्मात् । समासे तु विभक्त्यश्रवणादारोपे मानाऽभावेन 'द्व्येकयो'रिति द्विवचनम् । एवं च 'दारपती' 'अहेजसी' इत्येव साधुरिति बोध्यम् । एकाश्रयेति । एवं च वैपुल्यवाचिग्रहणे बहुवचनमनुपपन्नं स्यादिति भावः । नन्वस्त्वेके मन्यन्ते इति प्रयोगोऽन्यार्थस्य, सूत्रे तस्यापि ग्रहणं कुतो नेत्यत आह—द्व्येकयोरिति । नन्वेवं बहुवचनापत्तिरत आह—द्वित्वेति । नन्वेव'मावशतः संख्याः संख्येये' इति'संख्ययाऽव्यये'ति सूत्रस्थभाष्यसंमतमतादविरोधोऽत आह—प्रसिद्ध्या चेति । संख्यार्थकत्वं तु कानिचकमप्रसिद्धमित्या-

सधमादो द्युम्न एकास्ताः । अन्या इत्यर्थः । तयोऽन्यार्थे वर्तते तस्यैष प्रयोगः' ।

किमर्थं पुनरिदमुच्यते ?

**सुप्तिङामविशेषविधानाद् दृष्टविप्रयोगाच्च नियमार्थं वचनम् ॥१॥**

सुपोऽविशेषेण प्रातिपदिकमात्राद्विधीयन्ते* । तिङोऽविशेषेण धातुमात्राद्विधीयते† । तत्रैतस्याद्यद्यविशेषेण विधीयन्ते नैव विप्रयोगो लक्ष्यत इति । 'दृष्टविप्रयोगाच्च[3]' । दृश्यते खल्वपि विप्रयोगः । तद्यथा,—

प्र०—नामुच्यते । किमर्थमिति । लौकिकादेव प्रयोगाद्वित्वादिषु बहुवचनादीनां व्यवस्था भविष्यतीति प्रश्नः । सुप्तिङामिति । सुप्तिङ्विधानवाक्ये संख्याविशेषाऽनिर्देशाद्विशेषाऽनुपादानेन तेषां विधानमित्यर्थः । यद्यपीति । शास्त्रेऽनुपात्तोऽप्यर्थः प्रयोगादेव व्यवस्थाप्यते इत्यर्थः । सुपस्तावत्स्वार्थे विधीयमाना 'स्वार्थद्रव्यलिङ्गसंख्याकर्मादिलक्षणः पञ्चक प्रातिपदिकार्थः' इति दर्शने संख्यायां सिद्धा । संख्याविशेषाऽवगतिस्तु

उ०—शयः । लौकिकादेवेति । महासंज्ञाकरणाच्चेत्यपि बोध्यम् । द्विसाहचर्यादेकबहुशब्दावपि संज्ञाघटकौ संख्याशब्दावेवेति नाऽतिप्रसङ्गः । बहुत्वादिष्विति । प्रातिपदिकार्थबहुत्वादिष्वित्यर्थः ।

ननु स्वार्थे विहितानां कथमविशेषविधानमत आह—संख्याविशेषेति । इदमुपलक्षणं—कारकविशेषस्यापि । अत एव 'कर्मणि द्वितीये'त्यादेर्नियमत्वसिद्धिः । प्रयोगादेवेति । असति विरुद्धप्रयोगे प्रयोगाद्व्यवस्था सिध्यतीति भावः । भाष्ये 'लक्ष्यत इती'त्यन्ता 'दृष्टविप्रयोगत्वाच्चे'त्यादेरवतारणिका । ननु स्वार्थे विधानेऽपि संख्यायां विधानार्थमेतदत आह—सुप इति । स्वार्थद्रव्येति । अत्र 'स्वार्थ'शब्देन प्रवृत्तिनिमित्तं, 'द्रव्य'शब्देन विशेष्यम्, अतो गुणपरशुक्लादिशब्दे नाऽव्याप्तिः । लौकिकादिति । 'घट' इत्यादौ जातौ व्यक्तौ वेत्यादिनिर्णयवदिति भाव. । 'एव'कर्मणि द्वितीये'त्यादीनामपि नियमत्वं पञ्चकपक्ष एवेति स एव पक्षो मुख्यः । त्रिकादिपक्षस्त्वभ्युच्चय इति तत्त्वम् । नन्वेवमपि तिङ्क्ष्वनुपपत्तिः, न हि तत्प्रकृत्यर्थः संख्या वक्तुं शक्येत्यत आह—तिङोऽपीति । संख्यायुक्तयोरेव तयोरिति । तयोः संख्याश्रयत्वादिति भावः । 'पचन्ति-भवति' 'पच्यन्ते भवती'त्यादौ कर्तृकर्मणोरेकत्वादिघटकतिङर्थसंख्यायुक्तयोरभावादिदं चिन्त्यम् । तस्मादारोपिताऽनारोपित-

१—प्रकरणमिदं १. २. ६४ वा० ३; ५. १. ५२ वा० ३ व्याख्याभाष्येऽपि द्रष्टव्यम् ।
२—सविशेषेण विधानाद्' पा० । ३—'विप्रयोगदर्शनाच्च' पा० ।
* स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ४. १. २.
† तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ३. ४. ७८.

'अक्षीणि मे दर्शनीयानि' 'पादा मे सुकुमारा' इति । सुप्तिङोरविशेषविधानाद् दृष्टविप्रयोगत्वाच्च व्यतिकरः प्राप्नोति । इष्यते चाऽव्यतिकरः स्यादिति, तच्चाऽन्तरेण यत्नं न सिध्यतीति नियमार्थं वचनम् । एवमर्थमिदमुच्यते ।

अथैतस्मिन्नियमार्थे सति किं पुनरयं प्रत्ययनियमः—एकस्मिन्नेवैकवचनं, द्वयोरेव द्विवचनं, बहुष्वेव बहुवचनमिति । आहोस्विदर्थनियमः—एकस्मिन्नेकवचनमेव, द्वयोर्द्विवचनमेव, बहुषु बहुवचनमेवेति । कश्चात्र विशेषः ?

**तत्र प्रत्ययनियमेऽव्ययानां पदसंज्ञाऽभावोऽसुबन्तत्वात् ॥ २ ॥**

तत्र प्रत्ययनियमेऽव्ययानां पदसंज्ञा न प्राप्नोति—उच्चैः नीचैरिति । किं कारणम् ? असुबन्तत्वात् ।

प्र०—लोकात्सिद्धा । तिङोऽपि कर्तृकर्मणोर्विधीयमानाः संख्यायुक्तयोरेव तयोर्वाचका भविष्यन्ति स्वभावतः । संख्याविशेषः प्रयोगदर्शनादवगम्यते इति भावः । अक्षीणीति । द्वित्वेपि लोके बहुवचनं दृश्यत इत्यर्थः । विरुद्धः प्रयोगो—विप्रयोगः । तत्र प्रत्ययनियम इति । प्रत्यया विशिष्टायां संख्यायां नियता इति निःसंख्येभ्योऽव्ययेभ्य-

उ०-संख्यायुक्तक्रियाकारकभूतयोरित्युचितम् । उक्तोदाहरणयोरनारोपितैकत्ववती क्रिया । कर्तृगतसंख्यारोपस्तु न तत्र, आरोपितस्याऽन्यत्रारोपाऽभावात् । स्वभावत इति । इदं चिन्त्यम्, एवं स्वभाववादाश्रयणे 'तस्यापत्य'मित्यादेर्वैयर्थ्यापत्तिः, शास्त्रारम्भवैयर्थ्यं च, तस्मा'त्तिङोऽप्यविशेषेण धातुमात्राद्विधीयन्त'इति भाष्यात् 'संख्याविशेषाद्यनुपादानेने'त्यर्थकारप्रातिपदिकस्येव धातोरपि संख्याकारके अर्थः । 'लः कर्मणी'त्यपि नियम एव, 'वर्त्तमाने ल'डित्यादिना स्वार्थे विहितलाऽनुवादेन तत्प्रवृत्तेः । करणादि च व्यावर्त्यम् । 'पाकेन कृतं वैर'मित्यादौ तत्त्वप्रतीतेः । तिङि तु नियमेन द्योतकाऽभावात्तद्प्रीतिरित्यन्यत् । 'लः कर्मणि चे'त्यस्यापि कर्मादिवृत्तात्धातोर्लं इत्येवाऽर्थो 'वर्त्तमाने ल'डितिवत् । ध्वनितं चेदं 'स्नुक्रमो'रितिसूत्रे 'भावकर्मणो'रित्यस्य 'भावकर्मणो'रित्यस्य भावकर्मकवृत्ताद्धातोरित्यर्थं प्रदर्शयता भाष्यकारेण । संख्यायाश्च कारकस्येव क्रियायामेवान्वयस्तिङीति ल्याप्सूत्र उपपादयिष्यामः । कर्मादयः शब्दाः सुब्नियामकेषु शक्तिपराः, तिङ्संबन्धिशास्त्रेषु शक्तिमत्पराः । अतएव तिङ्द्योत्यानां प्रकृत्यर्थविशेषणता । न हि शक्तिः साक्षात्क्रियागता । एवं च सुपां तिङां च द्योतकत्वस्येव भाष्यसंमतम् । न च शत्रादिविषयलस्यापि द्योतकत्वापत्तौ तत्रापि कर्त्रादेर्विशेषणतैव स्यादिति महदनिष्टम् । तिङामसत्त्वभूतभावार्थत्वेन तत्स्थानिलस्य तदर्थकत्वेऽप्यास्यमाने शत्रमाने च

१—'योगाच्च'पा० ।

## अर्थनियमे सिद्धम् ॥ ३ ॥

अर्थनियमे सिद्धं भवति। अस्त्वर्थनियमः ॥ अथवा पुनरस्तु प्रत्ययनियमः। ननु चोक्तं—'तत्र प्रत्ययनियमेऽव्ययानां पदसंज्ञाऽभावोऽसुबन्तत्वा'दिति। नैष दोषः।

## सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्।

सुपां संख्या चैवाऽर्थः कर्मादयश्च। तथा तिङाम्।

---

प्र०—स्तेषामनुत्पादात्पदत्वाऽभावात्तन्निबन्धनरुत्वाद्यभावप्रसङ्गः। अर्थनियम इति। अर्थानियता इति तेषु वचनान्तराऽभावः। प्रत्ययास्त्वनियतत्वादव्ययेभ्योऽपि सिध्यन्तीत्यर्थः।

सुपामिति। 'कर्मणि द्वितीये'त्यादेः प्रकरणस्य 'बहुषु बहुवचन'मित्यादेश्च स्वादिसूत्रेण सहैकवाक्यता। तिङर्थं त्विह तस्माद्भेदेन सूत्रद्वयमुपात्तम्। तत्रैकस्मिन्कर्मणीत्येवं गुणगुणिनोः समानाधिकरण्येन संबन्धे सति सख्याकर्मादयश्च

---

उ०—गत इत्यादौ शानचि सत्त्वभूतभावप्रतीत्या तस्यानिलस्य तदर्थकत्वाय 'भावे' इत्यस्यावृत्त्याऽर्थद्वयबोधकत्ववत्कर्त्रांशेऽप्यावृत्त्या कर्त्रादौ वर्त्तमानात्कर्त्रादावर्थे च लकाराणां विधानेनाऽक्षतेरित्यलं विस्तरेण। भाष्ये—नियमार्थमिति। 'अक्षीणी'त्यादेरसाधुत्वमिति भावः। वाक्यभेदेन च नियमो मन्दमतेरेकवाक्यताज्ञानाऽसम्भवात्। एकवाक्यतापक्षेऽपि फलतो नियम एव, तद्विनापि तत्र सिद्धेरिति तात्पर्यम्। ननु प्रत्ययनियमेऽपि सजातीयापेक्षनियमाश्रयणादव्ययेभ्यः सिद्ध्यतीत्यत आह—प्रत्यया इति। सामान्यापेक्षनियमेऽयं दोष इति भावः। नन्वर्थनियमेऽपि प्रत्ययनियमस्य त्यागे मानाऽभावाद्दोष एवाऽत आह—प्रत्ययास्त्विति। उभयविधनियमस्यैकवाक्येनाऽलाभादित्यर्थः।

ननु प्रकरणान्तरविहितसुपां तिङां च कथमेतेऽर्था अत आह—कर्मणीति। आकाङ्क्षावशाद्वाक्यैकवाक्यतामनुभूयैव तेषां लक्ष्यसंस्कारकत्वमित्यर्थः। स्वादिसूत्रेणेति। तिङ्सूत्रस्याप्युपलक्षणम्। पदैकवाक्यतयाऽन्वये तु 'कर्मत्वाद्ययोग्यार्थकप्रातिपदिकार्थमात्रगते एकत्वे प्रथमैकवचनं सुः, कर्मशक्तिसमानाधिकरणे एकत्वे द्वितीयैकवचन'मित्यादिप्रकारेण बोधादन्यत्राऽव्ययादौ प्रासिद्धपपादयितुमशक्यैव। किं चाऽर्थनियमप्रकृतार्थापेक्षप्रत्ययनियमस्तुल्यप्रत्ययनियमेति कथोच्छेद एव। एकवचनादिशब्दे भाविसंज्ञाविज्ञानगौरवं च। अतो वाक्यैकवाक्यतैवाऽत्रैकवाक्यतापदेन विवक्षितेति दिक्। नन्वेवमत्र पाठो व्यर्थोऽत आह—तिङर्थं त्विति। सुपामर्था इति। द्योत्या इत्यर्थः। तिङ्ष्वपि द्योतकत्वेत्युपपादितम्

**प्रसिद्धो नियमस्तत्र**

प्रसिद्धस्तत्र नियमः ।

**नियमः प्रकृतेषु वा ॥**

अथवा प्रकृतानर्थानपेक्ष्य नियमः । के च प्रकृताः ? एकत्वादयः । एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु । द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु । बहुष्वेव बहुवचनं न द्वयोर्नैकस्मिन्निति ।

अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'उत्पद्यन्तेऽव्ययेभ्यः स्वादय'इति, यदय-'मव्ययादाप्सुपः' [ २. ४. ८२ ] इत्यव्ययाल्लुकं शास्ति ॥२१॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य
चतुर्थे पादे द्वितीयमाह्निकम् ।

---

प्र०–सुपामर्था भवन्ति । प्रसिद्धो नियम इति । अर्थनियम इत्यर्थः । नियमः प्रकृतेषु वेति । तुल्यजातीयस्य नियमेन व्यावृत्तिः क्रियत इत्यव्ययेभ्यः स्वादीनामव्यावृत्तिः । अथवेति । भवतु प्रत्ययानां सामान्येन नियमस्तथापि ज्ञापकादव्ययेभ्यः स्वादिसिद्धिरित्यर्थः ।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य
चतुर्थे पादे द्वितीयमाह्निकम् ।

---

उ०–भाष्ये—तत्रेति तच्छब्देन पूर्वोपक्रान्तार्थ एव परामृश्यत इत्याह—अर्थेति । पूर्वार्धेन सामान्यापेक्षप्रत्ययनियमाऽसंभवो दर्शितः । अर्थद्वयसत्त्वे 'कर्मण्येवे'त्यादेवक्तुमशक्यत्वमिति भावः । प्रत्ययनियमपक्षेऽप्यव्ययेभ्यः स्वाद्युत्पत्तये आह—प्रकृतेषु वेति । नन्वेकत्वे एव नान्यत्रेत्येतावल्लभ्यते, तत्कथं प्रकृतविषये नियमोऽत आह—तुल्यजातीयस्येति । तत्र प्रकृतापेक्षप्रत्ययनियमेऽयमर्थः 'कर्मत्वादियोग्यार्थकप्रातिपदिकाच्चेत्प्रातिपदिकार्थ एव' कर्मण्येव, नान्यत्र करणादा'विति । 'पचतिकल्प'मित्यादौ च या विभक्तिर्नेष्यते साऽनभिधाना-द्वारणीयेति । एवमर्थनियमपक्षेपि बोध्यम् । पदैकवाक्यतयाऽन्वये सामान्यापेक्षप्रत्ययनियमे चाऽव्ययेभ्यःस्वाद्युत्पत्तिमाह भाष्ये—अथवाचार्येति ।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्याध्यायस्य
चतुर्थे पादे द्वितीयमाह्निकम् ।

## कारके ॥ १ । ४ । २३ ॥

किमिदं 'कारके' इति ? संज्ञानिर्देशः । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? इह हि व्याकरणे ये वैते लोके प्रतीतपदार्थकाः शब्दास्तैर्निर्देशाः क्रियन्ते पशुरपत्यं देवतेति, या वैताः कृत्रिमाष्टि-घु-घ-भादिसंज्ञास्ताभिः । न चायं लोके ध्रुवादीनां प्रतीतपदार्थकः शब्दः, न खल्वपि कृत्रिमा संज्ञा, अन्यत्राऽविधानात् । संज्ञाधिकारश्चायम् , तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः संज्ञायाः ।

**कारक इति संज्ञानिर्देशश्चेत्संज्ञिनोऽपि निर्देशः ॥ १ ॥**

कारक इति संज्ञानिर्देशश्चेत्संज्ञिनोऽपि निर्देशः कर्तव्यः । साधकं निर्वर्तकं कारकसंज्ञं भवतीति वक्तव्यम् ।

---

प्र०- कारके किमिदमिति । सप्तमीनिर्देशान्न तावत्संज्ञात्वेनाऽधिकारः । संज्ञाया भाव्यमानत्वात्प्रथमानिर्देशस्य न्याय्यत्वात् । अथ विशेषणत्वेनाऽधिकारस्तदा 'कारकाद्दत्तश्रुतयो'रित्यादावपादानादिसंज्ञाविकलस्याऽपि कारकस्य ग्रहणं प्राप्नोति । षड्विधस्यैव चेष्यते । तद्व्यतिरिक्तं च कारकमस्ति, यथा—'नटस्य शृणोती'ति प्रश्नः ।

संज्ञानिर्देश इति । सुपां सुपो भवन्तीति प्रथमायाः स्थाने सप्तमी कृतेति भावः । किं वक्तव्यमिति । सप्तमीनिर्देशादयुक्तः संज्ञापक्ष इति भावः । नहीति । सुब्व्यत्यय उक्तः । न चाऽयमिति । शास्त्रे लोके च प्रसिद्ध्यभावादुभूतविभक्त्यनुपपत्त्या भाव्यमानविभक्तेः प्रथमायाः स्थाने सप्तमी कृतेति भावः । संज्ञिनो निर्देश इति । यद्यपि वक्ष्यमाणा ध्रुवादयः संज्ञिनो लभ्यन्ते तथापि विशिष्टः संज्ञी निर्देष्टव्यः—'यत्क्रियया: साधकं ध्रुवादि, तत्कारकसंज्ञमपादानसंज्ञं च भवती'ति । ननु संज्ञापक्षे कारकसंज्ञाया अपादानादिसंज्ञाभिः समावेशो न प्राप्नोति, एकसंज्ञाधिकारात् । नैष-

---

उ०- कारके । विधेयाऽनिर्देशेन स्वार्थत्वाऽसंभवाद्यमधिकार एव । तत्राधिकाराऽसंभवमाह—सप्तमीति । अथेति । 'कारके' इत्यस्य क्रियायामित्यर्थो, विषयसप्तमी चेयमिति भावः । ननु षड्विधकारकाऽतिरिक्तकारकाऽप्रसिद्धिरत आह—यथेति । क्रियाजनकत्वं हि कारकत्वम् । भाष्ये समाधाता स्वाशयमाह—इह हीति । प्रतीतेति । अपत्यसमूहादिशब्दा इत्यर्थः । निर्देशाः—व्यवहाराः । 'भादिसंज्ञा' इत्यस्य 'ताभिर्वे'ति शेषः । 'निर्देशा' इत्यनेनाऽन्वयः । ध्रुवादीनां प्रतीतेति । ध्रुवादीनां वाचकोऽयं शब्दो न लोके प्रतीतपदार्थक इत्यर्थः, किं तु क्रियाजनकपरत्वेनैव प्रसिद्ध इति भावः । अन्यत्रेति । अतः सूत्रादित्यर्थः । तदाशयमाह—शास्त्र इति । 'निर्देष्टव्य' इत्यस्य 'इति भाष्यार्थ' इति शेषः । तत्फलं तु 'ब्राह्मणस्य पुत्रं पन्थानं

---

१–'भसंज्ञाः' पा० ।

**इतरथा ह्यनिष्टप्रसङ्गो ग्रामस्य समीपादागच्छतीत्यकारकस्य ॥२॥**

इतरथा ह्यनिष्टं प्रसज्येत । अकारकस्याऽप्यपादानसंज्ञा प्रसज्येत । क्व ? 'ग्रामस्य* समीपादागच्छतीति' ॥ नैष दोषः । नाऽत्र ग्रामोऽपाययुक्तः । किं तर्हि ? समीपम् । यदा च ग्रामोऽपाययुक्तो भवति, भवति तदाऽपादानसंज्ञा । तद्यथा,—ग्रामादागच्छतीति ।

प्र०-दोषः । 'ध्रुवमपाय' इति योगविभागेन कारक इति संज्ञा क्रियते । ततो'ऽपादान'-मित्यत्र कारकग्रहणमनुवर्तते, 'ध्रुवमपाय' इति च, तेन कारकं सदपादानसंज्ञमित्येव समावेशः सिध्यतीति । अन्तरेणाऽप्यनुवृत्तिं वचनसामर्थ्यात्पर्याये सिद्धे समावेशार्थोऽनुवृत्तिर्विज्ञायते । एवं सम्प्रदानादिसंज्ञास्वपि समावेशो व्याख्येयः । समावेशस्य च प्रयोजनं 'स्तम्बेरम' इत्यादावधिकरणत्वात् सप्तमी, कारकत्वात्कृदन्तस्योत्तरपदस्य प्रकृतिस्वरः । ग्रामस्य समीपादिति । यथा यो वृक्षशाखायाः पतति वृक्षादप्यसौ पतति । एवं यो ग्रामसमीपादागच्छति ग्रामादप्यसावागच्छति । ततश्चाऽपाये ग्रामस्य ध्रुवता भवति । आगमने तु निर्वर्तकत्वाऽभावः । समीपविशेषणत्वेनोपात्तत्वात् । नाऽत्र ग्राम इति । समीपविशेषणत्वेनोपादानादेव ग्रामस्याऽपाययोगो नास्ति । स हि संश्लेषपूर्वकः, संश्लेषश्च सन्नसन्वा बुद्ध्या कल्प्यते । स च समीपस्यैव विवक्षितो, न ग्रामस्येत्यर्थः । 'ग्रामात्समीपा'दिति चोक्ते वस्त्वन्तरापेक्षं ग्रामस्यैव सामीप्यं प्रतीयते न

उ०-'पृच्छती'ति भाष्य एव वक्ष्यति । भाष्ये'साधक'मित्यस्य पर्यायो 'निवर्त्तकं'मिति—'साधक'मित्यस्य च 'क्रियाया'इत्यादिः । वचनसामर्थ्यादिति । योगविभागसामर्थ्यादित्यर्थः । स्तम्बेरम इति । चिन्त्यमिदम् । उपपदत्वादेव 'गतिकारकोपपदात्कृ'दिति स्वरस्य सिद्धेः । न च स्तम्बशब्द उपपदं, न स्तम्बेशब्द इति वाच्यम् । सुबन्तस्यैवोपपदतया 'उपपद'संज्ञा सूत्रे भाष्ये वक्ष्यमाणत्वात् । तस्माद्ग्रामेवास इत्युदाहार्यम् । तत्र हि थाथादिस्वरः । प्रकृतिस्वर इति । थाथादिस्वरस्तु न, अपा साहचर्याद्देरच एव तत्र ग्रहणात् । 'भीत्रार्थानां भयहेतु'रित्यादावप्यावृत्त्याऽनुवृत्त्या च समावेशो व्याख्येयः ।

नन्वत्रसमीपस्यैवाऽवधित्वं न तु ग्रामस्येत्यत आह—यथेति । ग्रामसमीपादिति । वाटिकादेर्निवर्त्तकत्वम्, अपादानस्यापि तदभावे तदभावात् । ग्रामादपीति । विभागः संश्लेषपूर्वक एवेति नियमो नेत्यभिमानः । समीपविशेषणत्वेनेति । एवं च तन्निवर्त्तकत्वेन न विवक्षितः स इति भावः । ननु ग्रामसमीपविभागे ग्रामविभागोऽप्यार्थिकोऽस्त्येवेत्यत आह—स हि संश्लेषेति । विवक्षित इति । 'नात्रे'ति भाष्यस्य नाऽत्र ग्रामोऽपाययुक्तत्वेन विवक्षित इत्यर्थ इति भावः । नन्वेवं'ग्रामात्समीपा'दित्यादावपि ग्रामस्याऽपादानत्वं न स्यादत आह—ग्रामोऽपाययुक्तो भवतीति । ग्रामोऽपाययुक्तत्वेन विवक्षित इत्यर्थ इति भावः । नन्वेवं 'ग्रामात् समीपा'दित्यादावपि ग्रामस्यापादानत्वं न स्यादत आह—ग्रामात्समीपादिति ।

* ध्रुवमपायेऽपादानम् १. ४. २४.

**कर्मसंज्ञाप्रसङ्गोऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति ॥३॥**

कर्मसंज्ञा च प्राप्नोत्यकथितस्य । क ? 'ब्राह्मणस्य† पुत्रं पन्थानं पृच्छतीति' ।

नैष दोषः । अयमकथितशब्दोऽस्त्येवाऽसंकीर्तिते वर्तते । तद्यथा,—कश्चित्कंचित्पृच्छ्याह—'असावत्राऽकथितः' । असंकीर्तित इति गम्यते । अस्त्यप्राधान्ये वर्तते । तद्यथा,—'अकथितोऽसौ ग्रामे' 'अकथितोऽसौ नगर' इत्युच्यते यो यत्राऽप्रधानो भवति ॥ तद्यदाऽप्राधान्येऽकथितशब्दो वर्तते तदैष दोषः—'कर्मसंज्ञाप्रसङ्गोऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छती'ति ।

**अपादानं च वृक्षस्य पर्णं पततीति ॥ ४ ॥**

अपादानसंज्ञा च प्राप्नोति । क ? वृक्षस्य* पर्णं पतति, कुड्यस्य पिण्डः पततीति ।

**न वाऽपायस्याऽविवक्षितत्वात् ॥ ५ ॥**

न वैष दोषः । किं कारणम् ? 'अपायस्याऽविवक्षितत्वात्' । नाऽत्राऽपायो विवक्षितः । किं तर्हि ? सम्बन्धः । यदा चाऽपायो विवक्षितो भवति, भवति

प्र०—तु ग्रामापेक्षमन्यस्य सामीप्यम् । सङ्कल्पयेति । 'वर्जने प्रतिषेध' इति व्याख्यादेशाऽभावः । वर्जनं च प्रसक्तस्य सजातीयस्यैव भवतीति कारकस्यैव कर्मसंज्ञा भवति न तु ब्राह्मणस्य,—पुत्रं प्रति विशेषणत्वेनोपात्तस्य । तद्यदेति । अप्राधान्यस्य प्रसङ्गनिरपेक्षत्वाद् ब्राह्मणोऽपि पुत्रवद्भावात् । पन्था ईप्सिततमत्वात्प्रधानं, न पुत्रो, नापि ब्राह्मणः । वृक्षस्य पर्णमिति । 'ग्रामस्य समीपा'दित्यत्रापाययुक्तार्थान्तरसद्भावान्नास्ति ग्रामस्याऽपाययोगः । सह त्वर्थान्तरस्याऽनिर्देशाद् वृक्षस्यैवाऽपाययुक्तत्वमिति भावः । न वाऽपायस्येति । पर्णविशेषणत्वेनैव वृक्षस्य विवक्षितत्वात् । तथा हि—वृक्षमजहत्यपि

उ०—वस्त्वन्तरेति । सामानाधिकरण्येनान्वयादिति भावः । संचक्ष्येत्यस्योक्त्वेत्यर्थेऽसङ्गतिरत आह—वर्जनमिति । ब्राह्मणस्याऽत्रापादानत्वाप्रसक्तिरिति भावः । यत्र तत्प्रसक्तिपूर्वकं तद्विवक्षा तत्रैव तत्प्रवृत्तिरिति तात्पर्यम् । अप्राधान्यस्येति । प्रधानभिन्नत्वमेव तत्र तु वर्जितप्राधान्यकत्वम् । प्रधानत्वसम्भावनाऽभाववत्यपि लोकेऽप्राधानशब्दप्रयोगादिति भावः । पुत्रवद्भावादिति । पुत्रे इवाऽप्राधान्यस्य सत्त्वादिति भावः । तदेवोपपादयति—पन्था हीति । एव चाऽनीप्सिततमत्वमेवाऽप्राधान्यम् । 'तथायुक्त'मित्यपि न, सर्वथाऽनीप्सितत्वाऽभावादिति भाव. । 'तद्यदे'त्यनेन भाष्येणाऽत्र पक्षेऽदोषो ध्वनितः । सा चाऽग्रे स्फुटीकरिष्यते । ननु 'ग्रामस्य समीपा'दित्यत्रैवाऽत्रापि न भविष्यतीत्यत आह—ग्रामस्येति । नन्वपायाऽविवक्षायां

† अकथितं च १. ४. ५१. * ध्रुवमपायेऽपादानम् १. ४ २४.

तदाऽपादानसंज्ञा । तद्यथा,—'वृक्षात्पर्णं पततीति' । सम्बन्धस्तु तदा न विवक्षितो भवति । न ज्ञायते कङ्कस्य वा कुररस्य वेति ।

अयं तर्हि दोषः—'कर्मसंज्ञाप्रसङ्गश्चाऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति' । नैष दोषः । 'कारक'इति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् ? लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत—'करोतीति कारक'मिति ।

---

प्र०-पर्णे शाखास्थे भूमिं स्पृशति 'वृक्षस्य पर्णं पतती'ति प्रयोगो भवति । सति त्ववधौ गतिरपायो भवति नान्यथा, गतिविशेषत्वादपायस्य । न ज्ञायत इति । शब्देनाऽसमर्पणात्सम्बन्धिविशेषस्येति भावः । प्रत्यासत्त्या तु वृक्ष एव सम्बन्धित्वेन प्रतीयते । कर्मसंज्ञाप्रसङ्ग इति । अप्रधानवाच्यकथितशब्दाश्रयण इति भावः ।

अन्वर्थसंज्ञेति । महत्याः संज्ञायाः करणादनुमीयते'नूनं विशिष्टा ध्रुवादयः संज्ञित्वेन निर्दिष्टाः, यद्विशेषदर्शनात्तदनुरूपा तेषां संज्ञा क्रियते' । करोतीति कारकमिति । साध्यत्वेन क्रियैव शब्दात्प्रतीयते इति क्रियाया निर्वर्तकस्य कारकसंज्ञाऽ-

---

उ०-वृक्षशब्दवैयर्थ्यमत आह—पर्णेति । ननु पतत्पर्णं प्रति वृक्षस्य विशेषणत्वेऽपायविवक्षाप्यावश्यकीत्यत आह—वृक्षमजहत्यपीति । ननु पतेरेवापाऽयत्वेन तस्य चावध्याकाङ्क्षत्वेन तत्त्वमावश्यकमत आह—सति हीति । नन्वेवमन्योन्याश्रयोऽत आह—गतिविशेत्वादिति । विभागजन्यसंयोगानुकूलव्यापार एवाऽपायः । इह तूत्तरदेशसंयोगानुकूलव्यापार एव पतेरर्थ इति भावः । कङ्ककुररौ—वृक्षविशेषौ, पक्षिविशेषौ च । प्रत्यासत्त्या त्विति ग्रन्थोपयोगश्चिन्त्यः । पतत्रिपर्णे पतत्यपि 'वृक्षात्पर्णं पतती'ति प्रयोगाच्च ।

अप्रधानेति । वस्तुतोऽसंकीर्तितपर्यायेऽपि दोषः । प्राप्तिपूर्वकाऽविवक्षायां सर्वथा तदप्राप्तौ चाऽसंकीर्तितत्वं तत्र विवक्षितम् । अत एव'नटस्य शृणोती'त्यादौ सर्वथाऽपादानत्वाप्राप्तिविषये कर्मत्वमाशङ्क्य परिगणनेन समाहित'माख्यातोपयोग' इति सूत्रे भाष्ये । कारकाधिकाराऽभावे च पृच्छिकर्मणो निमित्तत्वात्प्राप्तिरत्र कर्मत्वस्य । प्रश्नजनकता तु च, पुत्रेणाऽन्यथासिद्धत्वादिति भाष्याशयः । अत एव याचिपृच्छिभिक्षीणा'मकथितं चे'त्युदाहरणता । तत्र हि न कस्यापि प्राप्तिरिति तत्रैव भाष्ये स्पष्टम् । नन्वन्वर्थत्वं नाम योगरूढत्वम्, एवं च कथं यौगिकार्थमुद्दिश्य संज्ञाविधानमत आह—महत्या इति । विशिष्टाः । महासंज्ञोपस्थितक्रियानिर्वर्तकत्वविशिष्टा इत्यर्थः । यद्विशेषेति । क्रियानिर्वर्तकत्वरूपविशेषेत्यर्थः । ननु करोतीत्यस्य निष्पादयतीत्यर्थः । एवं च निष्पादकत्वे लब्धेऽपि क्रियानिर्वर्तकमित्यर्थोऽलाभोऽत आह—क्रियैवेति । क्रियाया एव शब्देन साध्यत्वप्रतीतेर्निर्वर्तकार्थं कारकशब्दे संबन्ध्याकाङ्क्षायां सैव संबध्यत इति भावः । संप्रदानादीनामपि स्वज्ञानद्वारा जनकत्वं बोध्यम् । ननु करणादीनामपि क्रियानिर्वर्तकत्वमस्त्येवेत्यत आह—स्वतन्त्रस्येति । स्वातन्त्र-

**अन्वर्थमिति चेदकर्तरि कर्तृशब्दानुपपत्तिः ॥ ६ ॥**

अन्वर्थमिति चेदकर्तरि कर्तृशब्दो नोपपद्यते, करणं कारकम्, अधिकरणं कारकमिति।

**सिद्धं तु प्रतिकारकं क्रियाभेदात्पचादीनां करणाऽधिकरणयोः कर्तृभावः ॥ ७ ॥**

सिद्धः करणाऽधिकरणयोः कर्तृभावः। कुतः? 'प्रतिकारकं क्रियाभेदात्पचादीनाम्'। पचादीनां तु प्रतिकारकं क्रिया भिद्यते। किमिदं प्रतिकारकमिति? कारकं कारकं प्रति प्रतिकारकम्॥ कोऽसौ प्रतिकारकं क्रियाभेदः पचादीनाम्?

**अधिश्रयणोदकासेचनतण्डुलावपनैधोऽपकर्षणक्रियाः प्रधानस्य कर्तुःपाकः ॥ ८ ॥**

अधिश्रयणोदकासेचनतण्डुलावपनैधोऽपकर्षणादिक्रियाः कुर्वन्नेव 'देवदत्तः पचती'त्युच्यते। तत्र तदा पचिर्वर्तते। एष प्रधानकर्तुः पाकः। एतत्प्रधानकर्तुः कर्तृत्वम्।

**द्रोणं पचत्याढकं पचतीति सम्भवनक्रिया धारणक्रिया चाधिकरणस्य पाकः ॥ ९ ॥**

द्रोणं पचत्याढकं पचतीति सम्भवनक्रियां धारणक्रियां च कुर्वती स्थाली

प्र०—पादानादिसंज्ञा च प्रवर्तते। अन्वर्थमिति चेदिति। करोतीति कारकमिति यथाश्रीयते तदा स्वतन्त्रस्यैव कर्तृसंज्ञावत्कारकसंज्ञाऽपि प्राप्नोति न तु करणादीनां कर्तृपरतन्त्राणाम्। कर्तृशब्द इति। कर्तृवाची कारकशब्द इत्यर्थः।

सिद्धं ति ति। स्वव्यापारे सर्वेषां स्वातन्त्र्यात्तदनुष्ठानद्वारेण प्रधानक्रियायामुपयोगात्कर्तृसन्निधावपि स्वव्यापारस्याऽनिवर्तनात्पारतन्त्र्यावस्थायामप्यनिवृत्तं कारकत्वमित्यर्थः। सम्भवनक्रिया मा इ। ग्रहणक्रियामित्यर्थः। धारणक्रियामिति। स्थिरत्वा-

उ०—वाचिकर्तृपदार्थे ण्वुलो विधानादिति भावः। नन्वकर्तरि कर्तृशब्दाऽप्रयोग इष्ट एवेत्यत आह—कर्तृवाचीति। ननु समूहरूपा क्रिया प्रतिकारकं न भिद्यतेऽत आह—स्वव्यापार इति। एवं च स्वव्यापारे स्वातन्त्र्यात्कारकत्वं पच्यादिवाच्यसमूहं प्रति पारतन्त्र्यात्करणत्वं चेति भावः। ननु तदा तस्य धात्वर्थत्वाऽभावात् कथं क्रियात्वं, कथं च तदाश्रयत्वेन करणादीनां कारकत्वमिति चेन्न। तदानीं तस्य प्रकृतधात्वर्थत्वाऽभावेऽपि कृधात्वर्थत्वाऽक्षतेः। विभक्तिस्तु प्रकृतधात्वर्थनिबन्धनसंज्ञयैवेति बोध्यम्। तदनुष्ठानद्वारेणेति। तदनुगमनद्वारेणेत्यर्थः। तदेति। यदा 'देवदत्तःपचती'त्युच्यते तदा तत्राधिश्रयणादावित्यर्थः। एवमग्रेपि। द्रोणं

'पचती'त्युच्यते । तत्र तदा पचिर्वर्तते । एषोऽधिकरणस्य पाकः । एतदधिकरणस्य कर्तृत्वम् ।

**एधाः पक्ष्यन्त्याऽऽविक्लित्तेर्ज्वलिष्यन्तीति ज्वलनक्रिया करणस्य पाकः ॥ १० ॥**

एधाः पक्ष्यन्ति[1] = आ विक्लितेर्ज्वलिष्यन्तीति ज्वलनक्रियां कुर्वन्ति काष्ठानि 'पचन्ती'त्युच्यन्ते । तत्र तदा पचिर्वर्तते । एष करणस्य पाकः । एतत्करणस्य कर्तृत्वम् ।

**उद्यमननिपातनानि कर्तुश्छिदिक्रिया ॥ ११ ॥**

उद्यमननिपातनानि कुर्वन् देवदत्त'श्छिनत्ती'त्युच्यते । तत्र तदा छिदिर्वर्तते । एष प्रधानकर्तुश्छेदः । एतत्प्रधानकर्तुः कर्तृत्वम् ।

**यत्तन्न तृणेन तत्परशोश्छेदनम् ॥ १२ ॥**

यत्तत्समान उद्यमने निपातने च परशुना छिद्यते न तृणेन, तत्परशोश्छेदनम् ॥ अवश्यं चैतदेवं विज्ञेयम् ।

**इतरथा ह्यसितृणयोश्छेदनेऽविशेषः स्यात् ॥ १३ ॥**

यो हि मन्यत उद्यमननिपातनादेवैतद्भवति 'च्छिनत्ती'ति, असितृणयोश्छेदने न तस्य विशेषः स्यात्, यदसिना छिद्यते तृणेनापि तच्छिद्येत ।

प०–दाऽऽक्रियासमाप्तेस्तण्डुलानां धारणमित्यर्थः । एधाः पक्ष्यन्तीति । भविष्यन्निर्देशः कर्तृगतसम्भावनापेक्षः । कर्त्रा हि सम्भावितक्रिया नियुज्यन्ते, नियुक्ताश्च व्याप्रियन्ते, न तु प्रागेव । न त्वत्र भविष्यन्निर्देशस्तन्त्रम् । अनेकार्थत्वाद्धातूनां तादर्थ्याद्वा तद्रूपासङ्गात्करणादिव्यापारे पचेर्वृत्तिर्द्रष्टव्या । यत्तन्न तृणेनेति । अन्वयव्यतिरेकाभ्यां करणस्य

उ०–पचतीत्यादेः—'स्थाली'त्यादिः । ज्ञानरूपस्य सम्भवनस्य स्थाल्यां बाधादाह—प्रहणेति । ननु स्थालीविषयश्चुल्ल्या व्यापारो धारणं, स कथं स्थाल्या अत आह—तण्डुलानामिति । नन्वत्र लृण्निर्देशो व्यर्थोऽत आह—भविष्यदिति । ननु धात्वन्तरवाच्यज्वलनादौ पचेः कथं वृत्तिरत आह—अनेकार्थत्वादिति । तादर्थ्याद्वेति । समूहरूपस्य क्रियार्थत्वात्स्ववाच्यसमूहरूपारोपः करणव्यापारे इत्यर्थः । नन्वेकत्र करणस्य कर्तृत्वे दर्शितेऽन्यत्रापि ज्ञातुं शक्यत इति परशौ तत्कथनमनुपयुक्तमत आह—अन्वयेति । निदर्शनायेति । प्रतिपादयितुमित्यर्थः । परशौ यथा विशिष्टः करणव्यापार एवं सर्वत्रापीति । एवं च तत्तत्स्वव्यापारे । कर्तृत्वात्कारकत्वं, फलाश्रयत्वादिविवक्षायां च कर्मत्वादि । ककारकत्वं चोपलक्षणं सत्कर्मकारकादिसंज्ञोपयोगीति बोध्यम् । अन्ये तु प्रधानक्रियाजनकोक्तस्वव्यापारे कर्तारः, प्रधानकर्त्रा व्यवकृतेपि

१–'एधाः पक्ष्यन्ती'त्यस्य व्याख्यानम् 'आविक्लित्तेर्ज्वलिष्यन्ती'ति ।

**अपादानादीनां त्वप्रसिद्धिः ॥ १४ ॥**

अपादानादीनां [ [1]तु ] कर्तृत्वस्याऽप्रसिद्धिः । यथा हि भवता [2]करणाधिकरणयोः कर्तृत्वं निदर्शितं न तथाऽपादानादीनां [2]कर्तृत्वं निदर्श्यते ।

**न वा स्वतन्त्रपरतन्त्रत्वात्तयोः पर्यायेण वचनं वचनाश्रया च संज्ञा ॥ १५ ॥**

न वैष दोषः । किं कारणम् ? 'स्वतन्त्रपरतन्त्रत्वात्' । सर्वत्रैवाऽत्र स्वातन्त्र्यं पारतन्त्र्यं च विवक्षितम् । 'तयोः पर्यायेण वचनम्' । तयोः स्वातन्त्र्यपारतन्त्र्ययोः पर्यायेण वचनं भविष्यति । [3]वचनाश्रया च संज्ञा भविष्यति । तद्यथा,—बलाहकाद्विद्योतते [विद्युत्] । बलाहके विद्योतते । बलाहको विद्योतत इति ।

किं तर्ह्युच्यते—'अपादानादीनां त्वप्रसिद्धि'रिति ? एवं तर्हि न ब्रूमो'ऽ-

प्र०—विशिष्टव्यापारावेशनिदर्शनाय दर्शयति । न तथेति । न ह्यपादाने ग्रामे ग्रामाय आगच्छतीति प्रयोगोऽस्ति । बलाहकादिति । निःसरणाङ्गे द्योतने द्युतिर्वर्तते पृथग्भावश्च विवक्षित इत्यपादानत्वम् । बलाहक इति । स्थित्यङ्गे द्योतनेऽत्र द्युतिर्वर्तते । बलाहके स्थित्वा ज्योतीरूपा विद्युद्विद्योतत इत्यर्थः । बलाहक इति । विद्युतो बला-

उ०—स्वगततत्तद्व्यापारे स्वातन्त्र्यसत्त्वात् । अकुर्वतः साधनत्वाऽनुपपत्तेः । एवं च तत्तद्व्यापारलब्धकरणत्वादिमन्त एव कर्तृपारतन्त्र्येपि स्वस्वव्यापारे स्वातन्त्र्यसत्त्वात्तद्द्वारा मुख्यक्रियायामपि स्वतन्त्रा इति प्रधानक्रियाकर्तृत्ववन्तोऽपि यथा युद्धकर्मणि योद्धारो राजनियोगापेक्षणादस्वतन्त्रा अपि नियोगोत्तरं स्वतन्त्रा एव । नियोगमात्रात्तु तन्निष्ठजयादिभाग्राजा । नियोगमात्रेण च मुख्यकर्तर्येव कर्तृव्यवहारोपीत्याहुः ।

भाष्ये—अपादानादीनामिति । आदिना सम्प्रदानम् । बहुवचनं तु प्रयोगबाहुल्याभिप्रायेण । एवं च तयोः कारकसंज्ञाऽप्राप्तिरिति भावः । कर्मणः कर्तृत्वं तु 'कर्मवत्कर्मणे'तिसूत्रेण स्पष्टमेवोक्तमिति तन्न दर्शितम् । नन्ववधीभवनमेव तद्व्यापारोऽत आह—न हीति । अपादाने ग्रामे इति । अपादानभूतग्रामविषये इत्यर्थः । भाष्ये—वचनं विवक्षा वचनाश्रया चेति । कादाचित्कस्वातन्त्र्याविवक्षाश्रया चाऽपादानसंज्ञेत्यर्थः । नन्वपादानस्य कर्तृत्वं न दृष्टमित्यतो भाष्ये—तद्यथेत्यादि । ननु विद्युद्बलाहकयोरविभागात्कथं निःसरणमत आह—पृथग्भाव इति । बौद्धो भेद इत्यर्थः । ननूक्तार्थे बलाहकस्याधारत्वानुपपत्तिरत आह—स्थित्यङ्गे इति । अभेदविवक्षायामिति । धूमज्योतिःसलिलमरुतां संघातस्य मेघपदार्थत्वविवक्षायामिति भावः । भाष्ये—किं तर्हीति । अपादानस्य कर्तृत्वप्रसिद्धौ तेषां कर्तृत्वाऽप्रसिद्धिरित्यभिप्रायेण कथमपादा'नादीनां त्वप्रसिद्धि'रिति वार्तिकं व्याख्यातमित्यर्थः ।

उत्तरयति—एवं तर्हीत्यादिना । "एवं तर्हि 'अपादानादीनां त्वप्रसिद्धिः' इति

१-क्वचिन्न । २-'करणादीनां' पा० । ३-इतः पूर्वं 'वचनाश्रया च संज्ञा' इत्यपि क्वचित् ।

पादानादीनां कर्तृत्वस्याऽप्रसिद्धि'रिति । पर्याप्तं करणाधिकरणयोः कर्तृत्वं निदर्शितमपादानादीनां कर्तृत्वनिदर्शनाय । पर्याप्तो ह्येकः पुलाकः स्थाल्या निदर्शनाय । किं तर्हि ? 'संज्ञाया अप्रसिद्धिः' । यावता सर्वत्रैवाऽत्र स्वातन्त्र्यं विद्यते पारतन्त्र्यं च, तत्र परत्वात्कर्तृसंज्ञैव प्राप्नोति† । अत्रापि 'न वा स्वतन्त्रपरतन्त्रत्वात्तयोः पर्यायेण वचनं वचनाश्रया च संज्ञे'त्येव ।

यथा पुनरिदं भवता स्थाल्याः [1]स्वातन्त्र्यं निदर्शितं संभवनक्रियां धारणक्रियां च कुर्वती स्थाली स्वतन्त्रेति, क्वेदानीं परतन्त्रा स्यात् ? यत्तत् प्रक्षालनं परिवर्तनं वा । न वा एवमर्थं स्थाल्युपादीयते प्रक्षालनं परिवर्तनं च

प्र०—न्यग्भावात्सदपि स्वातन्त्र्यं स्वकार्यं न प्रयुङ्क्ते । यथा राजसन्निधौ तदनुपयोगि स्वकार्यममात्या नारभन्ते । न वा एवमर्थमिति । प्रक्षालनाद्यभावेऽपि पाकनिष्पादकस्य चाऽभेदविवक्षायामयं प्रयोगः । पर्याप्तमिति । स्वव्यापारानुष्ठानमन्तरेण प्रधानक्रियायामुपयोगाऽभावात् । 'ग्राम आगच्छती'त्यथान्तरावगमादपादानव्यापारानवसायात्प्रयोगाऽभावः । एवं 'ब्राह्मणाय ददाती'त्यर्थे 'ब्राह्मणो ददाती'ति प्रयोगाऽभावः । शब्दशक्तिस्वाभाव्याच्चाऽपादानसम्प्रदानव्यापारे धातुर्न वर्तते । वस्तुतस्त्वपादानस्याऽवधिभावेनाऽवस्थानं व्यापारोस्ति, सम्प्रदानस्याप्यनुमननादिलक्षणः प्रतीयमानोऽपि व्यापारः कारकव्यपदेशनिबन्धनम् । यथा 'प्रविश पिण्डी'मिति । परत्वादिति । अपादानादीनामवकाशो—यदा स्वातन्त्र्यं नास्ति । कर्तृसंज्ञाया अवकाशो—'देवदत्तः पचती'ति । ननु सर्वत्र स्वातन्त्र्यस्य सद्भावान्नाऽस्ति कर्तृसंज्ञावियुक्तोऽपादानादिसंज्ञानामन्यत्राऽवकाशः । सत्यमेतत् । पूर्वपक्षस्त्वयं, तत्र च न्यायाऽऽभासेनैव भाव्यम् । अन्यथा पूर्वपक्ष एव न स्यात् । अत्रापीति । उद्भूतस्वातन्त्र्यविवक्षायां कर्तृसंज्ञा, 'यथा—'स्थाली पचती'ति । उद्भूतपारतन्त्र्यविवक्षायां तु

उ०—वाक्यं नोक्ताभिप्रायं, किं तर्हि'' इत्यन्वयः । पर्याप्तमिति । कर्मण इवेत्यर्थः । तद्व्याचष्टे—स्वेत्यादि । नन्वेवं पचन्तीतिवद् ग्राम आयातीति प्रयोगः स्यादत आह—ग्राम आगच्छतीति । ननु 'काष्ठं पचती'त्यत्राप्यर्थान्तरावगमस्तुल्यः, एवमपि तद्व्यापारस्य धात्वर्थत्वेऽपादानादिव्यापारोऽपि तथा स्यादत आह—शब्दशक्तीति । नन्वपादानादिषु व्यापाराऽभावादेव न तथा प्रयोगोऽत आह—वस्तुतस्त्विति । ननु तस्य प्रकृतधातुवाच्यत्वाऽभावात्कथं कर्तृप्रत्ययान्तकारकव्यपदेशोऽत आह—प्रतीयमानोऽपीति । धात्वर्थत्वाऽभावेपि ग्रामादिपदैरेव तस्य प्रतीत्या तन्निरूपितं कारकत्वं, कारकशब्दघटककृधात्वर्थत्वात्तस्य व्यापारस्येति भावः । न स्यादिति । अयं भावः—यद्यनवकाशत्वादपादानादिसंज्ञा स्युस्तदा 'स्थाली पचती'ति न स्यादिति । नन्वेवमपि स्वव्यापारं प्रति स्वातन्त्र्यस्याऽनिवर्तनात्कर्तृत्वं न व्यावर्तितमत आह—उद्भूतेति । स्वतन्त्रपदसामर्थ्यादित्यर्थः । स्वातन्त्र्ये उद्भूतत्वं च—

† स्वतन्त्रः कर्ता १. ४. ५४. १-'कर्तृत्वं' पा० ।

करिष्यामीति । किं तर्हि ? संभवनक्रियां धारणक्रियां च करिष्यतीति । तत्र चाऽसौ स्वतन्त्रा । क्वेदानीं परतन्त्रा ?

एवं तर्हि स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रा, कर्तृस्थे यत्ने कथ्यमाने परतन्त्रा ॥ ननु च भोः कर्तृस्थेऽपि वै यत्ने कथ्यमाने स्थाली संभवनक्रियां धारणक्रियां च करोति, तत्राऽसौ स्वतन्त्रा । क्वेदानीं परतन्त्रा [[1]स्यात्] ?

एवं तर्हि प्रधानेन समवाये स्थाली परतन्त्रा, व्यवाये स्वतन्त्रा । तद्यथा,—अमात्यादीनां राज्ञा सह समवाये पारतन्त्र्यं, व्यवाये स्वातन्त्र्यम् । किं पुनः प्रधानम् ? कर्ता । कथं पुनर्ज्ञायते—'कर्ता प्रधान'मिति ? यत्सर्वेषु साधनेषु संनिहितेषु कर्ता प्रवर्तयिता भवति ।

ननु च भोः प्रधानेनापि वै समवाये स्थाल्या अनेनार्थो 'ऽधिकरणं कारक'-मिति । न हि 'कारक'मित्यनेनाऽधिकरणत्वमुक्तम्, 'अधिकरण'मिति वा कारकत्वम् । [2]उभौ चाऽन्योन्यविशेषकौ भवतः । कथम् ? [2]एकद्रव्यसमवायि-

प्र०–दात्तेषां तत्राऽनङ्गत्वात् । किं पुनः प्रधानमिति । सामग्रीतः क्रियोत्पादात्सर्वेषां तत्र सामान्यान्न कस्यचित्प्राधान्यमिति भावः । कर्ता प्रवर्तयितेति । तदधीनप्रवृत्तित्वात्करणादीनां तस्य च प्रागन्यतः शक्तिलाभात्प्रतिनिध्यदर्शनात्करणाद्यभावेऽप्यास्ते शेते इत्यादौ केवलस्य कर्त्तुर्दर्शनात्कर्तृरहितानां करणादीनामदर्शनात्प्राधान्यं कर्त्तु-रित्यर्थः । उभौ चान्योन्यविशेषकाविति । ततश्च स्वातन्त्र्यपारतन्त्र्ययोर्युगपद्विराधा-

उ० विवक्षितप्रकृतप्रधानसंपूर्णधात्वर्थाश्रयत्वरूपमेव । पारतन्त्र्ये उद्भूतत्वं च—प्रकृतधात्वर्थाश्रयत्वरूपत्वमेवेति बोध्यम् । यथा राजेति । तदा हि राजा स्वकार्यभागिति तत्राऽमात्यानां न स्वातन्त्र्यं, तद्व्यवाये तु राजकार्येऽपि तेषां नियोगात्स्वातन्त्र्यमेव । तथा कर्तृसन्निधाने स्थाल्यादियत्नस्य धात्ववाच्यत्वात्तेषां पारतन्त्र्यमेव । तद्व्यवाये तद्यत्नस्यापि तद्वाच्यत्वात्स्वातन्त्र्यमिति भावः । अन्यथाऽपादानादीनां निरवकाशत्वादित्याशयः । भाष्ये—यथा पुनरिति । येन प्रकारेणेत्यर्थः । 'क्वे'ति प्रश्ने उत्तरं 'यत्त'दिति । तत्खण्डयति—न वेति । स्थालीस्थे यत्न इति । अत्र 'यत्न'शब्देन व्यापारसामान्यम् । समीचीने समाधाने उक्तेऽपि तदस्फुटत्वोक्तमेव पुनराह—ननु चेति ।

स्वाशयं प्रकटयति समाधाता—एवं तर्हीति । प्रधानेन समवाये इति । धात्वर्थाऽनाश्रयायाः प्रधानधात्वर्थाश्रयेण समवाये इत्यर्थः । व्यवाये इति । तस्य धात्वर्थाश्रयत्वाऽभावे स्थाल्या एव धात्वर्थाश्रयत्वे इत्यर्थः । राजा सहेति । व्यवहारद्रष्टृत्वाद्याश्रयराज्ञेत्यर्थः । अस्याशय उक्तः । सामान्यादिति । समानत्वादित्यर्थः । नन्वन्यतराऽभावेऽपि प्रवृत्तेरदर्शनात्सर्वस्य प्रवर्तयितृत्वमविशिष्टं, साधकतमत्वात्करणस्यैव च प्राधान्यमत आह—तदधीनेति । भाष्ये—'प्रवर्तयिते'त्यस्य 'साधनाना'मिति शेषः । अनेन कारकचक्रप्रयोक्तृत्वं कर्तुः

[1]—क्वचिन्न । [2]—'उभौ चान्योन्यविशेषकावेकद्रव्यसमवायित्वात्' इति वार्तिकमित्यपि केचित् ।

स्वात्। तद्यथा,—'गार्ग्यो देवदत्त' इति। न हि 'गार्ग्य' इत्यनेन देवदत्तत्व-मुक्तं, 'देवदत्त' इत्यनेन वा गार्ग्यत्वम्। उभौ चाऽन्योन्यविशेषकौ भवत एक-द्रव्यसमवायित्वात्।

एवं तर्हि सामान्यभूता क्रिया वर्तते, तस्या निर्वर्तकं कारकम्।

प्र०-विशेषणविशेष्यत्वे न प्रकल्पेते इत्यर्थः। एवं तर्हीति। सर्वेषां कारकाणां साध्यत्वेन साधारणी क्रिया, ततश्च सर्वेषां तस्यां कर्तृत्वम्। अवान्तरव्यापारविवक्षायां तु करणादिरूपत्वम्। यथा मातापित्रोरपत्योत्पादने कर्तृत्वं, भेदविवक्षायां तु 'अयमस्यामियमस्माज्जनयती'त्यधिकरणत्वमपादानत्वं च व्यवतिष्ठते। कर्तृसंज्ञा तु करणत्वाद्यवस्थायां न भवति। 'स्वतन्त्रः कर्ते'त्यत्र कारकत्वादेव स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रश्रुतिर्नियमार्था, तेन स्वतः स्वातन्त्र्यमेव यस्य तस्य कर्तृसंज्ञा, न तु पारतन्त्र्यसहितस्वातन्त्र्ययुक्तस्य। कारकसंज्ञा तु वस्तुस्थित्या विद्यमानमुद्भूतत्वेनाऽविवक्षितमपि

उ०-स्वातन्त्र्यमित्युक्तम्। नन्वीप्सिततमत्वेन कर्मणः प्राधान्यमत आह—तस्य चेति। कर्तुरित्यर्थः। अन्यतः प्रागिति। अन्येभ्यः कारकेभ्यः प्रागित्यर्थः। नैवं करणादीनामिति भावः। प्रतिनिधीति। करणादीनां हि सोमादीनां स दृश्यते, न तु कर्तुरिति भावः। करणाद्यभावेपीति। अन्वयव्यतिरेकाभ्यां कर्तुः प्राधान्यमित्यर्थः।

भाष्ये—अनेनेति। कारकव्यपदेशेनेत्यर्थः। अयं व्यवहार इष्यते, तत्रोद्भूतस्वातन्त्र्याऽभावाद्यथा कर्तृशब्दाऽप्रवृत्तिस्तथा तदर्थककारकशब्दस्याऽप्यप्रवृत्तिः स्यादिति भावः। ननु पुनरुक्तत्वादेवं व्यवहारोऽनिष्ट एवेत्यतो—न हीति। एवं च न पौनरुक्त्यमिति भावः। किं तु विशेषणविशेष्यभाव इत्याह—उभौ चेति। तदाशयं पूर्वपक्षसाधकत्वेनाह—ततश्चेति। नन्वेताभ्यामेकस्यैव द्रव्यस्य बोधेन तयोर्भेदनियतस्य परस्परं सम्बन्धस्याऽभावादन्योन्यविशेषकावित्युक्तमिति पृच्छति भाष्ये—कथमिति। उत्तरयति—एकद्रव्यसमवायित्वादिति। शब्दद्वयोपात्ते एकत्र द्रव्ये उभयोः समवायात्संबन्धादित्यर्थः। 'अन्योन्यविशेषका'-वित्यस्य परस्परं विशेष्यविशेषणभावं प्राप्तावित्यर्थः। 'एकद्रव्यसमवायित्वा'दित्यनेन द्रव्यैक्येपि धर्मभेदे विशेष्यविशेषणभावो, न तूभयैक्ये इति दर्शितम्। यद्वा कारकशब्दोपात्तद्रव्यस्याधिकरणस्वरूपोऽर्थोऽधिकरणपदोपात्तद्रव्यस्य कारकस्वरूपोऽर्थः परिच्छेदक इत्यर्थः। ननु भिन्नद्रव्यवृत्तिधर्मयोः कथं परस्परपरिच्छेदकत्वमत आह—एकेति। शब्दद्वयोपात्तैकद्रव्यसंबद्धत्वादित्यर्थः।

यद्यपि तद्व्यवायकालिकस्वातन्त्र्यमादाय तदापि कारकत्वव्यवहारस्तत्कालिकपारतन्त्र्यमादाय चाऽधिकरणत्वव्यवहार इति शक्यते वक्तुं तथापि प्रकारान्तरेणाऽपि समाधातुमाह—एवं तर्हीति भाष्ये। ननु सर्वेषामेकक्रियाऽभावात् 'सामान्यभूते'त्यनुपपन्नमत आह—सर्वेषामिति। साधारणीति। प्रधानक्रिया तत्तद्व्यापारजन्यत्वेन सर्वसाधारणीति भावः। तस्यां कर्तृत्वमिति। जनकत्वादिति भावः। अवान्तरेति। अपादानत्वादिनिमित्तभूतव्यापार-

संशोध्यम्—२८२ तमे पृष्ठे प्रदीपस्योपरिष्टान्मुद्रिते द्वे पंक्ती तस्यैवाधस्तात् पठितव्ये।

अथवा यावद् ब्रूयात् 'क्रियाया'मिति, तावत् 'कारके' इति । एवं च कृत्वा निर्देश उपपन्नो भवति 'कारके' इति । इतरथा हि 'कारकेषु' इति ब्रूयात् ॥२३॥

प्र०—स्वातन्त्र्यमाश्रित्य करणादीनां विधानसामर्थ्यात्प्रवर्तते । यत्र च शक्तीनां निमित्तनिमित्तिभावेन युगपद्विवक्षा तत्र संज्ञानां विप्रतिषेध उच्यते । यथा 'धनुषा विध्यती'ति । विनाऽपायविवक्षया धनुषः साधकतमत्वाऽभावात् संज्ञाद्वयप्रसङ्गे परत्वात्करणसंज्ञा । 'असिश्छिनत्ती'ति सत्येव साधकतमत्वे स्वातन्त्र्यस्य विवक्षितत्वात्परत्वात्कर्तृसंज्ञा । तदा तु तैक्ष्ण्यादीनां करणत्वम् । तैक्ष्ण्यादीनां तु कर्तृत्वविवक्षायामात्मनः करणत्वम् । तैक्ष्ण्यमेव हि विवक्षावशाद्द्वेधाऽवतिष्ठते कर्तृत्वेन, करणत्वेन च । वस्तुस्थित्या त्वेक एवार्थोऽस्मेति कर्तृत्वं करणत्वस्य बाधकमुच्यते । अथवेति । क्रियाऽत्र सूत्रे कारकशब्देनोच्यते । सा हि कर्त्रादीनि विशिष्टव्यपदेशयुक्तानि करोति । विषयत्वेन चायमधिकारः । क्रियायां विषये यद् ध्रुवमित्यादि वस्तु संपद्यते । एवं च कृत्वेति । निर्धारणसप्तम्यां हि कारकेष्विति वाच्यम् । निर्धारणस्याऽनेकाश्रयत्वात् । 'कारकाद्दत्तश्रुतयो'-रित्यादौ तु कारकशब्दस्य स्वरितत्वात्तदधिकारोपात्तानामपादानादीनां ग्रहणम् ॥२३॥

उ०—विशेषविवक्षायामित्यर्थः । अपादानस्याऽपि क्वचित्कर्तृत्वं दर्शयति—यथा मातेति । नन्वेवं करणत्वावस्थायामपि कर्तृत्वप्रसङ्गः, प्रधानक्रियां प्रति साधनत्वाऽविशेषादित्यत आह—कर्तृसंज्ञा त्विति । नन्वेवं कर्तृण्वुलन्तकारकसंज्ञापि तेषां न स्यादत आह—कारकसंज्ञा त्विति । नन्वेवं करणादीनां विप्रतिषेधाऽनुपपत्तिः, तद्व्यापाराणां परस्परपरिहारेण वर्तमानानामेकत्र युगपदसत्त्वादत आह—यत्र शक्तीनामिति । करणत्वादीनामित्यर्थः । परत्वात्करणसंज्ञेति । शक्तिद्वयस्याऽपि विप्रतिषेधसूत्रबलात्तृतीयैव वाचिकेति भावः । नन्वेवं 'काष्ठानि पचन्ती'ति न स्यादत आह—असिश्छिनत्तीति । वस्तुतस्तदा स्वातन्त्र्यमेव विवक्षितमिति न परत्वोपयोगः, अन्यथा करणाकाङ्क्षैव न स्यात्स्वगतैकशक्त्यभिधाने स्वगतसकलशक्तीनामभिहितवत्प्रकाशाच्च कदापि तृतीया तत्रेति कैयटाशयः । छेदनस्य नियमेन करणाकाङ्क्षत्वात्तद्दर्शयति—तदा त्विति । नन्वेकस्यैव कर्तृत्वकरणत्वे युगपद्विरुद्धे अत आह—विवक्षेति । नन्वेवं परस्परं बाध्यबाधकत्वं कथमत आह—वस्तुस्थित्या त्विति ।

ननु कारकशब्दाल्लोके क्रियाप्रतीतिर्न दृश्यत आह—सूत्र इति । सौत्रत्वादेकवचननपुंसकत्वे । विषयत्वेनेति । विषयत्वं च जनकत्वमेव । वस्तु—वाक्यार्थः । भाष्ये—एवं च कृत्वेति । पूर्वमते हि प्रथमोचितेति भावः । ननु नाऽस्तु संज्ञापक्षः कारकपदस्य क्रियापरत्वं च, निर्धारणसप्तम्याऽनुपदोक्तार्थलाभादत आह—इतरथा हीति । कारकेष्वितीति । 'निपचोल्स्या'दित्यादिस्तु सौत्रः प्रयोगः । बहुवचनस्थाने एकवचनस्वीकारात् । तत्राऽगत्या तथा स्वीकार इति भावस्तदाह—निर्धारणस्येति । कारकाणां मध्ये यद् ध्रुवं तदपादानमित्यादिक्रमेण हि तदर्थः । 'द्वन्द्वः सामासिकस्य चे'ति त्वार्षम् । लोके तु निर्धारणस्थले एकवचनप्रयोगो न साधुरिति बोध्यम् । नन्वेवं 'कारकाद्दत्ते'त्यादौ क्रियाजनकमात्रस्य ग्रहणं स्यादत आह—कारकाद्दत्तेति ॥२३॥

इह कश्चित्कंचिदामन्त्रयते—'सिद्धं भुज्यता'मिति । स आमन्त्र्यमाण आह—'प्रभूतं भुक्तमस्माभि'रिति । आमन्त्रयमाण आह—'दधि खलु भविष्यति', 'पयः खलु भविष्यति' । आमन्त्र्यमाण आह—'दध्ना खलु भुञ्जीय', 'पयसा खलु भुञ्जीये'ति । अत्र कर्मसंज्ञा प्राप्नोति । तद्धि तस्येप्सिततमं भवति ।

तस्याप्योदन एवेप्सिततमो न तु गुणेष्वस्याऽनुरोधः । तद्यथा,—भुञ्जीयाहमोदनं यदि मृदुविशदः स्या'दिति । एवमिहापि 'दधिगुणमोदनं भुञ्जीय', 'पयोगुणमोदनं भुञ्जीये'ति ।

---

प्र०- इह कश्चिदिति । अन्वयव्यतिरेकाभ्यां दधिपयसोरीप्सिततमत्वं न त्वोदनस्येति दर्शयति ।

तस्याप्योदन इति । दधिपयसोस्तु संस्कारकत्वात्करणभावः । न तु गुणेष्विति । गुणेषूपकारकेषु केवलेषु नाऽस्यादरः, किं तर्हि, तत्संस्कृत ओदन इत्यर्थः । मृदुविशद इति । मृदुश्चाऽसौ विशदश्चेति कर्मधारयः । यदि मार्दवमात्रे आदरः स्यात्पङ्कमपि भक्षयेत् । विशदमात्रादरे सिकता अपि ।

---

उ०—वैशिष्ट्यं च क्वचित्सामानाधिकरण्येन, क्वचित्करणत्वेन । विक्लित्तिशब्देनाऽत्र विक्लेदनमेव । एवं च तण्डुलानां धात्वर्थफलाश्रयत्वाऽविवक्षणान्न द्वितीयेत्यर्थः । षष्ठी त्वोदनयोगे इति भावः । नन्वेवं विक्लित्तेः संबन्ध्याकाङ्क्षाऽनिवृत्तेत्यत आह—सा चेति । ननु पूर्वोक्तेऽर्थेऽपि मातुः स्मरतीतिवत्कर्मणः शेषत्वेन षष्ठीप्रयोगसिद्धे विकारयोगे षष्ठीति भाष्यमनुपपन्नमिति चेन्न, ओदनस्य संबन्ध्याकाङ्क्षासत्त्वेन क्रियायाश्च तदनाकाङ्क्षत्वेन तथोक्तेः । षष्ठ्यन्तस्य साकाङ्क्षत्वाऽन्वययोग्यनामसमभिव्याहारे तत्रैवाऽन्वय इत्युत्सर्गतो व्युत्पत्तेश्चेति दिक् ।

ईप्सिततमत्वमिति । ईप्सितशब्दोऽभिप्रेतपरो रूढ इति पूर्वपक्ष्याशयः । ननूद्देश्यत्वाद्यभ्यादि ईप्सिततममत आह—दधीति । संस्कारकत्वेनैव तदुद्देश्यम्, न तु साक्षात्फलाश्रयत्वेनेत्यर्थः । अन्यथा दधिपयोमात्रभोजनेनाऽपि कृती स्यात् । ननु गुणेष्वादराऽभावे दधिसत्ताज्ञानात्पूर्वमपि प्रवृत्तिः स्यादत आह—केवलेष्विति । मृदुविशद इति । द्वन्द्वे प्रयोगानुपपत्तिरत आह—कर्मधारय इति । यदीति । एवं च यथा तत्र तथागुणविशिष्ट ओदन एवेप्सितः, एवमिहापि दध्यादिविशिष्ट ओदन ईप्सित इति भावः । अत्रेदं बोध्यम्—'तस्याप्योदन एवे'त्यादावुत्तरं क्रियाशब्दोऽयमित्याशयेनैव । ओदन एव फलाश्रयत्वविवक्षा, न तु गुणे दध्यादौ तन्मात्रेऽनुरोधः फलाश्रयत्वविवक्षेत्यक्षरार्थः । दृष्टान्तेऽसम्भवात्तद्विवक्षा, दार्ष्टान्तिके ऐच्छिकीति भेदः । ईप्सिततमत्वं 'वारणार्थे'सूत्रोक्तरीत्या तद्धात्वर्थफलत्वेनेच्छाविषयत्वरूपमेव भाष्यसंमतम् । अन्यथा विशिष्टस्याभिप्रेतत्वे विशेषणस्याऽभिप्रेतत्वात्समावेशानुपपत्तिः, पक्षकस्य प्रातिपदिकार्थत्वात् । उभयविवक्षायां तु परत्वात्कर्मत्वमेव सत्यभिधाने,

**ईप्सितस्य कर्मसंज्ञायां निर्वृत्तस्य कारकत्वे कर्मसंज्ञाप्रसङ्गः क्रियेप्सितत्वात् ॥ १ ॥**

ईप्सितस्य कर्मसंज्ञाय निर्वृत्तस्य कारकत्वे कर्मसंज्ञा न प्राप्नोति । गुडं भक्षयतीति । किं कारणम् ? 'क्रियेप्सितत्वात्' । क्रिया तस्येप्सिता ।

**न वोभयेप्सितत्वात् ॥ २ ॥**

न वैष दोषः । कि कारणम् ? 'उभयेप्सितत्वात्' । उभयं हि तस्येप्सितम् । आतश्चोभयं यस्य हि गुडभक्षणे बुद्धिः प्रसक्ता भवति नासौ लोष्टं भक्षयित्वा कृती भवति ॥ यद्यपि तावदत्रैतच्छक्यते वक्तुम्, ये त्वेते राज-

प्र०- ईप्सितस्येति । ईप्सिततममेवेप्सितपदेन सामान्यशब्देन निर्दिष्टम् । विशेषेषु सामान्यस्य भावात् । तत्र यन्निर्वृत्तं क्रिययाऽनाधेयविकारं क्रियानिष्पत्त्यर्थं केवलमुपादीयते तत्क्रियासंबन्धात् प्राप्यमपि नेप्सितमिति तस्य कर्मसंज्ञा न प्राप्नोति । यत्र हि कर्मार्था क्रिया, निष्पत्तिःसंस्कारःप्रतिपत्तिर्वा तत्र कर्मेप्सितम् । अन्यत्र तु क्रियैव प्रतीयमानसंदर्शनादिक्रियापेक्षयेप्सितेति भावः । गुडं भक्षयतीति । भक्षणाय गुडस्योपादानं, न तु गुडाय भक्षणानुष्ठानम् ।

न वेति । गुडभक्षणं यस्येप्सितं तस्य गुडो भक्षणक्रिययेप्सितः । यस्मान्नाऽसौ गुडस्य दर्शनस्पर्शनादिना कृती भवति, नापि लोष्टादिभक्षणेनेति न भक्षणमात्रमीप्सितं नापि गुडमात्रमित्यर्थः । ये त्वेत इति । ते हि यां कांचित् क्रियामनुष्ठाय कालमति-

उ०-'आकडार'सूत्रे 'करणं पराणी'त्यस्याऽसिरिछनत्तीति कर्तृसंज्ञाविषये एवोदाहरणदानात्तदभिधानसन्देह इति नाऽस्य तदा तमपा कर्मत्ववारणमुचितम् । नवीनग्रन्थास्तु चिन्त्या एव, क्रियाशब्दत्वेपि सनेष्यमाणत्वस्याऽति गर्भीकरणात् ।

शङ्कते भाष्ये—ईप्सितस्येत्यादि । नन्वीप्सिततमस्य कर्मत्वादीप्सितस्येत्यनुवादोऽयुक्तोऽत आह—ईप्सिततममेवेति । तमस्याऽन्यार्थत्वमभिप्रेत्य तावत एवोल्लेख इत्यन्ये । ननु निर्वृत्तस्यापि काष्ठादेर्विकार्यस्येप्सिततमत्वं विकारवत्तयाऽस्त्येवेत्यत आह—अनाधेयविकारमिति । प्राप्यमपीति । क्रियाजन्यसंयोगादिरूपफलाश्रयमपीत्यर्थः । नेप्सितं—नाभिप्रेतम् । निष्पत्तिसंस्कारप्रतिपत्तीति । निष्पत्तिः—कटादेः । संस्कारः—प्रोक्षणादिना व्रीह्यादेः । प्रतिपत्तिः—दाहादिना हविरादेः । ननु कर्तृक्रिययाप्तुमिष्यमाणं कर्मेत्यर्थस्तत्र कथं क्रिया स्वात्मनेप्सिता भवेत् । एवं च 'क्रिया तस्येप्सिते'ति भाष्यमनुपपन्नमत आह—प्रतीयमानसंदर्शनादीति । तज्जन्यारम्भक्रियापेक्षयेत्यर्थः । ननु गुडभक्षणस्येप्सितत्वे गुडोऽपि तथेत्यत आह—भक्षणायेति । भक्षणक्रियोत्पत्त्यर्थमित्यर्थः । शङ्कते भाष्ये—ये त्वेत इति

कर्मिणो मनुष्यास्तेषां कश्चित्कंचिदाह—'कटं कुर्वि'ति । स आह—'नाहं कटं करिष्यामि, घटो मयाऽऽहृत' इति । तस्य क्रियामात्रमीप्सितम् ॥ यद्यपि तस्य क्रियामात्रमीप्सितं, यस्त्वसौ प्रेषयति तस्योभयमीप्सितमिति ॥४९॥

## [1]तथा युक्तं चानीप्सितम् ॥ १ । ४ । ५० ॥

किमुदाहरणम् ? 'विषं भक्षयती'ति । नैतदस्ति । पूर्वेणाप्येतत्सिध्यति । न सिध्यति । 'कर्तुरीप्सिततमं कर्म' [ १. ४. ४९ ] इत्युच्यते, कस्य च नाम विषभक्षणमीप्सितं [2]स्यात् । विषभक्षणमपि कस्यचिदीप्सितं भवति ।

प्र०–आहयन्ति, न तेषां द्रव्यविशेषे तात्पर्यम् । ततश्च 'नाहं कटं करिष्यामी'त्यत्र कटस्य कर्मत्वानुपपत्त्या द्वितीया न प्राप्नोतीति कटकर्मिका क्रिया न निषिद्धा भवेत् । तथा 'घटो मयाऽऽहृत' इत्यत्र घटस्य कर्मत्वाऽभावादाहृत इत्यत्र कर्मणि निष्ठा न प्राप्नोति । यस्त्वसौ प्रेषयतीति । प्रयोजकचित्तानुवर्तनं तस्य स्वार्थसिद्धये कर्तव्यम् । यदा च विशिष्टकर्मिका क्रिया तेन संपाद्यते तदाऽऽज्ञानुष्ठिता भवतीति प्रयोजकवत्प्रयोज्यस्याप्युभयमीप्सितमिति भाष्यकारस्याऽभिप्रायः । अन्ये तु प्रयोजककर्त्रपेक्षया प्रयोज्यस्य कर्तुरनीप्सितमपि कर्मेत्याचक्षते । तत्तु प्रयोजकव्यापारस्याऽशब्दार्थत्वात् पूर्वोक्तोदाहरणेऽयुक्तमिति न्यायविदो मन्यन्ते ॥४९॥

तथा युक्तं । कस्य च नामेति । 'विषमिति वक्तव्ये 'विषभक्षण'मिति किमर्थमुच्यते । यदि भक्षणमीप्सितं तदा विषमपीप्सितं, विषभक्षणस्य त्वनीप्सितत्वे विष-

उ०–ननु क्रियामात्रेप्सायां हस्तचालनमात्रेणापि तिष्ठेयुरत आह—यां कांचिदिति । स्वाभ्यभिमतामित्यर्थः । वेतनग्रहणे तात्पर्यात् । ततश्चेति । कटस्याऽनिष्यमाणत्वात् । तच्च 'नाहं करिष्यामी'ति शब्देन प्रतिपादितम् । आहरणक्रियया च घटे निष्पाद्यत्वाऽभावः स्पष्ट एव, आहरणकर्तुरभिप्रेतत्वाऽभावश्चेति घटस्य कटस्य च तत्वाऽभाव एवेति भावः । समाधत्ते—यद्यपि तस्येत्यादिना । ननु प्रेषयितुरुभयेप्सायामपि न प्रेष्यस्येति तदीयप्रयोगे तयोः कर्मत्वाऽप्राप्तिस्तथैवेत्यत आह—प्रयोजकेत्यादि । स्वार्थो—वेतनलाभः ॥४९॥

तथा युक्तं । तथेति भिन्नं पदम् । ईप्सिततमवत्क्रियाजन्यफलाश्रय इत्यर्थः । भाष्ये—किमुदाहरणमिति । पूर्वेण सिद्धिं मन्वानस्य प्रश्नः । कस्य च नामेति । सनेच्छाविषयत्वस्य बोधमात्रकः । तदा विषमपीति । कर्मताऽऽकाङ्क्षितभक्षणस्याऽभावादित्यर्थः । ननु सुख-

१–'तथायुक्तं' पा० । नागेशमते तु 'तथेति' भिन्नं पदम् । २–'भवति' पा० ।

कथम् ? इह य एष मनुष्यो दुःखार्तो भवति सोऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव ज्यायो मन्यते । आतश्चेप्सितं यत्तद्भक्षयति ॥ यत्तर्ह्यन्यत्करिष्यामीत्यन्यत्करोति तदुदाहरणम् । किं पुनस्तत् ? ग्रामान्तरमयं गच्छंश्चौरान् पश्यति, अहिं लङ्घयति, कण्टकान्मृद्नातीति' ।

ईहेप्सितस्यापि कर्मसंज्ञाऽऽरभ्यतेऽनीप्सितस्यापि यदिदानीं नैवेप्सितं नाप्यनीप्सितं तत्र कथं भवितव्यम्—ग्रामान्तरमयं गच्छन्वृक्षमूलान्युपसर्पति, कुड्यमूलान्युपसर्पतीति ? अत्रापि सिद्धम् । कथम् ? 'अनीप्सित'मिति नाऽयं प्रसज्यप्रतिषेधः—'ईप्सितं ने'ति । किं तर्हि ? पर्युदासोऽयं—'यदन्यदीप्सितात्तदनीप्सित'मिति । अन्यच्चैतदीप्सिताद्यन्नैवेप्सितं नाप्यनीप्सितमिति ॥५०॥

प्र०—मपि प्राणहरत्वादनीप्सितं भवति । भक्षणक्रियया च विषं नेप्सितं, परिहारादिक्रियापेक्षया तु तदीप्सितं भवत्येवेति भक्षणग्रहणेन प्रदर्श्यते । विषभक्षणमपीति । यथा ईप्सिततमे लोकस्य सुखप्राप्त्यर्था क्रियायां प्रवृत्तिस्तथा भयादिभ्यो दुःखनिवृत्त्यर्थापि विषादिष्वित्यर्थः । चौरान्पश्यतीति । विषयेन्द्रियसंबन्धसामर्थ्याद्दर्शनेनाप्तुमनिष्टतमा अपि चौरास्तथायुक्ताः पूर्वेणाऽसिद्धकर्मभावा अनेन कर्मसंज्ञया संबध्यन्ते ।

ईप्सितस्यापीति । ईप्सिततमस्यापीत्यर्थः । नायं प्रसज्यप्रतिषेध इति । यथाऽधर्मोऽनृतादिभिरुत्तरपदार्थप्रतिपक्षभूतं वस्तु तत्प्रतिषेधद्वारेण प्रतिपाद्यते तथाऽनीप्सितशब्देनापि द्वेष्यं वस्तु यदभिधीयते तदेव न गृह्यते, किं तु सर्वमीप्सितादन्यदित्यर्थः ॥५०॥

उ०—साधने एव लोके इप्सितत्वं प्रसिद्धं, न चेदं तथाऽत आह—यथेति । दुःखनिवृत्तिसाधनमपि तथेति, भावः । क्रियाशब्द ईप्सितशब्दः, सना तत्तत्क्रियोद्देश्यत्वमात्रमुपलक्ष्यत इत्याशयेन समाधत्ते भाष्ये—आतश्चेति । एवं पराधीनतया द्वेष्यमपि विषं भक्षयतीत्युपपन्नः प्रयोग इति भावः । अनिष्टतमा अपीति । अनुद्देश्या इत्यर्थः । भयजनकत्वात् । इदमपि [illegible]ध्यं कर्मेति भावः । पूर्वेणाऽसिद्धेति । सनोद्देश्यत्वं विवक्षितम् । न ह्येते दर्शनादिक्रियोद्देश्या इति भावः ।

ननु प्रसज्यप्रतिषेधे ईप्सितं कर्म नेत्यर्थः स्यात्स चाऽयुक्तः पूर्वेण कर्मत्वस्येष्टत्वात आह—यथेति । एवं च 'नायं प्रसज्यप्रतिषेध' इत्यस्य नायं प्रतिपक्षवाचीत्यर्थः । प्रतिषेधस्य भावविरोधित्वात्तेन तदर्थलक्षणाऽत्र । 'ईप्सितं ने'त्यस्य च यदीप्सितप्रतिपक्षभूतं तदेव मोच्यते इत्यर्थः । 'किं तर्ही'त्यादेश्च भिन्नमात्रमस्यार्थ इति भावः । तत्प्रतिषेधद्वारेणेति । आरोपितत्वबोधद्वारेणेत्यर्थः । धर्मभिन्नबोधेऽपि प्रतिपक्षभूतमेव धर्मभिन्नं गृह्यते तथाऽत्र नेत्यर्थः ॥५०॥

---

१—'इति' क्वचिन्न ।

## अकथितं च ॥ १ । ४ । ५१ ॥

केनाऽकथितम् ? अपादानादिभिर्विशेषकथाभिः ॥ किमुदाहरणम् ?

प्र०— अकथितं च । केनेति । किं साधारणया कारकसंज्ञया, अथ विशेषसंज्ञाभिरपादानादिभिरिति प्रश्नः । अपादानादिभिरिति । कर्तरि करणे वाऽत्र तृतीया । भूतकालश्चाऽत्र न विवक्ष्यते । यथा 'पराजेरसोढ' इत्यत्राऽग्रहिष्यमाणस्याप्यापादानसंज्ञा भवति,—अध्ययनात्पराजेष्यत इति । तेन हेतकर्तृसंज्ञाभ्यां कथयिष्यमाणस्यापि कर्मसंज्ञा न भवति । इह 'कारक' इत्यनुवर्तनात्सत्येव कारकत्वेऽकथितस्य कर्मसंज्ञया भाव्यमिति सामर्थ्याद्विशेषकथाभिरकथितत्वमाश्रीयते । प्रश्नप्रतिवचनाभ्यां चाऽसङ्कीर्तितवचनोऽकथितशब्दो, न त्वप्रधानवाची रूढिशब्दोऽत्राश्रित इति दर्शितम् । रूढिषु हि व्युत्पत्त्यर्थमेव क्रियोपादीयते, न तु प्रवृत्तिनिमित्तत्वेन । तथा च 'गच्छतीति गौ'रिति व्युत्पत्तावपि यथा गच्छतीत्युक्ते केनेति प्रश्ने रथेनेति प्रतिवचनं भवति तथा गौरित्युक्ते प्रश्नप्रतिवचने न भवतः ॥ किमुदाहरणमिति । 'नटस्य शृणोती'त्यादावपि

उ०— अकथितं च । 'कथ वाक्यप्रबन्धे' इत्यस्माण्णिजन्तः क्रियाशब्दोऽयम् । तत्र कथनस्य करणाकाङ्क्षत्वाद्द्वयोश्चोपस्थितत्वादाह—किमिति । करणस्याऽपि कर्तृत्वेन विवक्षामभिप्रेत्याह—कर्तरीति । भूतकालश्चात्र न विवक्ष्यत इति । तत्फलं तु निवृत्तैकप्रेषणदुहादिभ्यो णिचि दुहसमानार्थत्वेन गत्यादिनियमात्कर्तुरीप्सिततममित्याद्यप्राप्तौ प्रयोज्यकर्तुर्गवादेः कर्तृत्वात्तदविवक्षया धुक्जनकत्वविवक्षायां बोध्यम् । न च प्रयोज्यस्य कर्तृत्वाऽविवक्षायां कर्तुः प्रयोजकत्वाऽभावाण्णिजनापत्तिः । अन्तरङ्गत्वात्पूर्वं णिचि ततस्तस्याऽविवक्षणात्, 'तत्प्रयोजक' इत्यत्र तत्पदेन स्वतन्त्रस्योपलक्षणाद्वा । अत एव 'ग्रामं गमयती'त्यादिसिद्धिरिति भावः । परं त्वत्र मानं चिन्त्यम् । किं च गत्यादिनियमेन परत्वादस्याऽपि बाधो दुर्वार इति दिक् । 'न भवती'ति क्वचित्पाठः । पूर्वोक्तविषयाऽभावेन कर्तृत्वविवक्षायामपि स्यात्, अधुना तु नेत्यर्थः । परया कर्तृसंज्ञया बाधाच्चिन्त्यमिदम् । 'कर्मसंज्ञा भवती'तिपाठे 'तस्याऽविवक्षाया'मित्यादिः । परं तु स पाठोऽप्युक्तरीत्या चिन्त्य एव । नन्वेवमपि कारकसंज्ञयाऽकथितत्वमेव किं नाश्रीयतेऽत आह—इहेति । न त्वप्रधानवाचीति । तद्ग्रहणे हि दुहादिव्यतिरिक्तविषये साधकतमाधिकरणापादानविषये 'गोर्दोग्धि पय' इत्यादावपधित्वविवक्षायामपि परत्वादनेन कर्मत्वापत्तिरिति भावः । प्रश्नप्रतिवचनाभ्यां रूढ्यग्रहणं कथमिति व्युत्पादयति—रूढिषु हीति । रूढ्याऽवयवार्थतिरस्काराद्योगार्थस्य तत्र भानमेव नास्तीति भावः । न च 'रूढिर्योगमपहरती'तिन्यायाद्यौगिकार्थस्यैव कथं ग्रहणं, न चाऽनिष्टनिवारणाय तत्, लक्षणैकचक्षुष्कानां लक्ष्यायत्तप्रमाणस्थितेरभावादिति वाच्यम् । लक्ष्यैकचक्षुष्कभाष्यकारादिव्याख्यानेन तस्यैव ग्रहणादित्याहुः ।

अपवादत्वादि चिन्त्यम् । 'नटस्य शृणोती'त्यादेः संभवात् । व्यापिःकरणं कथं

## दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।

प्र०—कर्मसंज्ञाप्रसङ्ग इति प्रश्नः । अथवापादानादिभिः सर्वस्य विषयस्य व्यापनादुदाहरणाऽसंभवं मत्वा पृच्छति ।

उपयोगनिमित्तमिति । उपयुज्यत इत्युपयोगः—पयःफलादि, तस्य निमित्तं—गवादि । अनेन 'गां दोग्धि पय' इत्यत्र पयस उपयुज्यमानत्वादीप्सिततमत्वं, गोस्तु पयोऽर्थत्वादपादानस्याऽनीप्सिततमत्वं दर्शयति । तथायुक्तत्वाऽभावाच्च गोस्तथा युक्तमित्यनेनापि कर्मसंज्ञा न सिध्यति । अपूर्वविधाविति । 'पूर्वत्व'मन्यत्वोपलक्षणमिति

उ०—शृणोतीत्यर्थे तूपयोगे इत्यस्य वैयर्थ्यापत्त्याऽनभिधानेन तस्य प्रयोगस्याऽभावात् । अत एव प्रत्याख्यानेन फलैक्यसिद्धिः । तस्य निमित्तमिति । कर्मनिष्ठधात्वर्थविशिष्टस्य कर्मणो निमित्ततया संबन्धीत्यर्थ इति वदन्ति । स्पष्टमिदं सूत्रशेषे भविष्यति । एतत्फलं तु करणभूतपाण्यादिनिवृत्तिः । तस्य दोग्धृव्यापारजनकतयाऽन्यथासिद्धत्वेन विभागविशिष्टपयोरूपकर्मणोऽनिमित्तत्वात् । यत्तु वृत्तिकृता तस्याप्युपयोगनिमित्तत्वमुपेत्याऽपूर्वविधाविर्त्यनेन वारणं कृतं—'विहिता तत्र करणादिसंज्ञे'ति, तन्न गवादीनामपादानत्वाद्यविवक्षायामिवाऽत्रापि करणत्वाद्यविवक्षायां कर्मत्वापत्तेर्दुर्वारत्वात् । उपयोगपदेन मुख्यं कर्मेत्युक्तम् । 'तस्य निमित्त'मित्यनेन धात्वर्थव्यापारात्प्राक्तत्संबद्धत्वमुक्तम् । 'अन्ववरुणद्धि गां व्रज'मित्यत्रापि पुनर्निर्गमप्रतिबन्धेन स्थितिस्थैर्यमर्थः । एवं च तत्र प्रतिबन्धाऽनुकूलव्यापारात्प्राग्व्रजस्य गोसंबन्धोऽस्त्येव । उपयोगसाहचर्याच्चाऽग्रे गुणपदेनाप्यस्यैव ग्रहणम् । तेन संबध्यते धात्वर्थव्यापारान्तरमित्यर्थं बहवः ।

अनीप्सिततमत्वं दर्शयतीति । इदं च विभागजन्यबहिर्देशसंयोगानुकूलव्यापारार्थत्वे दुह्धातोर्बोध्यम् । यदा तु त्याजनाऽर्थस्तदा प्रयोजकव्यापारेणेप्सिततमत्वमस्त्येवेति बोध्यम् । इदं वाक्यकारसूत्रभाष्ये ध्वनितम् । तथायुक्तत्वाभावाच्चेति । फलाश्रयत्वाऽभावादित्यर्थः । अपूर्वविधाविति । कर्मसंज्ञापेक्षया पूर्वसंज्ञानां विधिविषयाऽभावे इत्यर्थः । यत्त्वेतद्विधेयकर्मसंज्ञापेक्षया पूर्वसञ्ज्ञाविषयाभावे इत्यर्थं इति, तन्न । अनेन वा पूर्वेण वा कर्मत्वे विशेषाऽभावात् । न च पूर्वविषयकर्मत्वाऽविवक्षायां कर्मत्वार्थमिदं षष्ठ्यपवादः । एवं च संबन्धत्वेन बोधार्थमिदमिति वाच्यम् । सर्वसूत्रबोधिते कर्मसंज्ञकेऽर्थे विहितप्रत्ययानां कर्मत्वव्यक्त्यैव कर्मबोधकत्वात् । किं च 'कृत्त'रित्याद्यपि षष्ठ्यपवाद एव, तदभावे तद्विषये षष्ठ्या एव प्राप्तेः । अनेनाऽपादानत्वाद्यविवक्षायां, सर्वथा तदप्राप्तौ वा गवादेर्जनकत्वसमानाधिकरणशक्तिविशेषेणाऽन्वयविवक्षायामनेन कर्मत्वं भवतीत्युक्तम् । 'परविधावपी'त्याद्युक्तम्,

१—'प्रच्छि' पा० ।

श्रुविशासिगुणेन च यत्सचते तदकीर्तिमाचरितं कविना ॥

दुहि—गां दोग्धि पयः ॥ नैतदस्ति । कथिताऽत्र पूर्वाऽपादानसंज्ञा* ।

प्र०-परविप्रतिषेधापवादीयं संज्ञा न भवति । श्रुविशासिगुणेनेति । श्रुविशास्योर्गुणः साधनं प्रधानं कर्म धर्मादिकं, तेन च यत्सचते संबध्यत इत्यर्थः । क्रियायाः साध्यत्वात्प्राधान्यं, तदर्थत्वात्प्रवृत्तेः, कारकाणां गुणत्वम् । कविनेति । कविशब्दो मेधाविवचनः, क्रान्तदर्शनात् । दुह्यादीनां चार्थोपलक्षणायोपादानात्पर्यायप्रयोगेपि कर्मसंज्ञा भवति । ननु 'गां दोग्धि पय' इत्यस्याऽयमर्थः—गौः पयस्त्यजति, देवदत्तो गवा पयस्त्याजयति । तत्र प्रयोजकव्यापारेणाऽऽप्यमानत्वाद्गोः सिद्धं कर्मत्वम् । नैतदस्ति । यथा ण्यन्तेषु धातुषु क्रियाविष्टः प्रयुज्यत इति प्रतीतिः, नैवमिह, निष्क्रियस्यापि गवादेर्दोहनादिषु विनियोगात् ।

गां दोग्धीति । दोहेनाप्यमानत्वेपि गोरीप्साप्रकर्षाऽभावात्तमप उपादानात्प्रक-

उ०-ष्टकरीतेः । गुणः साधनमिति । क्रियानिरूपितं शाब्दं गुणत्वम् । आर्थं तूद्देश्यत्वात् प्राधान्यमिति बोध्यम् । सचत इति । 'धात्वर्थव्यापारादनन्तर'मिति शेषः । 'षच सेचने'-इत्यतोऽनुदात्तेतः संबन्धार्थात् कर्मव्यापारे वर्तमानादात्मनेपदम् । 'षच समवाये' इत्ययं तु परस्मैपदी । भाष्ये—आचरितम् । व्यवहृतमित्यर्थः । क्रान्तदर्शनादिति । क्रान्तदर्शनत्वादित्यर्थः । 'कविः क्रान्तदर्शनो भवती'ति निरुक्तादिति भावः । क्रान्तानि दर्शनानि येनेति विग्रहः । स चाऽत्र पाणिनिरिति बोध्यम् । अर्थोपलक्षणायेति । अत एव 'शाकारमपि चोदित' इति 'परस्मैपदाना'मितिसूत्रे भाष्ये पृच्छिपर्यायस्य चुदेर्द्विकर्मकप्रयोगः सङ्गच्छते । केचित्तु चुदेर्व्यापारद्वयार्थत्वे 'कर्तु'रित्यनेन द्विकर्मकत्वे प्रधानव्यापारजन्यफलाश्रयत्वेन प्रधानकर्मणि क्तेनोक्तप्रयोगोपपत्तेरर्थपरत्वे मानं चिन्त्यमित्याहुः ।

गवा पय इति । इदं चिन्त्यम् । 'त्याजितैः फलमुत्खातै'रित्यादिप्रयोगात्,

'तारेर्मोहेस्तथा मोचेस्त्याजेर्दापेश्च संग्रहः ।

कारिकायां चशब्देन सुधाकरमुखैः कृतः ॥'

इत्युक्तेश्च गत्यादिसूत्रे एषामुपसङ्ख्यानावश्यकतया कर्तरि तृतीयाया दुर्लभत्वादिति केचित् । वस्तुतस्तु भाष्यानुक्तत्वेन, गमकाऽभावेन च गत्यादिसूत्रे नोपसङ्ख्यानम् । 'त्याजितै'रित्यादिप्रयोगाश्च चिन्त्या एव, कैयटस्वरसादित्याहुः । सिद्धं कर्मत्वमिति । 'कर्तुरीप्सिततम'मित्यनेन । निष्क्रियस्यापीति । तद्व्यापाराऽप्रतीतावपि दोहनादिविषयेऽस्य प्रयोगादित्यर्थः । एवं च विभागजन्यसंयोगानुकूलव्यापारमात्रस्य धात्वर्थत्वे गोरवधित्वात्तद्विवक्षायामिदमावश्यकमिति भावः । दोहेनाप्यमानत्वेपीति । दुह्धात्वर्थगोपनिष्ठव्यापारजन्य-

* ध्रुवमपायेऽपादानम् १. ४. २४.

दुहि ॥ याचि—इदं तर्हि—पौरवं गां याचत इति ॥ नैतदस्ति । कथिताऽत्रापि पूर्वाऽपादानसंज्ञा* ॥ न याचनादेवाऽपायो भवति । याचितोऽसौ यदि ददाति ततोऽपायेन युज्यते । याचि ॥ रुधि—अन्ववरुणद्धि गां व्रजम् ॥ नैतदस्ति । कथिताऽत्र पूर्वाधिकरणसंज्ञा† । रुधि ॥ प्रच्छि—माणवकं पन्थानं पृच्छति ॥

प्र०–षेस्य विवक्षितत्वादप्राप्ता कर्मसंज्ञाऽनेन विधीयते । दुह्यादिपरिगणनान्नटस्य शृणोतीत्यादौ न भवति । कथिताऽत्रेति । गोः पय आदत्त इत्यर्थाऽवगमात् । पौरवं गामिति । पौरवेण गां दिदापयिषत इत्यर्थः प्रतीयते, गोश्चेप्सिततमत्वं, न पौरवस्य । कथिताऽत्रेति । 'पौरवाद्गां जिघृक्षत' इत्यर्थसम्प्रत्ययात् । न याचनादेवेति । याचिताऽपि याचनकाले नाऽध्यवस्यति, नूनमस्मादिदं वस्तु निर्गत्य मां प्राप्नोतीति भावः । अन्ववरुणद्धीति । गौर्व्रजं प्रविशति, गवा व्रजं प्रवेशयतीत्यर्थः । कथितेति । गां व्रजे स्थापयतीति सम्प्रत्ययाद्व्रजस्य स्थानक्रियापेक्षमाधारत्वम् । माणवकमिति ।

उ०–गोनिष्ठव्यापाररूपफलाश्रयत्वेऽपीत्यर्थः । ईप्साप्रकर्षेति । विभागजन्यसंयोगानुकूलव्यापारानुकूलव्यापारस्य दुह्यर्थत्वे इदम् । उद्देश्यत्वाऽभावाद्व्यापारजन्यफलाश्रयत्वाऽभावाच्च तत्तु पयस्येवेति भावः । अप्राप्तेति । 'तथा युक्त'मित्यपि न, ईप्सितत्वस्य सत्त्वेनाऽनीप्सितत्वाभावादिति बोध्यम् । चिन्त्यमिदम् । 'गां दोग्धि पयः परत्वात्कर्तुरीप्सिततममिति कर्मत्व'मित्याकडारसूत्रस्थभाष्यविरोधात् । तत्र सूत्रे धातूपात्तफलाश्रयत्वरूपस्येप्सिततमत्वस्य ग्रहाच्च । तस्मात्पयोनिष्ठविभागजसंयोगानुकूलव्यापारस्यैव धात्वर्थत्वे इदं भाष्यमिति तत्त्वम् । एवमग्रेपि । एवंरूपेऽर्थेऽपादानत्वाऽविवक्षाभिप्रायेण सिद्धान्तिन उदाहरणदानं, तदजानतः पूर्वपक्षिणः खण्डनमित्येव सारम् । किं च 'तण्डुलानोदनं पचती'त्यत्र द्व्यर्थत्वेन द्वयोरपि 'कर्तु'रित्येव कर्मत्वमिति तत्सूत्रस्थभाष्यविरोधः । त्वद्रीत्या गवीव तण्डुलेष्वपीप्साप्रकर्षाऽभावात् । ननु विभागजसंयोगानुकूलव्यापारार्थकत्वेऽपादानत्वाऽप्राप्तेराह—गोः पय इति । एवं चेदर्थकदुह्धातुयोगेऽपादानत्वप्राप्त्याऽस्याऽप्रवृत्तिः । पूर्वोक्तार्थे तु सिद्धमेव कर्मत्वमिति भावः । एवमग्रेपि बोध्यम् । अत एव 'सिद्धाऽत्र कर्मसंज्ञे'ति 'कथिता पूर्वा कर्मसंज्ञे'ति वा नोक्तम्, कर्मसंज्ञाया विधेयत्वात्तदतिरिक्तपूर्वविधेरेवाऽपूर्वविधावित्यत्र ग्रहणौचित्यादिति तात्पर्यम् । तदविवक्षायामुदाहरणत्वं त्वसौ न जानाति । ननु बुद्धिकृताऽपायमादाय संज्ञा स्यादत आह—याचिताऽपीति । एवं च बुद्धिकृतस्याऽपि तस्याऽभाव इति भावः । गवा व्रजमिति । बलात्कारेण प्रवेशनस्यैवावरुध्यर्थतया चाऽयं समानार्थो रुधेरिति भावः । गौर्व्रजे तिष्ठति गां व्रजे निर्गमप्रतिबन्धेन स्थापयतीत्यर्थोऽभिप्रायेणैवोदाहरणमधिकरणत्वाऽविवक्षाभिप्रायेण । तदजानतस्तु खण्डनं पूर्ववत् । बुद्धिकृतोऽ-

* ध्रुवमपायेऽपादानम् १. ४. २४. † आधारोऽधिकरणम् १. ४. ४५.

नैतदस्ति । कथिताऽत्र पूर्वाऽपादानसंज्ञा* ॥ न प्रश्नादेवाऽपायो भवति । पृष्टोऽसौ यदाचष्टे ततोऽपायेन युज्यते । प्रच्छि ॥ भिक्षि–पौरवं गां भिक्षते ॥ नैतदस्ति । कथिताऽत्र पूर्वाऽपादानसंज्ञा* ॥ न भिक्षणादेवाऽपायो भवति । भिक्षितोऽसौ यदि ददाति ततोऽपायेन युज्यते । भिक्षि ॥ चिञ्—वृक्षमवचिनोति फलानि ॥ नैतदस्ति । कथिताऽत्र पूर्वाऽपादानसंज्ञा* ॥ ब्रुविशासि[1]—ब्रुविशासिगुणेन च यत्सचते—सम्बध्यते तच्चोदाहरणम् । किं पुनस्तत्? पुत्रं ब्रूते धर्मम्, पुत्रमनुशास्ति धर्ममिति ॥ नैतदस्ति । कथिताऽत्र पूर्वा संप्रदानसंज्ञा× ॥ तस्मात् त्रीण्येवोदाहरणानि । पौरवं गां याचते, माणवकं पन्थानं

प्र०—आचिख्यापयिषति पन्थानं माणवकेनेत्यर्थः । कथितेति । 'माणवकान्मार्गोपदेशं जिघृक्षत' इति सम्प्रत्ययात् । न प्रश्नादेवेति । प्रश्नमात्रमनङ्गीकृताऽपायं धात्वर्थ इत्यर्थः । भिक्षिर्याचिवद्व्याख्येयः । अथ याचिभिक्ष्योरेकार्थत्वात्किमर्थमुभयोरुपादानम्? उच्यते—अनुनयार्थस्याऽपि याचेर्ग्रहणार्थम् । तेनाऽविनीतं विनयं याचत इत्यत्रापि कर्मसंज्ञा भवति । वृक्षमिति । वृक्षेण त्याजयति फलानीत्यर्थः । कथितेति । वृक्षात् फलान्यादत्त इत्यर्थाऽवसायात् । पुत्रमिति पुत्रो धर्मं प्रतिपद्यते, पुत्रं धर्मं प्रतिपादयतीत्यर्थः । कथितेति । धर्मेण वचनानुशासनकर्मणा पुत्रस्याऽभिप्रेयमाणत्वात् ।

उ०—अपायो नास्तीत्याह—प्रश्नमात्रमिति । एवं च प्रश्नस्य विश्लेषाऽजनकत्वेन पृच्छिं प्रति माणवकस्याऽपादानत्वं न प्रसक्तमिति भावः ।

अनुनयार्थस्यापि याचेरिति । भिक्षेरप्युभयार्थत्वेन विनिगमनाविरहाच्चिन्त्यमिदम् । किं चोभयार्थकयाचिग्रहणेनैव सिद्धे भिक्षिग्रहणमर्थग्रहणाऽभावे लिङ्गमेवोचितम् । एवं च 'वृक्षमवचिनोती'त्यपि वृक्षात्फलान्यादत्त इत्यर्थे एवोदाहरणम् । तदविवक्षायामुदाहरणमिति तु न जानाति पूर्वपक्षी । विषयतासंबन्धाऽवच्छिन्नज्ञानानुकूलो वचनरूपो व्यापारो ब्रूञादेरर्थः । सम्प्रदानत्वाऽविवक्षायामुदाहरणमिति तु न जानाति । कैयटोक्तार्थे तु 'कर्तु'रिति सिद्धमेव कर्मत्वम् । भाष्ये—तस्मान्त्रीण्येवेति । यदि तेष्वपायाऽप्रतीतिस्तदा त्रीणि ।

* ध्रुवमपायेऽपादानम् १. ४. २४.

१—मुद्रितपुस्तकेषु 'ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना' इति कारिकोत्तरार्धभाग उपलभ्यते । भाष्यस्थानुसारं 'ब्रुविशासि' इति प्रतीकमात्रं कृतमिति ध्यातव्यं समालोचकैः ।

× कर्मणा यमभिप्रैति स सम्प्रदानम् १. ४. ३२.

पृच्छति, पौरवं गां भिक्षत इति ।

अथ ये धातूनां द्विकर्मकास्तेषां किं कथिते लादयो† भवन्त्याहोस्विदकथिते ? कथिते लादयः ॥ कथिते लादिभिरभिहिते गुणकर्मणि का कर्तव्या ?

---

प्र०- अथेति । सर्वोदाहरणवाद्याचार्य उदाहरणत्रयवादिनं स्वमतात्प्रच्यावयितुमाह । इहाऽसङ्कीर्तितपर्यायस्याऽकथितशब्दस्य ग्रहणे विवक्षाभेदाद् 'गां दोग्धि पय'इत्याद्यपि भवति, 'गोर्दोग्धि पय' इत्याद्यपि । पूर्वोक्ते तूदाहरणत्रये कर्मसंज्ञैवेत्येषा व्यवस्था । अप्रधानवचनाऽकथितशब्दोपादाने त्वपादानसम्प्रदानसञ्ज्ञे बाधित्वा दुह्यादिषु कर्मसंज्ञैव स्यादित्यसङ्कीर्तितपर्यायमकथितमिहाश्रितम् । तत्र कर्मणि लादय उत्पद्यमानाः प्राधान्याऽप्राधान्याभ्यां भिन्नकक्ष्यमनेकं कर्म युगपदभिधातुमसमर्थाः किं प्रधानकर्मण्युत्पद्यन्ते अथ गुणकर्मणीति प्रश्नः ।

---

उ०-अकथितत्वं च सर्वथाऽप्राप्ताऽपादानत्वादिकमेव । याचतेश्च स्वत्वनिवृत्ति—स्वस्वत्वोत्पत्त्यनुकूलो व्यापारविशेषोऽर्थः । तत्र स्वत्वे पौरवस्य जनकतासमानाधिकरणनिरूपकत्वेनाऽन्वयः । पृच्छेस्तु जिज्ञासाविषयार्थज्ञानानुकूलो व्यापारोऽर्थः । व्यापारे च माणवकस्य जनकत्वमात्रेणाऽन्वय इत्यप्राप्तकर्मत्वार्थमिदम् । यदि तु तेष्वप्यपायप्रतीतिस्तदा तेष्वपि पूर्वविधिविषयत्वात्तान्यपि नोदाहरणानि । परिगणिताऽतिरिक्ते च तथाऽप्येतत्प्रवृत्तिरिष्टेति सूत्रमिदमसङ्गतमित्येतत्तात्पर्यम् ।

उदाहरणत्रयवादिनमिति । सूत्राऽसङ्गतिवादिनमित्यर्थः । विवक्षाभेदादिति । अपादानत्वविवक्षायां पञ्चमी, तदविवक्षायामनेन कर्मत्वमित्यर्थः । कर्मसंज्ञैवेति । तत्त्रितययोगे सर्वदाऽपायाऽप्रतीतेरिति भावः । 'न हि याचनादेवे'त्यादेर्भाष्ये पूर्वं सिद्धान्त्युक्तित्वात्, 'याचितापी'त्यादिना बौद्धाऽपायाऽभावस्यापि स्वयं कथनादिति तात्पर्यम् । एषा व्यवस्थेति । सिद्धान्तिनः संमतेति भावः । अपादानसम्प्रदानसंज्ञे इति । अपादानत्वादिविवक्षायामपीति भावः । 'अन्ववरुणद्धि गां व्रज'मित्यत्राऽधिकरणसंज्ञाबाधस्यैवमुपलक्षणम् । यदि तु व्रजोऽपि प्रधानं तदा तत्रैव कर्मत्वं स्यादित्यस्योपलक्षणं बोध्यम् । कर्मसंज्ञैवेति । 'तथा युक्त'मित्यस्याऽत्र संबन्धो नास्तीति भावः । प्रश्न इति । सर्वोदाहरणवादिन इति भावः । सूत्राऽसङ्गतिवादिन उत्तरं—कथित इति । 'कर्तुरीप्सिततम'मित्यादिना कृतकर्मसंज्ञे इत्यर्थः । तद्व्याचष्टे—प्रधाने इति । तत्र हेतुमाह—प्रधानेति । कारकत्वाऽभावादिति । कर्त्राद्यन्यतमत्वाऽभावादित्यर्थः । इदं तु सूत्रं मूकमेवाऽपूर्वविधावित्युक्तेरिति भावः । सर्वोदाहरणवादी 'एतत्सूत्रोदाहरणत्वेन संमते गुणकर्मणि का कर्तव्ये'तिसूत्राऽसङ्गतिवादिनं पृच्छति—

---

† कः कर्मणि च भावे चाऽकर्मकेभ्यः ३. ४. ६९.

**कथिते लादयश्चेत्स्युः षष्ठीं कुर्यात्तदा गुणे ।**

कथिते लादयश्चेत्स्युः षष्ठी गुणकर्मणि तदा कर्तव्या । 'दुह्यते गोः पयः' 'याच्यते पौरवस्य कम्बल इति ॥ कथम् ?

**अकारकं ह्यकथितात्**

अकारकं ह्येतद्भवति । किं कारणम् ? '[1]अकथितात्' ।

**कारकं चेत्तु नाऽकथा ॥**

अथ कारकं नाऽकथितम् ॥ अथ कारके सति का कर्तव्या ?

**कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत् ॥**

कारकं चेद्विजानीयाद्या या प्राप्नोति सा [3]सा कर्तव्या । 'दुह्यते गोः पयः' । 'याच्यते पौरवात्कम्बल' इति ।

---

प्र०- कथित इति । प्रधाने ईप्सिततमे इत्यर्थः । प्रधानाऽप्रधानसन्निधौ प्रधानस्यैवाऽभिधानस्य न्याय्यत्वात् । अथवाऽपरः कथितस्यैवाऽभिधानं मन्यते, अकथितस्य तु कारकत्वाऽभावादभिधानाऽसम्भवमवैति । यद्वक्ष्यति 'षष्ठीं कुर्यात्तदा गुणे' इति । अकारकमिति । अपादानादिष्वेव विशेषेषु कारकत्वं सामान्यं स्थितं न तु विशेषरहितस्य सामान्यस्य स्थितिरस्तीति भावः ।

अथ कारक इति । यदा विशेषाश्रयणादस्ति सामान्यमित्यर्थः । यां यामिति । उद्देश्य एव वीप्सा प्रतिपन्नेति 'सा भवे'दिति प्रतिनिर्देशे न विवक्षिता । दुह्यते गोरिति । अपादानं गोः । याच्यते पौरवादिति । ननूदाहरणत्रयवादी

---

उ०—कथिते लादिभिरिति । सूत्राऽसङ्गतिवादी किं गवादि तथापादानत्वादिना न विवक्षितमुत विवक्षितमिति विकल्प्याऽऽद्ये आह—षष्ठीमिति । गुणे—तव गुणकर्मत्वेनाऽभिमते । यदि तूदाहरणत्रयमस्य वादिनोऽभिमतं स्यात्तदा 'पौरवस्य याच्यते' इति षष्ठीकरणमसङ्गतम्, अनेन कर्मत्वे दोषत्वाऽभावादिति बोध्यम् ।

षष्ठ्यां हेतुमाह—अकारकं हीति । अकथितादिति भावप्रधानो निर्देशः । क्वचित् 'अकथितत्वा'दित्येव पाठः । अपादानादिरूपत्वाऽभावात्कारकशेषत्वमित्यर्थः । अत्र सूत्रस्याऽसङ्गत्याऽनेन कर्मत्वस्याऽप्राप्तेरिति भावः । तदेवाह—अपादानादिष्वेवेति । एतदेव व्यतिरेकमुखेनोपपादयति भाष्ये—कारकं चेत्तु नाऽकथेति । एवं चेदं सूत्रमसङ्गतमेवेति भावः । अपूर्वविधावित्यस्य च पूर्वविधिविषयत्वाऽभावे इत्येवाऽर्थो न तु तद्विषयाऽविवक्षायामितीत्यभिमानः । अपादानत्वादिरूपेण विवक्षारूपे द्वितीयपक्षे आह—अथ कारके इति ।

---

१—'अकथितत्वात्' पा० । एवं पाठेऽप्यर्थाभिन्नं भवति । २—'अकथितत्वात्' पा० । ३—अपचिन्त्य ।

**कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे ।**

कथिते लादिभिरभिहिते त्वविधिरेष भवति । किमिदं त्वविधिरिति ? तव विधिस्त्वविधिः । 'त्वमतिः' । किमिदं त्वमतिरिति ? तव मतिस्त्वमतिरिति । नैवमन्ये मन्यन्ते ॥ कथं तर्ह्यन्ये मन्यन्ते ? 'गुणकर्मणि लादिविधिः सपरे' ।

---

प्र०—पौरवस्य कर्मत्वमिच्छत्येवेति कथं पौरवादित्युक्तम् ? अत्रोच्यते,—न्यायस्य समानत्वादत्राप्यपादानत्वं मन्यते । तथा हि—'याच्यतं पौरवात्कम्बल' इत्यस्य पौरवात्कम्बल आदित्स्यत इत्यर्थः । ततो बुद्धिकृतस्याऽत्राऽपायस्य सम्भवः ।

कथित इति । प्रधानकर्मणि लादिभिरभिहिते तवेयं मतिर्यदुक्तं 'गुणे षष्ठी भवति चतुर्थीपञ्चम्यौ चे'ति । तव विधिस्तव मतिरिति । अस्वपदेन विग्रहः । 'त्व'-शब्दस्त्वन्यवाची । यथोक्त 'त त्वः पश्य'न्निति पस्पशायामुक्तम् । युष्मदर्थस्याऽपि त्वपेक्षावशादन्यत्वमस्तीत्येवमुक्तम् । इदानीं न्याय्यं पक्षं दर्शयति—गुणकर्मणीति । लादयो—

---

उ०—तद्व्याचष्टे—यदा विशेषेति । 'अस्ति सामान्य'मित्यस्य 'तदा का कर्मसंज्ञे'ति शेषः । तदा न शेषत्वमिति भावः । कर्मत्वमिच्छत्येवेति । कर्मत्वमेवेच्छतीत्यर्थः । ततो बुद्धिकृतस्येति । एवं च सूत्राऽसङ्गतिरेवाऽस्य मते इति भावः । 'तस्मात् त्रीण्येवे'ति भाष्यं मदुक्तरीत्या व्याख्येयम् । एवं च भाष्ये षष्ठ्युच्चारणवदेवेदं पञ्चम्युच्चारणं पूर्वपक्षिणः, न त्वेतद्वक्तुः सिद्धान्ते याचियोगे पञ्चम्यभिमतेति भ्रमितव्यम् । 'न याचनादेवे'त्यादेः पूर्वं सिद्धान्त्युक्तित्वात् । अत एवा'पादानत्वं मन्यत' इत्युक्तम् ।

सर्वोदाहरणवाप्याह भाष्ये—कथितेऽभिहिते इति । प्रधानकर्मणि लादिभिरभिहिते गुणकर्मणि त्वस्य—अन्यस्य षष्ठ्यादेर्विधिरिति त्वस्य—अन्यस्य संसारविलक्षणस्य मतिरित्यर्थः । 'चतुर्थीपञ्चम्याविति । चतुर्थ्युक्तिर्शास्त्रार्थाभिप्रायेण । इदमुपलक्षणं 'प्रजमवरुणद्धी'त्यत्र सप्तम्यपीति बोध्यम् । ननु तव विधिरित्यर्थे 'त्वद्विधि'रित्यसङ्गतमत आह—अस्वपदेनेति । युष्मच्छब्दोऽप्यहङ्कारानास्पदचेतनत्वेनाऽन्यमेवाऽऽहेत्याह—युष्मदर्थस्येति । तद् ध्वनयन्वक्ष्यति भाष्ये—नैवमन्ये मन्यन्त इति । अनेनेति । परसूत्रसहितैतत्सूत्रविषये दुहादौ । 'गुणकर्मणी'त्याचार्योक्त्या ऽप्रधाने दुहादीना'मित्याचार्यान्तरोक्त्या च सर्वेषामेवैतदुदाहरणत्वम् । 'अपूर्वविधा'वित्यस्य च पूर्वविधिविषयाऽभावे, तद्विषयाऽविवक्षायां चेत्यर्थ इति भावः । अत्र गुणकर्मत्वं—प्रधानकर्मभिन्नत्वम् । प्रधानकर्मत्वं प्रधानकर्तृनिष्ठव्यापारजन्यफलाश्रयत्वम् । तद्देशीयव्यापारार्थकदुहादित्वेन कर्मत्वे फलाश्रयत्वाऽभावात् । ण्यन्ते तु धर्मादेः प्रधानकर्तृव्यापारजन्यफलाश्रयत्वाऽभावादिति बोध्यम् । ये तूद्देश्यत्वाऽनुद्देश्यत्वरूपे, व्यापारद्वयजन्यफलाश्रयत्व—तदभावरूपे वा प्राधान्याऽप्राधान्ये वदन्ति, तेषां दुहादीनां द्व्यर्थतायामपि गवादावीदृशाऽप्राधान्यसत्त्वेन, पयसि च प्राधान्यसत्त्वेन तदादायैवैतदुपपत्तावस्य भाष्यस्य सर्वोदाहरणत्वतात्पर्यानुपपत्तिरेवेति दिक् ।

गुणकर्मणि लादिविधयो भवन्ति सह परेण योगेन—'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ' [ १. ४. ५२ ] इति ।

प्र०—ल-कृत्य-क्त खलर्थाः। गौर्दुह्यते पयः। गौर्दोग्धव्या पयः। गौर्दुग्धा पयः। गाः सुदोहा पयः। अनेन दुह्यादयः सर्वे एवोदाहरणानीति दर्शितम्। तत्र सत्यप्यपायो यदा न विवक्ष्यते निमित्तभावमात्रविवक्षैव तु गोस्तदाऽनेन कर्मता। अपादानादिविशेषविनिर्मुक्तं च विद्यते कारकं, यथा 'नटस्य शृणोती'ति। यतश्च पयोऽर्थी प्रथमं गवि प्रवर्तते ततोऽन्तरङ्गत्वाद् दुह्यादिषु गुणकर्मणि लादयो भवन्ति। सत्यपि चाऽन्तरङ्गत्वे गवादीनामीप्सिततमत्वाऽभावः, अन्यार्थत्वात्तत्र क्रियाप्रवृत्तेः। पयसस्त्वविवक्षायां गोरेवेप्सिततमत्वम्। यथोक्त'मपादानमुत्तराणि'। गां दोग्धीति। पयोविवक्षायां च प्राधान्येऽप्यन्तरङ्गत्वाद् गुणे लादयः। उक्तं च—

> 'गुणकर्मणि लादिविधिः पूर्वं गुणकर्मणा भवति योगात्।
> मुख्यं कर्म प्रेप्सुर्यस्माद्गव्येव यतते प्राक् ॥
> तस्माच्छुद्धस्य दुहेर्भवति गवा पूर्वमेव संबन्धः।
> गोदुहिना पयसस्तु प्राक्सम्मात्लादयस्तस्मिन्' ॥ इति।

अपादानविवक्षायां तु पञ्चमी भवति—'गोर्दुह्यते पय' इति। यदा तु पयोविशेषणत्वेन गोर्विवक्षा तदा षष्ठी,—'गोः पयो दोग्धी'ति। 'माणवकाय धर्मं ब्रूते' इत्यपि भवति यदा धर्मेण कर्मणा माणवकस्याऽभिप्रेयमाणत्वं विवक्ष्यते। तदविवक्षायां त्वनेन कर्मत्वम्। सपर इति। उत्तरसूत्रेऽप्ययमेव विधिरित्यर्थः। 'बोध्यते माणवकं धर्मः' 'भोज्यते माणवकमोदनः' 'श्राव्यते माणवकं श्लोकः' इति। प्रयोजकव्यापारेणाऽऽप्यमानत्वान्माणवकस्य प्राधान्यं, धर्मादेस्तु गुणभावः। भ्रुवेति। अगुणे—प्रधानकर्मणि।

उ०— निमित्तभावमात्रविवक्षेति। क्रियाजनकत्वमात्रविवक्षेत्यर्थः। परिगणनफलं दर्शयति—अपादानादिविशेषेति। 'गुणकर्मणि लादिविधि'रित्यर्थस्य न्यायसिद्धत्वं दर्शयति—यतश्चेति। नन्वेवं पूर्वेणैव सिद्धं स्यादत आह—सत्यपि चेति। वस्तुत ईप्सिततमत्वसत्त्वेपि न क्षतिः। 'आकडार'सूत्रस्थभाष्योपपत्तिश्च प्रागुक्तैवेति न विस्मर्तव्यम्। किं च विभागजसंयोगानुकूलव्यापारानुकूलव्यापारार्थकत्वं तदुदाहरणे आवश्यकमुभयोः प्राप्तये। तत्र विभागस्य संबन्धिद्वयाऽऽकाङ्क्षत्वेन पयसोऽविवक्षेति वक्तुमप्यशक्यम्। प्रसिद्धेरप्रयोग इति त्वन्यत्। किं च व्यापारद्वयाऽर्थत्वे मुख्यगोपालव्यापारजन्यफलाश्रयत्वरूपं गोः प्राधान्यमाश्रित्य तत्रैव कर्मणि लादयः। तच्च 'प्रधानकर्मण्याख्येये'इत्यादिना वक्ष्यति। यदा त्वेकव्यापारार्थत्वं दुहादीनां तदाऽनेन कर्मत्वे तादृशप्राधान्यस्य गव्यभावात्तत्र लादिप्राप्तौ 'गुणकर्मणि लादय' इत्युक्तम्, 'गम्यते ग्राम देवदत्त'इत्यादौ देवदत्तस्य मदुक्तमेव प्रधानकर्मत्वमिति दिक्। अन्तरङ्गत्वादिति। प्रधानन्यायाऽन्तरङ्गन्याययोः समत्वात्। 'गतिबुद्धी'तिसूत्रस्थ नियमस्वपराद्' हेतुमति चे'तिसूत्रस्थभाष्यादन्तरङ्गन्यायात्प्रधानन्यायस्य बलवत्त्वाच्चाऽन्यार्थस्य बाधनिकत्वमेवेत्यपरे। उक्तं चेति। 'हरिणे'ति शेषः। 'पूर्वं गुणकर्मणो'त्यस्य

**ध्रुवचेष्टितयुक्तिषु चाऽप्यगुणे तदनल्पमतेर्वचनं स्मरत ॥**

ध्रुवयुक्तिषु चेष्टितयुक्तिषु चाऽप्यगुणे कर्मणि लादयो भवन्ति, एतदनल्पमतेराचार्यस्य वचनं स्मर्यताम् ॥ अपर आह—

**प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।**

प्रधानकर्मण्यभिधेये द्विकर्मणां धातूनां कर्मणि लादयो भवन्तीति वक्तव्यम् । अजां नयति ग्रामम् । अजा नीयते ग्रामम् । अजा नीता ग्राममिति ।

**अप्रधाने दुहादीना**

अप्रधाने दुहादीनां कर्मणि लादयो भवन्तीति वक्तव्यम् । दुह्यते गौः पयः ।

प्र०- ध्रुवयुक्तिषु—अकर्मकेषु, चेष्टितयुक्तिषु च—गत्यर्थेषु च लादयो भवन्ति । पूर्वाचार्यप्रसिद्ध्या ध्रुवयुक्तयोऽकर्मका उच्यन्ते । तेषां हि क्रिया स्वात्मन्येवाऽवस्थिता न तु कर्मार्था । तत्र ध्रुव इव ध्रुव इति स्वात्मनिष्ठोऽकर्मको धात्वर्थ उच्यते । तेन 'मासमास्यते देवदत्तः' 'शाय्यते क्रोशं देवदत्त' इति प्रयोज्ये देवदत्ते प्रयोजकव्यापारस्य तत्रैव पूर्वं संनिपाताल्लादयो भवन्ति । तथा 'गम्यते ग्रामं देवदत्त' इत्यत्रापि । अनल्पमतेरिति । मेधाविन आचार्यस्येत्यर्थः । स्मरतेति । आगमस्याऽविच्छेदमनेन दर्शयति ।

आगम एवाऽयं न स्वमतिपरिकल्पनेति दर्शयितुमाह—अपर इति । अजा नीयत इति । अजायाः प्राधान्यान्नेतुश्च तस्यामेव पूर्वं क्रियाप्रवर्तनादन्तरङ्गत्वाच्च तस्या-

उ०—'यत' इति शेषः । एवं गुणकर्मयोगे हेतुमाह—मुख्यं कर्मेति । शुद्धस्य दुहेः—पयोऽनन्वितस्य दुहेः । तदेवाह—पूर्वमेवेति । पयःसंबन्धात्पूर्वमेवेत्यर्थः । गोदुहिना—गवान्वितदुहिना तु । यतः प्राग्गवा संबन्धस्तस्मात्तस्मिँल्लादय इत्यर्थः । उत्तरसूत्रे इति । 'गतिबुद्धी'तिसूत्रे, 'हृक्रो'रितिसूत्रे चेत्यर्थः । अयमेव विधिरिति । अयमेव प्रकार इत्यर्थः । माणवकस्य प्राधान्यमिति । एवं च प्रयोज्यव्यापारजन्यफलाश्रयो गुणकर्मेत्यर्थः । स्वात्मन्येव—स्वश्चासावात्मा यस्य तस्मिन्कर्तरीत्यर्थः । स्वसमानाधिकरणफलार्थेति यावत् । न तु कर्माऽर्थेति । न कर्मनिष्ठफलाऽर्थेत्यर्थः । अकर्मको धात्वर्थ इति । तेन युक्तिः—सम्बन्धो येषामित्यर्थः । एवं 'चेष्टितयुक्ति'पदमपि व्याख्येयम् । तत्रैव पूर्वमिति । अनेनाऽन्तरङ्गत्वमपि तस्य दर्शितम् । अनया युक्त्या बुद्धिप्रत्यवसानार्थेष्वपि प्रधान एवाऽऽपत्तिरिति,—अस्याऽर्थस्य वाचनिकत्वमेव युक्तम् । आगमस्य—परम्परोपदेशस्य ।

प्रधानकर्मणि प्रवृत्तौ युक्तिमाह—अजाया इति । 'ध्रुवचेष्टितयुक्तिष्वि'ति पूर्वश्लोकेऽपि चेष्टितयुक्तित्वेन नयत्यादीनामपि ग्रहणमिति न तस्य न्यूनता । प्राधान्यं चाऽजायाः कर्तृ-

**ण्यन्ते कर्तुश्च कर्मणः ॥**

'ण्यन्ते कर्तुश्च कर्मणो लादयो भवन्तीति वक्तव्यम् । गम्यते 'यज्ञदत्तो ग्रामं देवदत्तेन ।

के पुनर्धातूनां द्विकर्मकाः ?

प्र०-मेव लादयः । ण्यन्ते कर्तुश्च कर्मण इति । कर्तुः सतो ण्यन्ते धातौ कर्मणो वाचका लादयो भवन्ति । 'गतिबुद्धी'त्यनेन यस्य प्रयोज्यस्य कर्मसंज्ञा विधीयते तस्मिन्वाच्ये सर्वेषु गत्यर्थादिषु धातुषु लादयो भवन्तीत्यर्थः । पूर्वश्लोके तु भेदेनोक्तं,— गत्यर्थाऽकर्मकेषु प्रधाने कर्मणि, बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु तु 'सपर' इत्यनेन वचनेन लादयो गुणकर्मणि । प्रयोज्यकर्मण्येव लादयो दृश्यन्त इत्येकेषां मतम् । 'माणवकं धर्मं बोधयती'त्यादावनियमतो गुणप्रधानभाव इत्याहुः । धर्मप्रतिपादनपरत्वे वाक्यस्य धर्मस्य प्राधान्यं, माणवकस्य गुणभावः । माणवकसंस्कारपरायां तु प्रवृत्तौ— माणवकस्य प्राधान्यं, धर्मस्य गुणभावः । तथाऽभिधानव्यापारस्य प्रयोजकव्यापारस्य प्राधान्यात्प्रयोज्यस्यैव कर्मणः प्राधान्यम् । गुणभूतप्रयोज्यव्यापारकर्मणस्तु गुणभावः । आर्थेन तु न्यायेन प्रयोज्यव्यापारस्य प्राधान्यम्, तदर्थत्वात्प्रयोजकव्यापारस्य । तत्प्राधान्यात्तत्कर्मणोऽपि प्राधान्यमिति वदन्त आचार्याः ।

दुह्यादिपरिगणनादन्यत्र द्विकर्मकत्वं न प्राप्नोति, दृश्यते चेति मत्वा पृच्छति— के पुनरिति । गत्यर्थानामिति । उत्तरसूत्रोपात्तधातूपलक्षणं गत्यर्थग्रहणम् ।

उ०-व्यापारजन्यफलाश्रयत्वात् । अत्र व्यापारद्वयार्थकतया 'कर्तुरीप्सिततम'मित्यनेन येषु द्वयोः कर्मत्वं तेऽत्र 'द्विकर्मका' उच्यन्ते । ण्यादीनां च तेनैव द्विकर्मकतेति बोध्यम् । भाष्ये— ण्यन्ते कर्तुश्चेति । यद्यपि 'प्रधानकर्मणी'त्यनेनैवेदं सिद्धं, तथापि 'गुणकर्मणि लादिविधिः सपरे'इत्युक्ते 'दुहादीना'मित्यनेन तस्य ग्रहणमिति भ्रमवारणार्थं पुनरिदमुक्तं, तच्च सामान्योक्तेर्बुध्यादिविषयमपि । तदुपपादयन्नाह—पूर्वं श्लोके त्विति । प्रधाने कर्मणि—प्रयोज्यरूपे कर्मणि । गुणकर्मणि—प्रयोज्यनिष्ठव्यापारजन्यफलाश्रये । प्रयोज्यकर्मण्येवेति । 'बुद्धिप्रत्यवसानार्थादिष्वपी'त्यादिः । एकेषां मतमिति । एवं च बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु विकल्पः फलित इति भावः । तत्र विकल्पे युक्तिमाह—माणवकमित्यादिना । वस्तुत इदं सर्वं वाचनिकमिति तत्त्वम् । अभिधानव्यापारेणेति । शाब्देनेत्यर्थः । एतच्च द्वैविध्यं यथार्थव्यतिरिक्तविषयमिति नाऽतिप्रसङ्गः । इदमत्राऽवधेयम्—अकर्मकव्यतिरिक्तहृक्रप्रकृतिकण्यन्तयोर्हारयतिकारयत्योर्द्विकर्मकत्वे पूर्वमते गौणे प्राप्नोति, 'अपर आहे'तिमते प्रधाने प्राप्नोतीत्यत्रापि विकल्प एवेत्येके । अन्ये तु 'भुवचेष्टितयुक्तिषु चापी'त्यत्र चकारेण, 'चेष्टितयुक्ति'पदेन हृक्रोर्ग्रहणेन वा तयोरपि प्रयोज्यकर्मण्येवेत्याहुः । अत्र निश्चयो बहुश्रुतैः कार्यः । ननु दुहादिव्यतिरिक्ता द्विकर्मका अप्रसिद्धा इति 'प्रधानकर्मणी'त्याद्यसङ्गतमित्याशयेन पृच्छति—के पुनरिति ।

१-'ण्यन्ते कर्तुश्च कर्मणः' इति क्वचिदेवोपलभ्यते । २-'देवदत्तो ग्रामं यज्ञदत्तेन' पा० ।

**नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।**
**द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥**

अजां नयति ग्रामम् । भारं वहति ग्रामम् । भारं हरति ग्रामम् । गत्यर्थानाम्—गमयति देवदत्तं ग्रामम् । यापयति देवदत्तं ग्रामम् ।

**सिद्धं वाऽप्यन्यकर्मणः ।**

सिद्धं वा पुनरेतद्भवति । कुतः ? 'अन्यकर्मणः' । अन्यस्याऽश्राऽजा कर्मान्यस्य ग्रामः । अजामसौ गृहीत्वा ग्रामं नयति ।

**अन्यकर्मेति चेद्ब्रूयाल्लादीनामविधिर्भवेत् ॥**

अन्यकर्मेति चेद्ब्रूयाल्लादीनामविधिरयं भवेत् । अजा नीयते ग्राममिति । परसाधन उत्पद्यमानेन लेनाऽजाया अभिधानं न प्राप्नोति ।

प्र०—तथैव चेति । चकारेण जयत्यादयः समुच्चीयन्त इत्याहुः । शतं जयति देवदत्तम् । शतं मुष्णाति देवदत्तम् । शतं दण्डयति देवदत्तम् । सिद्धं वेति । अन्यस्याऽश्रूयमाणस्य क्रियाविशेषस्य कर्मणः संभवादित्यर्थः । अथवा 'कर्म'शब्देन कर्मत्वमुच्यते । अन्यकर्मत्वादित्यर्थः । 'विभाषा गुणे' इति पञ्चमी । यथा 'प्रविश पिण्डी'मिति भक्षणापेक्षं पिण्ड्याः कर्मत्वं, तथाऽ'जां ग्रामं नयती'त्यत्र ग्रहणाऽपेक्षमजायाः कर्मत्वम् । नयतिस्तु प्राप्तिमात्रवाची । तेनाऽजां गृहीत्वा ग्रामं प्राप्नोतीति वाक्यार्थः संपद्यते । परसाधन इति । 'नीयते' इति नयतेः परेण लकारेण नयतिकर्मैवाऽभिधानीयम् ।

उ०— नीत्यादि । इदं व्यापारद्वयार्थकधातूपलक्षणम् । एषां च 'कर्तुरीप्सिततम'मिति द्विकर्मकत्वं, न त्वेषां दुह्यादिषु पाठे मानमस्ति । एवं जिदण्ड्यादीनामपि सिद्धं द्विकर्मकत्वम् । अत्र प्रधानव्यापारजन्यफलाश्रयत्वरूपप्रधानकर्मत्वाद् देवदत्तादौ लादिः । उद्देश्यतालक्षणं प्राधान्यं तु शतस्येति अनुद्देश्यगर्गोपरोधाभावोद्देश्यतावृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोध इत्याहुः । भाष्ये—अन्यस्येति । अश्रूयमाणस्य ग्रहणादेरित्यर्थः । व्यधिकरणे षष्ठ्यौ । परसाधने इति । नयतिसाधने ग्रामादावित्यर्थः । तदयं निष्कर्षः—

'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ।
बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया ॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ।
ह्रक्रोर्निजेच्छया किं वा प्रयोज्ये बहुदर्शिभिः ॥
लक्ष्यं दृष्ट्वा निर्णयोऽत्र कर्तव्यो भाष्यपारगै'रिति ।

१—अस्य 'द्रष्टव्यमिति निश्चयः' इति चतुर्थचरण क्वचिदेव पठ्यते । प्राचीनलिखितपुस्तके तु 'सिद्धं चाप्यन्यकर्मणः' इति चतुर्थचरण दृश्यते, तदेव च युक्तम् । २—'सिद्धं चाप्य' पा० । ३—'जिदण्डिकुषिपच्छमान्थमुषावेपादिदधातवः । अत्रापि कथ्यमाना ज्ञातव्यान कथिता ।' । इतीदं श्लोकवार्तिकं लिखितवार्तिकपुस्तकेऽधिकं दृश्यते इति श्रीगुरुप्रसादशास्त्री ।

**कालभावाऽध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ।**

कालभावाध्वगन्तव्या अकर्मकाणां धातूनां कर्मसंज्ञा भवन्तीति वक्तव्यम् । काल–मासमास्ते । मासं स्वपिति ॥ भाव–गोदोहमास्ते । गोदोहं स्वपिति ॥ अध्वगन्तव्य–क्रोशमास्ते । क्रोशं स्वपिति ।

[ देशश्चाऽकर्मणाम् ॥ ]

प्र०–प्रहणस्य त्वजा कर्म, न नयतेरिति कथं सा तेनाभिधीयते, तस्मादन्यकर्मत्वमजाया नैष्टव्यम् । कालेति । मासादय एव कालवाचित्वेन लोके प्रसिद्धाः, न तु गोदोहनपानादय इति सत्यपि भावस्य कालत्वे पृथगुपादानं कृतम् । 'निर्ज्ञातपरिमाणा हि क्रिया अनिर्ज्ञातपरिमाणायाः क्रियायाः परिच्छेदायोपादीयमाना मासगोदोहादिशब्दवाच्या काल' इति दर्शनम् । अध्वा चाऽसौ गन्तव्योऽध्वगन्तव्यः । अत एव निपातनाद्विशेषणस्यापि परनिपातः । गन्तव्यतया लोके यः प्रसिद्धः क्रोशयोजनादिर्नियतपरिमाणस्तस्यैव कर्मत्वं नाऽन्यस्येत्यध्वानं स्वपितीति न भवति । केचिदध्वगत्यन्ता इति पठन्ति । तत्रायमर्थः—गतेरन्तो निष्ठा निश्चयो वा येषु ते गत्यन्ताः—क्रोशयोजनादयः । अध्वनो गत्यन्ता इति षष्ठीसमासः ।

कर्मसंज्ञा हीति । ननु 'कालाध्वनो'रिति द्वितीया सिद्धेरिति किं कर्मसंज्ञया । गोदोहादीनां कालत्वेनाऽप्रसिद्धत्वाद् द्वितीया न प्राप्नोतीति भावस्य तावत्कर्मसंज्ञा विधेया । कालाध्वनोरपि लादिविधानार्थं कर्मत्वमेषितव्यम्—आस्यते मासः, आसितव्यो मासः, आसितो मासः, स्वप्तो मासः । एवं—'शय्यते क्रोश' इत्यादि द्रष्टव्यम् । यदा त्वङ्गीकृतसकर्मकधात्वन्तरार्थं आसनादावास्यादयो वर्तन्ते तदा पूर्वेणैव कर्मत्वं सिद्धम् । तथा हि—मासमास्त इत्यस्याऽयमर्थः,—मासमासनेन व्याप्नोतीति । तथा च वक्ष्यति—'प्राकृतमेवेदं कर्म, यथा कटं करोती'ति । अत्र दर्शने न केवलमकर्मकाणां कालादयः कर्मत्वं प्रतिपद्यन्ते अपि तु सकर्मकाणामपि, न्यायस्य तुल्यत्वात् ।

देशश्चेति । संस्त्यायविशेषः कुरुपञ्चालादिर्देश इह गृह्यत इति भाष्ये उदाहरणा-

उ०– अकर्मकाणां क्वचित्कर्मसत्त्वेऽपि द्विकर्मकत्वाऽभावात् 'प्रधयुक्तिध्वगुण' इत्यसङ्गतमतो भाष्ये—कालेति । ननु गोदोहादीनामपि कालत्वादेव सिद्धिरत आह—मासादय एवेति । 'गोदोहमास्ते' इत्यस्य,—यावन्तं कालं गौर्दुह्यते तावदास्ते इत्यर्थः । पानादय इति । 'यथा'-मित्यादिः । 'गोपानमास्ते' इत्यस्य,—यावत्कालं गावो जलं पिबन्ति तावदास्ते इत्यर्थः । क्वचित्पाकादय इति पाठः । निर्ज्ञातपरिमाणेति । इदं 'कालाः परिमाणिने'तिसूत्रस्थभाष्यविवरणम् । लादिविधानार्थमिति । अत्यन्तसंयोगे द्वितीयार्थमित्यपि बोध्यम् । द्वितीयाविधानमपि 'मासं गुडधानाः' इत्याद्यक्रियायोगे चरितार्थम् । इदमपूर्वकर्मसंज्ञाविधानकमिति मत्वाह—यदा त्विति । पूर्वेणैव—'कर्तुरीप्सिततमं कर्मे'त्यनेन । वक्ष्यतीति । 'कालाध्वनोरिति सूत्रे' इति शेषः । 'यथा ७.८'मिति,—दृष्टान्तेन कर्तुरित्येव तत्र प्राकृतकर्मेव विव-

१–इदं वार्तिकमेव । निर्णयसागरीये भाष्ये तु 'देशश्च' इत्येव न्यूनतापूर्तिवार्तिकं मतम् ।

देशश्चाऽकर्मकाणां कर्मसंज्ञो भवतीति वक्तव्यम् । कुरून्स्वपिति पञ्चालान्स्वपिति ।

[ देशश्चाऽकर्मकाणां हि कर्मसञ्ज्ञो भवत्यपि । ]
विपरीतं तु यत्कर्म तत्कल्म कवयो विदुः ॥

किमिदं कल्मेति ? अपरिसमाप्तं कर्म कल्म । न वा अस्मिन्सर्वाणि कर्मकार्याणि क्रियन्ते । किं तर्हि ? द्वितीयैव ।

प्र०—द्विज्ञायते ।

इदानीमकथितस्य पूर्वाचार्यकृतं संज्ञान्तरं दूषयितुमुपन्यस्यति—विपरीतमिति । कर्मधर्माणां विपर्यस्तत्वाद्विपरीतमुच्यते । ईप्सिततमं द्वेष्यमितरच्चेति त्रिविधं पूर्वं कर्म निर्दिष्टम्, इदं तद्विपरीतम् । कपिलकादित्वाच्च लत्वे कृते 'कल्मे'ति भवति । अपरिसमाप्तमिति । ईप्साप्रकर्षाऽभावादित्यर्थः । नवेति । लकृत्यक्तखलर्थानाम-विधानात्, 'प्रधानकर्मण्यभिधेय' इति पूर्वमुक्तत्वात् । दुहादीनां चाऽप्रधाने कर्मणि लादिविधानात्तुच्छ एवाऽयं पक्षः । तथा च परस्ताद् दूषयिष्यते ।

उ०—क्षिप्तमिति भावः । अस्य प्रकारस्यावश्यकत्वमित्याह—सकर्मकाणामपीति । न चेयमपि कल्पनाऽकर्मकविषयैव, न सकर्मकविषयेति वाच्यम्, अनया रीत्या सकर्मकाऽकर्मक-साधारणकालाध्वनोरित्येतद्विषयस्य 'न तर्हीदानीमिदं वाच्य'मितिप्रश्नस्य, 'यत्राऽक्रिययाऽत्यन्त-संयोगस्तदर्थ'मित्युत्तरस्य च 'कालाध्वनो'रिति सूत्रभाष्यस्यस्याऽसङ्गत्यापत्तेः । दृश्यते च 'मासमधीते' इत्यादौ कालस्य कर्मत्वम् । अनया रीत्याकर्मकधातुयोगे कटादीनां कर्मत्वं तु भाप्यम्, अनभिधानादित्याहुः । वस्तुतोऽनयैव कल्पनयैषां सकर्मकत्वम्, न त्वन्यत्वमिदं वचनं विधायकं, हिशब्दयोगात् । व्याख्यानभाष्यस्यापि कालादयोऽकर्मकधातूनां कर्मसंज्ञा यथा भवन्ति तथा धात्वर्थरूपं वक्तव्यमुक्तयुक्त्येति 'ध्रुवयुक्तिङ्वगुण' इति सम्यगेवेत्यर्थ इति युक्तमाभाति । अन्यथा वचनस्य 'यदा त्वि'त्यादिनोक्तया 'कालाध्वनो'रितिसूत्रभाष्यसंमतया रीत्या प्रत्याख्याने आरम्भप्रत्याख्यानयोः फलभेदापत्तिः । आरम्भेऽपि तदावश्यकत्वेनाऽऽरम्भपरतयैवैतद् ग्रन्थव्याख्याया उचितत्वात् । संस्त्यायविशेषः—ग्रामादीनां समूहविशेषः । इतरदिति । उदासीनमित्यर्थः । इदं तद्विपरीतमिति । धात्वर्थफलानाश्रयत्वादिति भावः । एकोकस्यविपरीतशब्दं व्याचष्टे भाष्ये—अपरिसमाप्तमिति । अपरिसमाप्तत्वं व्याचष्टे—न वेति । 'कल्मकर्मणोर्द्वितीये'ति कार्यम् । अत्र पक्षे ईप्साप्रकर्षाऽभावादपरिसमाप्तत्वं तु न युक्तम्, उदासीनेपि तथात्वापत्तेः । भाष्येऽन्यस्यैवोक्तेश्च । सर्वकर्मकार्याऽभावे हेतुमाह—प्रधानकर्मणीति । 'कथिते लादय' इति येनोक्तं स एवाऽयं वादीति भावः । तदेतत्सर्वं दूषयति—दुहादीनां चेत्यादिना ।

१—'कर्मणा' ।

२—'इदमर्धं केवलं हस्तलिखितवार्त्तिकपुस्तके एव दृश्यते न तु भाष्ये इति' श्रीगुरुप्रसादशास्त्री ।

यस्मिंस्तु कर्मण्युपजायतेऽन्यद्धात्वर्थयोगाऽपि च यत्र षष्ठी ।
तत्कर्म कल्मेति च कल्म नोक्तं धातोर्हि वृत्तिर्न रलत्वतोऽस्ति ॥
एतेन कर्मसंज्ञा सर्वा सिद्धा भवत्यकथितेन ।
तत्रेप्सितस्य किं स्यात्प्रयोजनं कर्मसंज्ञायाः ॥

प्र०— तस्यैव विपरीतकर्मणो लक्षणं दर्शयति—यस्मिंस्त्विति । यस्मिन्गवादौ कर्मणि सत्यन्यत्पयःप्रभृत्युपजायते तत्कर्म 'कल्म'। धात्वर्थयोगेति । 'धातु'शब्देन धात्वर्थ उच्यते । तस्याऽर्थः प्रयोजनं—पयःप्रभृति, तेन योगो यस्याः सा षष्ठी यत्र भवति 'गोर्दुह्यते पयः' 'पौरवस्य कम्बलो याच्यत' इति । प्रधाने तु न भवति षष्ठी,—'दुह्यते पयसो गौ'रिति । इदानीं संज्ञान्तरमनारभमाण आह—कल्म नोक्तमिति । यस्मात्तत्कर्मैव तस्मात्पृथक्कल्मेति शास्त्रेऽस्मिन्नोक्तम्, दुहादीनामप्रधाने कर्मणि लादिदर्शनात्सर्वकर्मकार्योपपत्त्याऽपरिसमाप्तत्वाऽभावात् । भेदेन च कल्मसंज्ञाविधाने कर्मकार्याऽप्रसङ्गादिति भावः । धातोर्हि वृत्तिरिति । रेफस्य लत्वमात्रेण धातोरर्थान्तरे वृत्तिर्नास्तीत्यर्थः । क्वचित्तु पाठः 'धातोर्निवृत्ति'रिति । तत्रायमर्थः—धातोः करोते रेफस्य लत्वमात्रेण स्वार्थान्निवृत्तिर्नास्तीति । एतदुक्तं भवति,—वर्णविकारेऽपि कृते कर्मकल्मशब्दयोः पर्यायतैव । यथा पांसुर-पांसुलशब्दयोः, तत्र किं संज्ञाभेदेन इत्यर्थः ।

एतेनेति । 'अकथितं कर्मे'त्येवाऽस्तु, मा भूत्पूर्वसूत्रद्वयं, तद्विषयेऽनेनैव कर्मसंज्ञायाः सिद्धत्वात्, परिगणनं च न करिष्यत इति प्रश्नार्थः ।

उ०— अन्यत्पयःप्रभृतीति । ननु पौरवं विनापि गोरुपजननमात्रणाऽध्याहार्यमिदं याचादिकर्मत्वविशिष्टस्य तस्सत्त्वे पृथोपजननेनाऽदोषात् । एवं चोपजायत इत्यस्य,—प्रकृतधात्वर्थकर्मताविशिष्टमित्यर्थः । तेन योग इति । तेन योगो वाच्यो यस्याः सा षष्ठीत्यर्थः । धात्वर्थव्यापारप्रयोजनफलविशिष्टपयआदिनिरूपितसम्बन्धार्थिका यत्र षष्ठीत्यर्थः । एवं च दुहादियोगे पयसो गव्यन्वयं कृत्वा षष्ठीप्रयोगो न दृश्यते, किं तु गोः पयस्यन्वये सा दृश्यते इति भावः । कर्मकार्येति । द्वितीयादीत्यर्थः । रलत्वत इति । सार्वविभक्तिकस्तसिः । रस्य लत्वमात्रेणेत्यर्थः ।

ननु परिगणनस्य सत्त्वात्सर्वत्र न सिध्यतीत्यत आह—अकथितमित्यादि । एवं चाऽकथितेन—'अकथितं चे'ति सूत्रेणैव सर्वा—सर्वविषया कर्मसंज्ञा सिद्धा—किं पूर्वसूत्रद्वयेनेति प्रश्नोक्तार्थः । अनेन सूत्रत्रयविहितसंज्ञासंज्ञिनि व्यतिरेकैवेति सूचयति । आद्यसूत्रद्वये कर्तृव्यापारजन्यफलोभयसमानाधिकरणा, इह तु जनकतामात्रसमानाधिकरणेत्यन्यत् । उत्तरमाह—यस्त्विति । यत्पुरस्ताद्धारणार्थानामिति सूत्रेण कीर्तितं यदीप्सितेन नवाधिना युक्तं गवादि तस्य संज्ञार्थमाद्यं सूत्रमावश्यकमित्यर्थः । तद्व्याचष्टे—यत्रेप्य इत्यादिना । अवश्यं कर्तव्यमिति । सति परिगणने ओदनं पचतीत्यादावसिद्धेः पूर्वयोगस्य आवश्यकता ।

**यत्तु कथितं पुरस्तादीप्सितयुक्तं च तस्य सिद्ध्यर्थम् ।**
**ईप्सितमेव तु यत्स्यात्तस्य भविष्यत्यकथितेन ॥**

अथेह कथं भवितव्यम्—नेताऽश्वस्य स्रुघ्नमिति, आहोस्विन्नेताऽश्वस्य स्रुघ्नस्येति ? उभयथा गोणिकापुत्रः[1] ॥५१॥

प्र०— यत्त्विति । 'यवेभ्यो गा वारयती'ति गवां कथितत्वात्कर्मसंज्ञा न स्यात्, वारणार्थानामित्यपादानसंज्ञैव तु स्यादिति 'कर्तुरीप्सिततम'मित्यारब्धम् । तस्मिन्नारब्धे अनीप्सितस्य कर्मसंज्ञा न प्राप्नोतीति तथा युक्तमित्यारब्धव्यम् । ननु तथायुक्तस्याऽनेन भविष्यति । नैतदस्ति । दुह्यादिपरिगणनं 'नटस्य शृणोती'त्यादवतिप्रसङ्गनिवृत्त्यर्थमवश्यं वक्तव्यम् । ईप्सितयुक्तं चेति । ईप्सितेन यवादिना युक्तं यद् गवादि वार्यमाणं तस्य कर्मसंज्ञासिद्ध्यर्थं पूर्वसूत्रं कर्तव्यमित्यर्थः । चशब्दात्कर्माऽपादानसंज्ञयोर्विषयविभागसिद्ध्यर्थं चेत्युक्तं भवति । ईप्सितमेवेति । अवधारणेनेप्साप्रकर्षोऽभावं प्रतिपादयति । अकथितेनेति । सूत्रैकदेशानुकरणमेतत् । अनेन सूत्रेणेत्यर्थः ।

अथेति । 'प्रधाने कर्मण्यभिधेये लादीनाहु'रित्युक्तम् । अत्र लादिग्रहणेन किं षष्ठ्यपि गृह्यते उत न ? यद्यादिशब्दो व्यवस्थायां तदा 'लः कर्मणि च भावे चाकर्मकेभ्यः' 'तयोरेव कृत्यक्तखलर्थाः' इत्येतेषां ग्रहणं न्याय्यम्, अथ प्रकारे तदा षष्ठ्यपि लादिग्रहणे गृह्यत इति प्रधानकर्मण्येव सा भवतीति मत्वा प्रश्नः । उभयथेति । गुण-

उ०-परिगणनत्वं चाऽऽख्यातोपयोग इति सूत्रे भाष्ये उक्तम् । ननु वारणार्थानामीप्सित इत्यनेनेप्सितस्यापादानत्वेऽनीप्सिततमस्याऽकथितत्वात्सिध्यत्येवाऽनेन कर्मत्वमित्यतो भाष्ये—चेति । तद्व्याचष्टे—चशब्दादिति । विषयविभागेति । 'विशेषे'ति पाठान्तरम् । ईप्सितमपादानत्वविषयः, ईप्सिततमं कर्मत्वस्य, विपरीतं वेत्यत्र विनिगमकाऽभावादिति भावः, तदेवाह भाष्ये—ईप्सितमेव त्वित्यादिना । विनिगमनाविरहेणेप्सितस्यैव कर्मत्वमीप्सिततमस्यैवाऽपादानत्वं स्यादिति भावः । तदेवाह—अवधारणेनेति । एतेनैतद्भाष्यबलेनाऽकथितं चेति सूत्रे 'ईप्सिततम'मित्यनुवर्त्य फलाश्रयस्यैवाऽनेन कर्मसंज्ञां वदन्तः परास्ताः । ननु लकृत्यक्तखलर्थवत्षष्ठ्यपि भविष्यतीत्यत आह—प्रधाने इत्यादि ।

१—"तत्रसक्राच्चारायणः साधारणमधिकरणं पृथक् प्रोवाच । सुवर्णनाभः साम्प्रयोगिकम् । घोटकमुखः कन्यासम्प्रयुक्तकम् । गोनर्दीयो भार्याधिकारम् । गोणिकापुत्रः पारदारिकम् । कुचुमार औपनिषदिकमिति" ( कामसूत्रे १. १. १२ ) इह वात्स्यायनमहर्षिणा गोनर्दीय—गोणिकापुत्रयोः पार्थक्येन ग्रहणात् "गोनर्दीयः पतञ्जलिः" इति वैजयन्तीकोषे भूमिकाण्डे ब्राह्मणाध्याये १५७ श्लोके गोनर्दीयस्य पतञ्जलिपर्यायत्वस्वीकारेऽपि गोणिकापुत्रस्तद्भिन्न एव । "गोनर्दीयः = भाष्यकारः" इति कैयटः ( प्रदीपे १. १. २१ पृ० २५२ ) गोनर्दीयस्य मतं भाष्ये (१.१.२१) (१.१.२९) (३.१.९२) (७.२.१०१) सूत्रेषु विद्यते, गोणिकापुत्रस्य तु केवलमिहैव ।

भाष्यकारात् पतञ्जलेर्भिन्नावेव गोनर्दीय गोणिकापुत्राविति यु० मीमांसकः ( व्या० शा० इ० भा० १, पृ० ३०२–३०३; ३११–३१२ द्वि० सं० )।

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ॥१।४।५२॥**

'शब्दकर्मे'ति कथमिदं विज्ञायते—'शब्दो येषां क्रिये'ति, आहोस्वि- 'च्छब्दो येषां कर्मे'ति ? कश्चात्र विशेषः ?

**शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेद् ह्वयत्यादीनां प्रतिषेधः ॥१॥**

शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेद् ह्वयत्यादीनां प्रतिषेधो वक्तव्यः । के पुनर्ह्वयत्यादयः ? ह्वयति क्रन्दति शब्दायते ॥ ह्वयति देवदत्तः । ह्वाययति देवदत्तेन ॥ क्रन्दति देवदत्तः । क्रन्दयति देवदत्तेन ॥ शब्दायते देवदत्तः । शब्दाययति देवदत्तेनेति ।

**शृणोत्यादीनां चोपसंख्यानमशब्दक्रियत्वात् ॥ २ ॥**

शृणोत्यादीनां चोपसंख्यानं कर्तव्यम् । के पुनः शृणोत्यादयः ? शृणोति विजानाति उपलभते ॥ शृणोति देवदत्तः । श्रावयति देवदत्तम् ॥ विजानाति

---

प्र०-कर्मणि षष्ठीद्वितीयादर्शनादुभयमपि स्मर्यते । वाचनिकं चेदं, न तु न्याय्यम् । यत्र ह्येकेनैव शब्देन भिन्नकक्ष्ययोर्गुणप्रधानयोः कर्मणोरभिधानं न संभवति तत्र प्रधान- कर्मण एवाऽभिधानं न्याय्यम् । षष्ठी तु पृथग्गुणप्रधानाभ्यां द्वितीयावद्विधीयते, विरो- धाऽभावादुभाभ्यां प्राप्ता शिष्टस्मरणाद् गुणकर्मणि विकल्प्यते ॥५१॥

गतिबुद्धि । कथमिति । 'कर्म'शब्देन क्वचित्क्रिया गृह्यते । यथा—'कर्तरि कर्म- व्यतिहार' इति । क्वचित्तु साधनं कर्म । यथा—'वेः शब्दकर्मण' इति । तत्रश्चोभयथा व्यवहारदर्शनात्संशयानः पृच्छति । ह्वयत्यादीनामिति । ह्वयत्यादयो धातवः साध्य- मानावस्थं क्रियारूपं शब्दमभिदधतीति शब्दकर्मत्वादिप्रसङ्गे सति प्रतिषेधो विधेयः । ह्वयति देवदत्त इति । पुत्रादेः कर्मणो भावादकर्मकत्वं ह्वयतेर्नाऽऽशङ्कनीयम् । शब्दायते इति । 'शब्दं करोती'ति 'शब्दवैरे'ति क्यङ् । शब्दलक्षणस्य कर्मणोऽत्राऽ- न्तर्भावात्कर्मान्तराऽयोगाच्चाऽकर्मकत्वादपि कर्मसंज्ञाप्रसङ्गः ।

शृणोत्यादीनामिति । शब्दोपलब्धिरूपेऽर्थे वर्तमानाः शृणोत्यादयः शब्द- क्रिया न भवन्ति, शब्दसाधनकर्माणस्तु, तद्विषयत्वेन प्रयोगात् । न चैषां बुद्ध्यर्थत्वम् ।

---

उ०— ननु षष्ठीवचनमात्रस्य न्यायेनाऽप्राप्तेरुभयथेत्ययुक्तमत आह—गुणकर्मणीति । ननु कारकत्वेऽपि प्रधानकर्मण्येव न्याय्येत्यत आह—यत्र हीति । गोणिकापुत्रः—भाष्यकार इत्याहुः ॥५१॥

गतिबुद्धि । ननु कृत्रिमत्वात् कर्मकारकस्यैव ग्रहणमुचितमत आह—कर्मशब्देनेति । ननु शब्दस्य गुणत्वात् क्रियात्वं कथमत आह—ह्वयत्यादय इति । कर्मणो भावादिति । कर्मणः सत्त्वादित्यर्थः । अकर्मकत्वादपीति । यो ह्यतः कर्मसंज्ञाप्रसङ्गस्तद्वारणमपि विधेय इत्यर्थः । अत्र वदन्ति—ह्वेञ्स्पर्धायां शब्दे चे'त्यभियुक्तैः शब्दशब्देन ह्वेञ्धात्वर्थनिर्देशात्तदर्थक- 'शब्द'शब्दात्तथाऽपि ह्वयतेरिवाऽस्त्येव पुत्रादिकर्मयोग इति 'शब्दक्रियाणा'मिति चेद्ध्वयत्यादीनां

किं च स्यात्[१] यद्येकैकस्य समाससंज्ञा स्यात्, इह 'ऋक्पाद' इति समासान्तः प्रसज्येत* । इह च 'राजाश्व' इति द्वौ स्वरौ स्यातामृ† ।

कथं च कृत्वैकैकस्य समाससंज्ञा प्राप्नोति ? 'प्रत्येकं वाक्यपरिसमाप्ति-र्दृष्टे'ति । तद्यथा,—वृद्धिगुणसंज्ञे प्रत्येकं भवतः । ननु चायमप्यस्ति दृष्टान्तः 'समुदाये वाक्यपरिसमाप्ति'रिति । तद्यथा,—'गर्गाः शतं दण्ड्यन्ता'मिति ।

प्र०-र्भवति । किं च स्यादिति । भवतु प्रत्येकं समाससंज्ञा, कार्ये दोषाभावात् । 'कृत्तद्धितसमासाश्चे'त्यत्र सूत्रे समासश्च समासश्चेत्येकशेष आश्रयिष्यते, वाक्यस्य प्रातिपदिकसञ्ज्ञानिवृत्त्यर्थम् । अन्यथा प्रत्ययान्तत्वादेकैकस्य समासस्य विध्यर्थं समास-ग्रहणं स्यात् । एकशेषे तु समाससमूहस्य संज्ञाविधिर्नियमार्थो भविष्यतीति न कश्चि-द्दोषो भवति । 'समासाच्च तद्विषया'दित्यत्र प्रातिपदिकाधिकारात्समाससमूहस्य च प्रातिपदिकत्वात्समासादित्येकवचनं न विवक्ष्यते, अनभिधानाद्वा एकैकस्माच्छप्रत्ययो न भविष्यतीति भावः । ऋक्पाद इति । 'ऋचपाद' इति स्यात् । राजाश्व इति । यद्यप्यत्र समासान्तः प्राप्नोति, तथापि रूपभेदाऽभावात्स्वरद्वयप्रसङ्गो दोष उक्तः । ऋक्पादेऽपि स्वरद्वयप्रशङ्का बोधव्यः ।

कथं च कृत्वेति । एकार्थीभावे समासविधानात्समुदायस्यैव च विशिष्टार्था-भिधायित्वात्तस्यैव संस्कार्यत्वात्प्राधान्यात्तत्परतन्त्रत्वादवयवानामप्राधान्यात्समुदाय-स्यैव हि द्विवचनवत्समाससंज्ञा भविष्यति, अन्वर्थसंज्ञाविज्ञानाद्वेति भावः । इतरोऽ-

उ०-पद्यते, किंतु विध्यर्थत्वमेव स्यादत आह—कृत्तद्धितेति । एकशेषे त्विति । समुदाय-स्यैकार्थीभावेनार्थवत्त्वात्प्राप्तौ नियमार्थं तदिति भावः । 'काकतालीय'मित्यादौ प्रत्येकं छप्रत्ययोत्पत्तिरपि दोषो नेत्याह—समासाच्चेति । ननु समुदाये समासत्वाभावोत आह—प्रातिपदिकत्वादिति । तत्सामर्थ्यात्समासपदं तत्समूहपरमिति भावः । एकत्वं न विवक्ष्यत इति । प्रातिपदिकादित्यनेनाऽन्वयादिति भावः ॥ ननु तद्विरोधात्प्रातिपदिकादित्यस्याऽसंबन्ध एव स्यादत आह—अनभिधानाद्वेति । एवं च लक्ष्यानुरोधादेव समासपदं तत्समूह-परमिति भावः ।

समुदायस्यैवेति । अवयवेभ्यः समुदायोऽतिरिक्तोऽपीति भावः । इदं चिन्त्यम्, सुबन्तं समर्थं समर्थेन सुबन्तेन सह समस्यत इत्यर्थेन प्रत्येकं तस्य तस्य च संज्ञालाभात्समुदाये संस्कार्यत्वस्य दुर्लभत्वात् । किं च समुदायद्विर्वचनदृष्टान्तोऽयुक्तः, वैषम्यात्, समुदायसंज्ञया-ऽवयवानामननुग्रहात् । अन्वर्थसंज्ञाविज्ञानाद्वेतीति । वस्तुतः समसनं संक्षेप इत्यन्वर्थः । स चा सावनेकस्यैव, एकस्यापि विस्तृतस्य संक्षेपदर्शनात् । अतोऽन्वर्थत्वेन कथमेतल्लाभ इति

१–किं च स्याद् यद्येकैकस्य समाससंज्ञा स्यात् ?' पा० ।

* ऋक्पूरब्धूःपथामानक्षे ५. ४. ७४. † समासस्य ६. १. २२३.

अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति । सत्येतस्मिन् दृष्टान्ते यदि तत्र प्रत्येकमित्युच्यते, इहापि 'सह'ग्रहणं कर्तव्यम् । अथ तत्रान्तरेण 'प्रत्येक'मिति वचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः, इहापि नार्थः सहग्रहणेन ।

एवं तर्हि सिद्धे सति यत्सहग्रहणं करोति तस्यैतत्प्रयोजनं योगाङ्गं यथा विज्ञायेत । सति च योगाङ्गे योगविभागः करिष्यते । ["सह' ।] सह सुप्समस्यते । केन सह ? समर्थेन । अनुव्यचलत अनुप्राविशत् । ततः

प्र०-गृहीताभिप्राय आह प्रत्येकमिति । एतच्च वृद्धिवार्त्तिके व्याख्यातं, तत एवानुगन्तव्यम् । सत्येतस्मिन्निति । पक्षद्वयेऽपि स्थिते सामर्थ्यात्कश्चित्कश्चित्पक्ष आश्रीयते । तत्र संयोगसंज्ञावत्समाससंज्ञा पूर्वोक्तेनैव न्यायेन समुदायस्य संभविष्यति । अथ न्यायद्योतनायेह सहग्रहणं क्रियते, वृद्धिगुणसंज्ञयोरपि प्रत्येकमिति वक्तव्यम् । अथ तत्र लक्ष्यदर्शनादिवशात्प्रत्येकं गुणवृद्धिसंज्ञे भवतस्तदिहापि पूर्वोक्तात्सामर्थ्यात्समुदायस्य समाससंज्ञा भविष्यतीति नार्थः सहग्रहणेन ।

योगाङ्गमिति । योगावयव इत्यर्थः । केनेति । सुपा चेन्नार्थो योगविभागेनेति प्रश्नः । समर्थेनेति । योगविभागात्तिङन्तेन सह सुपः समासो भवति । योगविभागश्चेष्टप्रसिद्ध्यर्थ इति सर्वत्र समासो न भवति । अनुव्यचलदिति । सुबिति संख्याया विवक्षितत्वात्पूर्वं वेः समासः, पश्चादनो । तत्र समाससंज्ञायां सत्यां शाकलप्रतिषेधाद्यणादेशो भवति । समासान्तोदात्तत्वं न भवति 'तिङ्ङतिङः' इति निघातेन

उ०-चिन्त्यम् । तस्माद् गर्गदण्डनन्यायस्तवान्कथमेकैकस्य प्राप्तिः । लक्ष्यानुसाराच्च तस्यैव न्यायस्याश्रयणमिति सिद्धान्तिन एव प्रश्नः ॥ इतरो लक्ष्यानुसारमज्ञात्वा न्यायमात्राश्रयणेन सहग्रहणमित्याह—प्रत्येकमिति । लक्ष्यदर्शनादीति । आदिना 'मालादिना चे'ति ज्ञापकसंग्रहः । अत्रापि गर्गदण्डनन्यायाश्रयणे लक्ष्यदर्शनमेव हेतुरिति तत्त्वम् ।

योगावयव इति । योगोऽत्राष्टाध्यायी । यद्यपि योगविभागाभावेऽप्यवयवावयवस्य समुदायावयवत्वन्यायेनाष्टाध्याय्यवयवत्वमस्त्येव, तथापि साक्षादवयवत्वमेवात्र विवक्षितं, तच्च योगविभागमन्तरेण न संभवतीति बोध्यम् । संख्याया विवक्षितत्वादिति । सुबन्तत्वाद्वेः प्रत्येकसमासश्चाच्चेत्यपि बोध्यम् । 'अनुव्यचल'दित्यत्र समाससंज्ञायाः फलं दर्शयति—शाकलेति । अन्यथा पक्षे यणोऽश्रवणमपि स्यादित्यर्थः । स्वरस्तु न फलमित्याह—समासान्तोदात्तत्वमिति । केचिन्मतसिद्धस्वरं दर्शयति—तत्रानोरिति । केचिन्मतदूषणमाह—एवं चेति । अवक्तव्यमिति । समासाऽसमासयोः स्वरे रूपे चाविशेषादित्यर्थः । एकादेशस्य सर्वथोदात्तत्वादिति भावः । 'अनुव्यचल'दित्यत्र नित्ययणश्रवणं विशेषः । अयं च नित्यसमास इति तात्पर्यम् । सतिशिष्टत्वादिति । वाक्येऽपि निघातप्रवृत्तेस्तदुत्तरकालिकतया समासस्वरस्य सतिशिष्टत्वमित्यर्थः । तिङैव त्वस्येति । सुपां यद्यपि स्वप्रकृत्यर्थविशेष्यगतसंख्याभिधा-

१-कश्चित् ।

'सुपा'। सुपा च सह सुप्समस्यते। अधिकारश्च लक्षणं च। यस्य समासस्यान्यल्लक्षणं नास्ति, इदं तस्य लक्षणं भविष्यति[1]। 'पुनरुत्स्यूतं वासो देयम्', 'पुनर्निष्कृतो रथ'† इति।

प्र०-बाधितत्वादिति केचिदाहुः। तत्रानो'र्गतिर्गता'विति निघातः, विशब्द उदात्तः। 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्ये'त्यकारः स्वरितः। एवं त्वनुप्राविशदिति प्रयोजनभावाद्भाष्यकारेण उदाहरणमवक्तव्यं स्यात्। तस्मात्सतिशिष्टत्वात्समासान्तोदात्तत्वेनात्र भाव्यमित्यपरे। तत्र तिङैकत्वस्योक्तत्वात्प्रातिपदिकत्वेऽपि सुबनुत्पत्तिः॥ अन्ये त्वाहुः—वचनग्रहणादुक्तेष्वप्येकत्वादिषु प्रथमा स्यात्। केवलायाश्च प्रकृतेः प्रयोगाभावाद्भवितव्यमत्र प्रथमैकवचनेन। तस्य तु हल्ङ्यादिलोपः क्रियते। अत एवैकपद्यादामनुप्राविशद्देवदत्तेत्याम एकान्तरमामन्त्रितमिति निघातप्रतिषेधः समाससंज्ञायाः प्रयोजनमस्त्येवेति तिङन्तनिघातवादिन आहुः।

अधिकारश्चेति। देवदत्तः पचतीति विशेषणसमासनिवृत्त्यर्थोऽतिङित्यादावुत्तरपदानुपादानादुत्तरपदोपस्थापनार्थश्चेति भावः। लक्षणं चेति। ननु सहेति योगविभागेनैव समासस्य सिद्धत्वात्सुपेत्यस्य लक्षणत्वे नास्ति प्रयोजनम्। नैष दोषः। योगविभागः कतिपयतिङन्तविषय एव। एतच्चास्मादेव भाष्याद्विज्ञायते। पुनरुत्स्यूतमिति। पुनःशब्दस्यासत्यामपि गतिसंज्ञायां 'परादिश्छन्दसि बहुल'मिति उद आद्युदात्तत्वं समासान्तोदात्तत्वापवादो भविष्यतीति मन्यते। अथवा काठकेऽन्तोदात्तः पठ्यते तदभिप्रायेण पुनःशब्दस्य गतित्वाभावादिदमुदाहरणम्।

उ०-यद्यप्युत्सर्गस्तथापि 'ङ्याप्प्रातिपदिका'दिति सूत्रस्थभाष्यप्रामाण्येन लिङापि क्रियागतायाः कर्त्रादिसंबन्धादारोपिततत्संख्याया एव भानमिति सिद्धान्त इदम्॥ वचनग्रहणादिति। प्रातिपदिकार्थसूत्रस्थात्संख्यार्थकादित्यर्थः। केवलायाश्चेति। प्रातिपदिकसंज्ञासत्त्वेनास्यापि प्रकृतत्वमिति भावः। हल्ङ्यादिलोप इति। योगविभागस्येष्टसिद्ध्यर्थतया छन्दसि तद्विषये एवैतत्समासप्रवृत्तिरिति भावः। एतेन 'प्रकुर्वीर'न्नित्यादौ समासे नलोपः स्यादित्यपास्तम्। सुबुत्पत्तिस्वीकारे संमतिमाह—अत एवेति। अन्ये त्वित्यरुचिबीजं तु पचतिकल्पमित्यादावेवं सति बहुवचनादेरापत्तिः। तस्माद्वचनग्रहणेन संख्याप्रवृत्तिनिमित्तकानामेव ग्रहणं न त्वेवंविधानाम्। किं चैषामैकपद्ये प्रागुक्ते निघातप्रतिषेधे च न मानमिति। अतिङित्यादाविति। तत्रातिङित्यस्या'नवक्लृप्त्यमर्षयो'रितिसूत्रस्थभाष्यप्रामाण्येन समासविशेषणतया समर्थेनेत्यनेनैवोत्तरपदोपस्थित्या तत्र सुपेत्यस्याऽनन्वयेन च चिन्त्यमेतत्॥ ननु पुनःशब्दस्य गतित्वात 'कुगती'त्येव सिद्धम्, तदभावे तु अनेन समासेऽपि तत्पुरुषत्वाभावाद् 'गतिरनन्तर' इति उच्छब्दस्य स्वरानापत्तिरत आह—पुनःशब्दस्येति। छन्दसि सर्वविधीनां वैकल्पिक-

[1]—'येषां विशिष्य लक्षणं नास्ति ते समासाः "सह" "सुपा" इत्याभ्यां सिध्यन्तीति स्थित'-मित्यत्र कौस्तुभः। † काठ० सं० ८। १५; मैत्रा० सं० १। ७। २.

इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ॥ २ ॥

इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । वाससीइव । कन्येइव ॥४॥

## अव्ययीभावः ॥ २ । १ । ५ ॥

किमर्थं महती संज्ञा क्रियते ? अन्वर्थसंज्ञा यथा विज्ञायेत—अनव्ययमव्ययं भवतीत्यव्ययीभावः । अव्ययीभावश्च समासोऽव्ययसंज्ञो भवतीत्येतन्न वक्तव्यं भवति* ॥५॥

## अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥ २ । १ । ६ ॥

इह कस्मान्न भवति—सुमद्राः सुमगधाः, सपुत्रः सच्छात्र इति । समृद्धौ

प्र०— इवेनेति । सुपेत्यस्य लक्षणत्वात्समासे सिद्धे कार्यान्तरविधानार्थं वचनम् । वाससीइवेति । वासः शब्दो 'वसेर्णि'दित्यसुन्प्रत्ययान्तत्वादाद्युदात्तः । समासादुत्पन्नस्य सोरव्ययादिति लुक् । कन्ये इति । 'कन्याराजन्यमनुष्याणा'मिति फिट्सूत्रपाठात्कन्याशब्दोऽन्तस्वरितः ॥४॥

अव्ययीभावः । किमर्थमिति । लाघवार्थत्वात्संज्ञाकरणस्याल्पाक्षरा संज्ञा कर्तव्येति प्रश्नः । अन्वर्थसंज्ञेति । बृहत्संज्ञाकरणेन किंचिदव्ययकार्यं प्राप्यते, अनव्ययमव्ययमिति अव्ययकार्यलाभादित्यर्थः । न वक्तव्यमिति । तदकरणे 'लुङ्मुखस्वरोपचाराः प्रयोजन'मिति कथं परिगणनं क्रियत इति चेत्, इह तु क्रियताम्, अन्वर्थत्वेन वा विशिष्टकार्यविषयमव्ययत्वमनुमास्यत इत्यदोषः । पूर्वपदार्थप्राधान्यं त्वव्ययीभावस्य प्रायिकं, न तदन्वर्थसंज्ञया सूच्यते । सूपप्रतीत्यादावुत्तरपदार्थस्य प्राधान्यम् । उन्मत्तगङ्गमित्यादावन्यपदार्थस्य प्रधानता ॥५॥

अव्ययं वि । इह कस्मादिति । समुदायस्य संस्कार्यत्वात्प्राधान्यात्तस्यैव विभक्त्यादयो विशेषणानि । अस्ति चात्र समुदायात्समृद्धिसाकल्यप्रतिपत्तिरिति प्रश्नः । सपुत्र इति । अत्र साकल्यं प्रतीयते, 'सपुत्रो भोक्तुमागत' इति प्रयोगे पुत्रा कल्पने-

उ०—[illegible] भावः । अन्यत इति सूचितामरुचिमाह—काठकेऽन्तोदात्त इति । अव्ययादिति लुगिति । [illegible] भावः ॥४॥

अव्ययीभावः । [illegible] कार्यै[illegible] । न तदन्वर्थेति । [illegible] भावः । प्रायिकत्वमेव दर्शयति—सूपेत्यादि ॥५॥

अव्ययं वि । समुदायस्येति । [illegible] सहितमव्ययं [illegible]

* अव्ययीभावश्च १. १. ४१.

साकल्य इति च प्राप्नोति ।

नैष दोषः । इह कश्चित्समासः पूर्वपदार्थप्रधानः, कश्चिदुत्तरपदार्थप्रधानः, कश्चिदन्यपदार्थप्रधानः, कश्चिदुभयपदार्थप्रधानः । पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्वः । न चात्र पूर्वपदार्थप्राधान्यं गम्यते ।

अथवा नेमे समासार्था निर्दिश्यन्ते । किं तर्हि ? अव्ययार्था इमे निर्दिश्यन्ते—'एतेष्वर्थेषु यदव्ययं वर्तते तत्सुबन्तेन सह समस्यत' इति ॥६॥

## यथाऽसादृश्ये ॥ २ । १ । ७ ॥

असादृश्य इति किमर्थम् ? यथा देवदत्तस्तथा यज्ञदत्त इति ।

प्र०—नानीता, न कश्चित्परिशेषित इति संप्रत्ययात् । इह कश्चिदिति । बाहुल्याभिप्रायेणैतदुच्यते, क्वचिदन्यथापि दर्शनात्—अर्धपिप्पलीत्यादौ । अन्यतमप्राधान्यसम्भवे अन्वर्थसंज्ञाविज्ञानात्—पूर्वपदार्थप्राधान्य एवाव्ययीभावसंज्ञा भवति । वचनसामर्थ्यात्तु पूर्वपदार्थप्राधान्यासम्भवेऽपि सूपप्रति उन्मत्तगङ्गमित्यादौ प्रवर्तत एव ।

अथवेति । अव्ययस्य श्रुतत्वादन्तरङ्गत्वात्तस्यैव विभक्त्यादयो विशेषणानि । तत्र यदोत्तरपदार्थावच्छिन्नाः समृद्ध्यादयः प्रतिपादयिषिता भवन्ति तदाव्ययं समृद्ध्यादीनां वाचकमिति तेषां तदर्थता भवति । 'सुमद्रा' इत्यत्र तु मद्रशब्द एव समृद्धिविशिष्टमर्थमाह, सुशब्दस्तु समृद्धिद्योतको न तु वाचकः । सपुत्र इत्यत्रापि सहशब्दस्तुल्ययोगस्य वाचकः न तु साकल्यस्य । तत्तु प्रकरणादिसहितात्समुदायात्प्रतीयते ॥ ॥

यथाऽसादृश्ये । असादृश्य इति किमर्थमिति ।

उ०—वर्तमानव्ययीभावसंज्ञकमिति वचनव्यक्त्येत्यर्थः ॥ अन्वर्थसञ्ज्ञाविज्ञानादिति । प्राचीनोक्तमहासञ्ज्ञाकरणेन तत्संमतोऽर्थोऽस्यस्य संमत इति भावः । अव्ययस्य श्रुतत्वादिति । श्रुतत्वरूपान्तरङ्गत्वादित्यर्थः । सूत्रे श्रुतयोरेव प्रथमं संबन्धः पश्चात्प्रकरणलब्धेनेत्येव युक्तमिति भावः । प्रतिपादयिषित इति । 'विशेष्यतये'ति शेषः । तदुक्तम्—उत्तरपदार्थावच्छिन्ना इति । द्योतकत्वपक्षे तु द्योत्यार्थस्य समभिव्याहृतार्थविशेषणत्वमेवेति भावः । तदाह—समृद्ध्यादीनां वाचकमिति । निपातानां द्योतकत्वं, वाचकत्वं च, लक्ष्यानुरोधाच्च व्यवस्थेति भावः । वाचक इति । पुत्रसहित इति सहार्थविशेष्यकबोधादिति भावः । न तु साकल्यस्येति । 'सतृणमत्ती'त्यादौ तु तुल्ययोगस्य बाधेन झटिति प्रथममेव सकलमत्तीति बोधात् साकल्यबोधकतया सहशब्दस्येति भावः । 'अपदिश'मित्यादीन्यखण्डान्येवाऽव्ययानि दिशोर्मध्यादिवाचकानीत्याशयेन भगवता योगविभागो नाऽकारि ॥६॥

यथाऽसा । 'यथाशब्दः सुबन्तेन समस्यते, सादृश्ये द्योत्ये ने'ति सूत्रार्थः । 'यथावृद्धी'त्याद्युदाहरणम् । यथार्थत्वेन तु न सिद्धिः, सूत्रगृहीताऽव्ययेन तेन समासाभावात् । अतः पृच्छति—असादृश्य इति किमर्थमिति । अत एव सूत्रं किमर्थमिति न प्रश्नः । पूर्वसूत्रे

असादृश्य इत्युच्यते, तत्रेदं न सिध्यति—यथाशक्ति यथाबलमिति । किं कारणम् ? यथेत्ययं प्रकारवचने थाल्, स च सादृश्ये वर्तते* ।

नैष दोषः । अयं यथाशब्दोऽस्त्येवाव्युत्पन्नं[1] प्रातिपदिकं वीप्सावाचि[2] । अस्ति प्रकारवचने थाल् । तद्यदव्युत्पन्नं प्रातिपदिकं वीप्सावाचि तस्येदं ग्रहणम् ।

प्र०— सापेक्षत्वादसामर्थ्यं, वृत्तिः सादृश्य एव च ।
पूर्वप्राप्तनिषेधश्च, प्रश्नेऽस्मिन्कारणत्रयम् ॥

यथा देवदत्त इति । समुदायस्य चात्र सापेक्षत्वात्तस्य च प्राधान्यादुपमानस्य चोपमेयं प्रति नित्यसापेक्षत्वात्समासः प्राप्नोति । स च सादृश्य इति । 'प्रकार'-शब्दस्य सादृश्यार्थकत्वात् प्रकारे व्युत्पादितस्य यथाशब्दस्य सादृश्ये वृत्तिरित्यर्थः । अस्त्येवेति । अर्थवत्सूत्रारम्भादव्युत्पन्नानामपि सम्भवोऽवगम्यते । वीप्सावाचीति । वीप्साग्रहणमुपलक्षणं, तेन योग्यतापदार्थानतिवृत्ती अपि यथार्थौ । तस्येदमिति ।

उ०—यथाग्रहणं तदर्थाऽर्थकाम्यादिभिः समासार्थम् । सापेक्षत्वादिति । उपमानत्वेन बुद्धस्योपमेये साकाङ्क्षत्वादिति भावः । वृत्तिरिति । शक्तिरित्यर्थः । एवं च उदाहरणाऽप्रसिद्धिरिति भावः । पूर्वप्राप्तीति । अनन्तरत्वात् । एवं च पूर्वेण तत्र समासो दुर्वार इति व्यावर्त्याऽप्रसिद्धिरिति भावः । समुदायस्य चेति । यद्धर्मवान्देवदत्त इत्यर्थकस्य 'यथादेवदत्त' इति समुदायस्येत्यर्थः । ये तु देवदत्तसादृश्यवान् यज्ञदत्त इति बोधं वदन्ति, तेषां 'प्रधानस्य सदृक्षस्य सापेक्षत्वा'दित्येवालं, 'समुदायस्ये'त्युक्तेर्वैयर्थ्यम् । मम तु केवलप्राधानास्यार्थऽसापेक्षत्वा-त्तथोक्तिः । नित्यसापेक्षत्वादिति । प्रधानस्योपमानस्य सापेक्षत्वान्नित्यसापेक्षत्वाच्चेत्यर्थः । 'नित्यसापेक्षं सर्वं समस्यत' इति भाष्ये क्वास्तीति चिन्त्यम् । 'देवदत्तस्य गुरुकुल'मित्यादिषु गमकत्वाद् वृत्तिः, 'किमोदनः शालीना'मित्यादीनामिवेत्येव समर्थसूत्रे भाष्ये उक्तम् । तत्र 'यथाशब्द उपमानत्वं द्योतयती'त्यभियुक्तोक्तेस्तस्य विशेषणत्वेन पूर्वपदार्थप्राधान्याभावेऽपि द्विमुनीत्यादिवत्समासप्राप्तिः, तदभावे हि प्रसिद्धत्वादस्यैव ग्रहणं स्यादिति तात्पर्यम् ।

सादृश्यार्थकत्वादिति । सादृश्यप्रयोजकभेदकधर्मार्थकत्वादिति भावः । अत एव थाल्विधायके वृत्तावुक्तं—'सामान्यस्य भेदको विशेषः—प्रकार' इति । वचनपदस्वारस्यात्तु तद्वाचकता । एवं च 'यथादेवदत्त' इत्यादौ यद्धर्मवान् देवदत्तस्तद्धर्मवान् यज्ञदत्त इति बोधे यत्तदर्थां तस्य धर्मस्यैक्येऽवगते—उपमानोपमेयत्वस्यावगतिरिति 'सादृश्ये वर्तते' इत्यस्य उपमानोपमेयत्वद्योतक इत्यर्थः । ईदृशसादृश्यद्योतकस्यापि ग्रहणेऽसादृश्ये इति प्रतिषेध एव मानमिति बोध्यम् । सादृश्यस्य थाप्रत्ययवाच्यत्वे तु यत्सदृशो देवदत्तस्तत्सदृशो यज्ञदत्त इत्येव बोधः स्यान्नतु देवदत्तयज्ञदत्तयोः सादृश्यबोध इति दिक् । सादृश्ये वृत्तिरिति । सादृश्ये एव वृत्तिरित्यर्थः । एवं च सूत्रं व्यर्थमिति भावः ।

अर्थवत्सूत्रारम्भादिति । 'बहुपटव' इत्याद्यर्थं 'बहुरूपूर्व' इत्येव कर्तव्यमिति भावः ।

* प्रकारवचने थाल् ५. ३. २३. १–'अव्युत्पन्नः' पा० । २–'वाची' पा० ।

अथ यः प्रकारवचने थाल् तस्य ग्रहणं कस्मान्न भवति । पूर्वेण प्राप्नोति 'सादृश्यसंपत्ती'ति† । प्रतिषेधवचनसामर्थ्यान्न भविष्यति ॥७॥

## सुप्प्रतिना मात्रार्थे ॥ २ । १ । ९ ॥

'सु'बिति वर्तमाने‡ पुनः सुब्ग्रहणं किमर्थम् ? 'अव्यय'मित्येवं तदभूत्, सुब्मात्रे यथा स्यात्—माषप्रति सूपप्रति ओदनप्रति ॥९॥

प्र०-सूत्रेऽस्मिन्नित्यर्थः । प्रतिषेधवचनसामर्थ्यादिति । 'यथार्थे यदव्यय'मिति पूर्वेणैव सिद्धे समासे सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्य ॥७॥

सुप्प्रतिना । सुबिति वर्तमान इति । 'सुबामन्त्रिते' इत्यतः । अव्ययमित्येवमिति । अव्ययग्रहणसम्बद्धमभूदित्यर्थः । 'यावदवधारणे' इत्यत्र यावच्छब्दोऽव्ययमेव संगृहीतः । तथा च यावन्त्यमत्राणीत्यनव्ययेन वाक्यं प्रदर्श्यते । अन्यथा नित्यसमासत्वाद्वाक्यं न स्यात् । स्वरादीनां च दोषामन्यमहर्दिवामन्या रात्रिरिति वृत्तिविषये सत्त्वप्रधानतादर्शनान्मात्रावति वृत्तिरविरुद्धेति अव्ययस्यैवायं समासः स्यात् ॥९॥

उ०—कथंचो गतिकारकपूर्वस्य ग्रहणमिति तु ज्ञापकसिद्धस्याऽसार्वत्रिकत्वादेवाशयः । भाष्ये 'इद'मित्यस्य एतत्सूत्रीयमिति भाष्योऽर्थः । तद् व्यनयन् व्याचष्टे–सूत्रेऽस्मिन्निति । इदमुपलक्षणं 'यथाशक्ती'ति प्रयोगे चेत्यप्यर्थः । तत्र 'यथाशक्ती'ति प्रयोगे सादृश्यवाचिन एव ग्रहणं कुतो नेति शङ्कते—अथ य इति । तस्य—तदन्तस्य । सादृश्यं तस्य वाच्यमेवाऽस्तु, शक्तिसादृश्यमित्याद्विरेवार्थोऽस्तु, एतत्सूत्रं च माऽस्तु इति भावः । अव्युत्पन्नशब्दसत्त्वे मानमपश्यतोऽर्थघटितं साधुत्वमित्यजानतश्च शङ्केयम् । 'प्रकृतसूत्रे प्रकारवचनथालन्तस्य ग्रहण'मिति तु न शङ्कार्थः, असादृश्य इत्यस्य सूत्रे श्रवणात्, 'पूर्वेण प्राप्नोति, सामर्थ्यान्ने'त्यस्याऽसंगतेश्च । नन्वेवं समासो न स्यादत आह—पूर्वेणेति । सादृश्यसंपत्तीति । यथार्थत्वेन तु न प्रसिद्धता, सूत्रगृहीताऽव्ययेन तेन समासाऽभावात् । अत एव पश्चाच्छक्त्येन न तेन सूत्रेण समासः । उत्तरमाह—प्रतिषेधेति । प्रतिषेधयुक्तसूत्रारम्भेत्यर्थः । एतदर्थमेव सूत्रभाष्यकम् । 'यथार्थे यदव्यय'मिति कैयटस्तु चिन्त्यः, तेनाऽप्राप्तेरुक्तत्वात् । उपक्रमभाष्यस्यैव कामात् ॥७॥

सुप्प्रतिना मा । नन्वव्ययग्रहणं 'यावदवधारणे' इत्यत्रैव निवृत्तमतोऽव्ययस्यादिति चेन्नेत्याह—यावदिति । 'यावदमत्रं ब्राह्मणानामन्त्रयस्वे'त्युदाहरणम् । ननु प्रतिना समासप्रयोगाभावादेव तन्निवृत्तिर्भविष्यतीत्यत आह—स्वरादीनां चेति । मात्रावतीति । तथा च दिवादोषादिभिरव्ययैरेव प्रतिना समासः स्यादित्यर्थः ॥९॥

---

† अव्ययं विभक्ति···वाक्यान्तवचनेषु २. १. ६. ‡ सुबामन्त्रिते पराङ्गवत्स्वरे २. १. २.

## अक्षशलाकासंख्याः परिणा ॥ २ । १ । १० ॥

**अक्षादयस्तृतीयान्ताः परिणा पूर्वोक्तस्य यथा न तत् ।**

अक्षादयस्तृतीयान्ताः परिणा सह समस्यन्त इति वक्तव्यम् । 'पूर्वोक्तस्य यथा न तत्' । अयथाजातीयके द्योत्ये[1] । अक्षेणेदं न तथा वृत्तं यथा पूर्वमिति—अक्षपरि शलाकापरि ।

**एकत्वेऽक्षशलाकयोः ॥**

अक्षशलाकयोश्चैकवचनान्तयोरिति[2] वक्तव्यम् । इह मा भूत्— अक्षाभ्यां वृत्तम्, अक्षैर्वृत्तमिति[3] ।

**कितवव्यवहारे च[4] ।**

कितवव्यवहार इति वक्तव्यम् । इह मा भूत्—अक्षेणेदं न तथा वृत्तं शकटेन यथा पूर्वमिति ।

प्र०- अक्षशलाका तृतीयान्ता इति । विभक्त्यन्तरनिरासार्थमेतदुक्तम् । न्यायाच्चैतत् सिद्ध्यति । अक्षादीनां वर्तनक्रियायां कर्तृत्वादित्यर्थः । पूर्वोक्तस्येति । पूर्ववृत्तस्येत्यर्थः । अनेकार्थत्वाद्धातूनां नियतविषयत्वाच्च वचिरिह वर्तने वर्तते । तदेव 'यथा न त'दिति तच्छब्देन परामृश्यते । अभिधानार्थे तु वचौ तच्छब्देन परामर्शोऽसंबद्धः स्यात् । अयथाद्योतन इति । जयकाले अक्षादीनामेकरूपं यद्वर्तनं तद्विपरीतं पराजये यद्वर्तनं तद् यदा परिणा द्योत्यते तदा समासः ।

एकवचनान्तयोरिति । समासे द्वित्वाद्यनवगमादेकत्वस्यान्यनिरपेक्षत्वादन्तरङ्गत्वाद्वगतिसंभवान्न्यायप्राप्तमेतदित्याहुः । यदुक्तम्—'अभेदैकत्वसंख्या वृत्तौ गम्यते' इति, तद् बाहुल्याभिप्रायेण । कितवव्यवहार इति । पञ्चिका नाम द्यूतं पञ्चभिरक्षैः

उ०- अक्षशलाका । विभक्त्यन्तरनिरासार्थमिति । विभक्त्यन्तरभ्रमनिरासार्थमित्यर्थः । कर्तृत्वादिति । वर्तनक्रिया च वृत्तावन्तर्भूता, गुडधाना इत्यादौ मिश्रणक्रियावदिति भावः । पूर्ववृत्तस्येत्यर्थ इति । पूर्वं वृत्तस्य जयस्य संबन्धि यथा वर्तनमभूत् संप्रति चेत्तद्वर्तनं तथा न भवति तदा समास इत्यर्थः, 'पूर्वोक्तस्य यथे'ति भाष्यस्येति भावः । वचिरिहेति । एतद्भाष्यप्रयोगे इत्यर्थः । तदेव—वर्तनमेव । तस्यैव फलितार्थमाह भाष्ये—अयथाद्योतन इति । अयथाशब्दो वैपरीत्ये—विपरीतस्य द्योतने इत्यर्थः । पराजयद्योतने इति यावत् । पराजय इति । पञ्चानां मध्ये एकेन विपरीतवर्तनेऽयं प्रयोगः । तदा च पराजय एव भवतीत्याशयः । तदेतद्ध्वनयन्नवक्ष्यति—पञ्चिका नाम द्यूतमिति । तद्विषय एव चायं प्रयोग इष्यते ।

---

१-'अयथाद्योतने' इत्यधिकं क्वचित् । २-'अक्षशलाकयोश्चैकवचनान्तयोः' पा० । ३-'इति' क्वचिन्न । ४-अस्य वार्तिकस्य पाठ 'एकत्वेऽक्षशलाकयो'रित्यस्मात्पूर्वं समुचितः प्रतीयते ।

**अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य तथा न तत् ।**
**कितवव्यवहारे च एकत्वेऽक्षशलाकयोः ॥१०॥**

## विभाषाऽपपरिबहिरञ्चवः पञ्चम्या ॥ २ । १ । ११–१२ ॥

योगविभागः कर्तव्यः । 'विभाषे'त्ययमधिकारः । ततो'ऽपपरिबहिरञ्चवः पञ्चम्ये'ति ।

पञ्चमीग्रहणं शक्यमकर्तुम् । कथम् ? सुबन्तेनेति* वर्तते, एतैश्च कर्म-

प्र०-शलाकाभिर्वा भवति । तत्र यदा सर्वे एकरूपाः पतन्ति तदा पातयिता जयति । अन्यथा तु पाते पराजीयते ॥१०॥

विभाषा । योगविभाग इति । अन्यथेहैवास्योपयोग आशङ्क्येत । योगविभागे त्वधिकारो गम्यते । अपपरिशब्दौ परस्परसाहचर्याद्वर्जनार्थौ ग्रहीष्येते । तौ च कर्मप्रवचनीयौ । तद्योगे पञ्चम्येव विहिता । बहिर्योगेऽपि 'बहिर्योगे चोपसंख्यान'मिति विहिता । अञ्चूत्तरपदलक्षणा च विहिता । प्राग्ग्राम इत्यादौ तु समासो न भविष्यति । पूर्वपदार्थप्राधान्य एव सति संभवेऽव्ययीभावस्य विधानादित्यभिप्रायेणाह—पंचमीग्रहणमिति । एतैश्चेति । वक्ष्यमाणाऽऽङपेक्षया बहुवचननिर्देशः । अथेति । बहिर्गतो

उ०- यद्यपि द्वयोस्त्रयाणामन्यथा पातेऽपि पराजय एव, तथापि तत्र नेष्यतेऽत आह—एकवचनान्तयोरिति । न्यायप्राप्तमेतदिति । वस्तुतस्तु 'भवद्गिरामवसरप्रदानाय वचांसि नः', 'वध्वोरगारं वध्वगार'मित्यादाविव प्रकरणादिनाऽक्षत्वेनैवानेकार्थावगमे समासवारणाय अक्षत्वेनैकाऽक्षबोधे एव च साधुत्वाय वचनमावश्यकम् । अभेदैकत्वेति । अस्यार्थः प्रागुक्तः ॥१०॥

विभाषाऽप । कर्मप्रवचनीययोरपि अपपर्योः संभवाल्लक्षणादौ कर्मप्रवचनीययोरपञ्चम्यन्तेनापि समासप्रसङ्गाच्चाह—वर्जनार्थाविति । उपसंख्यानमिति । तच्च बहिर्ग्रामादित्यादिसिद्धये तथाप्यावश्यकमिति भावः । विहितेति । 'कर्तव्ये'ति शेषः । अन्यथाऽस्योपसंख्यानस्य स्वपुष्यमाणत्वादेवं सिद्धवदुक्तिरसंगता स्यात् । अत एव भाष्यकारोऽपि 'बहिःशब्देन पञ्चमी न विधीयते' इत्याह ।

नन्वञ्चूत्तरपदाद्यदा प्रथमान्तादस्तातिं विधायाऽञ्चेर्लुगिति लुक्, तदा प्रथमान्तेनापि समानाधिकरणेन तस्य समासः प्राप्नोतीत्यत आह—प्राग्ग्राम इति । अपपर्योरेव कर्मप्रवचनीयत्वाद् बहुवचनानुपपत्तेराह—वक्ष्यमाणेति । भाष्ये—'एतैश्च कर्मप्रवचनीयै'-

१-एकमेवेदं सूत्रम् । प्रचलितनानाग्रन्थैः सह मा भूत्सङ्ख्याङ्कविपर्यय इति कृत्वा द्वे सङ्ख्याङ्के लिखिते । एवमन्यत्रापि बोध्यम् ।

"पाणिनिकृतमेकमेवेदं सूत्रम् । इदानीन्तनैस्तु जयादित्यभट्टोजिदीक्षितादिभिर्द्वे सूत्रे व्याख्याते ।···तदिदं महाभाष्यतो विरुद्धमस्ति ।" (अष्टाध्यायीभाष्ये महर्षिदयानन्दः)

* सह सुपा २. १. ४.

प्रवचनीयैर्योगे पञ्चमी विधीयते† ।तत्रान्तरेणापि पञ्चमीग्रहणं पञ्चम्यन्तेनैव समासो भविष्यति ॥ इदं तर्हि प्रयोजनम्—बहिःशब्देन योगे पञ्चमी न विधीयते, तत्रापि यथा स्यात्—[ बहिर्ग्रामं ] बहिर्ग्रामात् ।

अथ क्रियमाणेऽपि पञ्चमीग्रहणे यावता बहिःशब्देन योगे पञ्चमी न विधीयते, कथमि[२]वैतत्सिध्यति ? पञ्चमीग्रहणसामर्थ्यात् ॥११-१२॥

## आङ् मर्यादाभिविध्योः ॥ २ । १ । १३ ॥

मर्यादाभिविधिग्रहणं शक्यमकर्तुम् । कथम् ? पञ्चम्यन्तेनेति* वर्तते, आङा च कर्मप्रवचनीयेन युक्ते पञ्चमी विधीयते††, एतयोश्चैवार्थयोराङ्कर्मप्रवचनीयसंज्ञा भवति नान्यत्र‡॥ १३॥

## यस्य चायामः ॥ २ । १ । १६ ॥

किमुदाहरणम् ? अनुगङ्गं हास्तिनपुरम्[३] । अनुगङ्गं वाराणसी । अनुशोणं

प्र०-ग्रामादित्यपादाने पञ्चमीसद्भावात्कथं तद्विधानं ज्ञाप्यत इति प्रश्नः । पंचमीग्रहणसामर्थ्यादिति । 'बहिर्गतो ग्रामा'दित्यत्राऽसामर्थ्यात्समासेन न भवितव्यं, तस्मात्षष्ठीविषये पञ्चमी बहिर्योगेऽनुमीयते । ततस्तदुपसंख्यानं न कर्तव्यम् ॥११-१२॥

यस्य चा । किमुदाहरणमिति । लक्ष्यलक्षणयोर्द्वयोरप्यायामवत्त्वात्संदिहानः

उ०-रित्यत्र छत्रिणो यान्तीतिवल्लक्षणया अब्धुरपि गृह्यते । अत एव बहुवचनोपपत्तिरित्येके । बहिर्गतो ग्रामादिति । ग्रामाद्यो गतः स बहिर्वर्त्तत इत्यर्थः । उपसंख्यानं न कर्त्तव्यमिति । अपूर्वं कर्त्तव्यमित्यर्थः ॥११-१२॥

आङ्मर्या । एतयोश्चैवार्थयोरिति । 'अपपरी'तिसूत्रे एव चाङ् पठनीय इति भावः ॥१३॥

यस्य चा । भाष्ये—न पुनर्वाराणस्येति । 'न पुनर्हास्तिनपुरेणे'ति पाठान्तरम् । यत्संबन्ध्यायामबोधकोऽनुः स तेन सुबन्तेनोपस्थितत्वात्षष्ठ्यन्तेन समस्यत इत्यर्थे गङ्गाया आयाम इत्यर्थेऽयं समासः स्यात् । 'वाराणसी'शब्देन च तदायामो लक्ष्यः, मुख्यार्थेनाऽन्वय-

† पञ्चम्यपाङ्परिभिः; (अन्यारादि···युक्ते) २ ३ १०; (२६) १-क्वाचित्कः पाठः ।
२-'कथमेष' पा० । * विभाषाऽपपरिबहिरञ्चवः पञ्चम्याः २. १ ११-१२
††पञ्चम्यपाङ्परिभिः २. ३. १०. ‡ आङ् मर्यादावचने १. ४ ८९.
३-सुहोत्रः खल्विक्ष्वाकुकन्यामुपयेमे सुवर्णां नाम । तस्यामस्य जज्ञे हस्ती; य इदं हास्तिनपुरं स्थापयामास । एतदस्य हास्तिनपुरत्वम् । (महाभारते आदि० ९५।३४)

पाटलिपुत्रम् ॥ 'यस्य चायाम' इत्युच्यते, गङ्गा चाप्यायता[1], वाराणस्य-प्यायता, तत्र कुत एतद् गङ्गया सह समासो भविष्यति[2], न पुनर्वाराणस्येति ? एवं तर्हि 'लक्षणेने'ति* वर्तते, गङ्गा चैव हि लक्षणं न वाराणसी ।

अथवा 'यस्य चायाम' इत्युच्यते, गङ्गा चाप्यायता वाराणस्यप्यायता, तत्र प्रकर्षगतिर्विज्ञास्यते 'साधीयो यस्यायाम' इति । साधीयश्च गङ्गायाः, न वाराणस्याः ॥१६॥

## तिष्ठद्गुप्रभृतीनि च ॥ २ । १ । १७ ॥

किमर्थश्चकारः ? एवकारार्थः । तिष्ठद्गुप्रभृतीन्येव । क मा भूत् ? परमं तिष्ठद्गु ।

### तिष्ठद्गु कालविशेषे ॥ १ ॥

तिष्ठद्गु कालविशेष इति वक्तव्यम् । तिष्ठन्ति गावोऽस्मिन्काले स[3] तिष्ठद्गु वहद्गु ।

प्र०-पृच्छति । गङ्गा चैव लक्षणमिति । अनेकदेशव्यापाया गङ्गाया आयामवत्त्वेनाऽनेक-जनापेक्षया प्रसिद्धत्वात्तस्या एव लक्षणत्वम् । ततो यद्यपि कस्यचित्पुरुषस्य हास्तिन-पुरमायामवत्त्वेन प्रसिद्धं, न गङ्गा, तथापि न तदपेक्षया प्रयोगव्यवस्था । किं तर्हि ? प्रचुरलोकापेक्षया ॥ अथवेति । 'लक्षणेने'त्यस्यानुवृत्त्या विनापीष्टसिद्धिं दर्शयति । उपमानोपमेयभावे चायं समास इष्यते । न्यूनगुणं चोपमेयं, परिपूर्णगुणमुपमानं, तत्र संपूर्णगुणसन्निधौ न्यूनगुणमसद्गुणमिव प्रतिभातीति सामर्थ्यात् प्रकर्षगतिर्विज्ञायते । प्रकृष्टाऽप्रकृष्टसन्निधौ च प्रकृष्टस्य कार्येण सम्बन्धो नेतरस्य ॥१६॥

तिष्ठद्गु । किमर्थ इति । समुच्चेतव्यस्याऽभावात्प्रश्नः । एवकारार्थ इति । अने-कार्थत्वान्निपातानामिति भावः । तेन तिष्ठद्गुप्रभृतीन्येवैकार्थीभावविषयाणि भवन्ति, न तु शब्दान्तरेणैकार्थीभावं प्रतिपद्यन्त इत्यर्थः । वहद्गु इति । अस्य कालविशेषवृत्ति-

उ०-बाधात् । एवं च गङ्गाऽऽयामसदृशो वाराणस्यायाम इति बोध इति वाच्यम् । एवं च वाराणसीशब्देन मुख्यार्थेनानुना समासोऽस्तु, गङ्गाशब्द एव लक्षणयाऽऽयामे वर्तताम् । एवं च प्रागुक्त एवार्थेऽनुवाराणसि गङ्गेति स्यादिति भावः । भाष्ये—तत्र प्रकर्षगतिरिति । अव्य-यशक्तिस्वाभाव्यादुपमानवाचकेनैवायं समास इति भावः ॥१६॥

तिष्ठद्गु । शब्दान्तरेणैकार्थीभावमिति । प्रकरणादेकार्थीभावविषयं समासमित्यर्थः । तद् व्यवच्छिनत्ति भाष्ये परमं तिष्ठद्गिविति । ध्वनितं चेदं वृत्तौ । 'नातिष्ठद्गु[4] अयमगच्छत्'मिति तु भिन्नपदमेव, पञ्चम्याश्चाव्ययादिति लुगिति बोध्यम् । तिष्ठद्गु कालविशेष इत्युक्त्वाद्

१–'हास्तिनपुरमप्यायत' इत्यधिकं क्वचित । २–'न पुनर्हास्तिनपुरेण' इत्यधिकं क्वचित् ।
* लक्षणेनाभिप्रती आभिमुख्ये २ । १ । १४ ३–'विज्ञायते' पा० । ४–क्वचित ।
५–भट्टिप्रयोगोऽयम् (४।१४) । 'आङ् मर्यादाभिविध्योः' २ १.१३. इत्यव्ययीभावस्तु भवतीति जयमङ्गला ।

## खलेयवादीनि प्रथमान्तान्यन्यपदार्थे ॥ २ ॥

खलेयवादीनि प्रथमान्तान्यन्यपदार्थे समस्यन्ते [ इति [1]वक्तव्यम् ] खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् [2]तंयवम् पूयमानयवम् ॥१७॥

## पारे मध्ये षष्ठ्या वा ॥ २ । १ । १८ ॥

वावचनं किमर्थम् ? विभाषा समासो यथा स्यात्, समासेन मुक्ते वाक्यमपि यथा स्यात्—पारं गङ्गाया इति । नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा, तया वाक्यमपि भविष्यति ।

इदं तर्हि प्रयोजनमव्ययीभावेन मुक्ते षष्ठीसमासो* यथा स्यात्—गङ्गापारमिति । एतदपि नास्ति प्रयोजनम् । अयमपि विभाषा, षष्ठीसमासोऽपि,

प्र०-त्वप्रदर्शनार्थमुपक्षेपः । खलेयवादीनीति । अव्यतिरिक्त एव प्रातिपदिकार्थे एषां प्रयोगः कर्तव्यो नान्यत्रेति भावः । अन्यपदार्थ इति । न काल एवापि त्वन्यत्रापीत्यर्थः ॥१७॥

पारे । वावचनमिति । महाविभाषयैव च वाक्यस्य षष्ठीसमासस्य च सिद्धत्वादिति भावः । इतरो न्यायप्रपञ्चार्थं स्ववाचा वा जल्पयितुं स्वाशयमप्रकाशयन्नाह—विभाषेति । अयमपीति । षष्ठीसमासे प्राप्तेऽव्ययीभाव आरभ्यते, स नित्यं बाधकः प्राप्त इति महाविभाषाधिकाराद्विकल्पेन बाधको भवतीति पक्षे षष्ठीसमासः सिध्यति, सोऽपि विकल्पेन विधीयत इति वाक्यमपि भविष्यतीत्यर्थः ।

उ०—बहुद्गु इत्यसंगतमत आह—अस्य कालविशेषेति । वार्तिकमुपलक्षणमिति भावः । कालेऽन्यपदार्थे समासः ।

ननु व्यतिरिक्ते प्रातिपदिकार्थे कथं प्रथमान्तान्येव प्रयोज्यानीत्यत आह—अव्यतिरिक्त एवेति । भेदान्वयायोग्ये इत्यर्थः । 'खलेयवादीन्यन्यपदार्थे समस्यन्ते तानि च समस्तानि प्रथमान्तान्येव प्रयोक्तव्यानी'त्यर्थो वार्तिकस्येति बोध्यम् । ननु तिष्ठद्ग्वादीनामपि कालरूपान्यपदार्थ एव वृत्तेः किं विशेषोक्त्येत्यत आह—न काल एवापि त्विति । त्वन्यत्रापीत्यर्थः ॥१७॥

पारे मध्ये । स्ववाचेति । जल्पनापेक्षया करणे तृतीया । सिद्धान्ती त्वमत्रापि स्वपदार्थः । पुनर्यदि मां प्रक्ष्यति तदा स्वाशयं वक्ष्यामीत्याशयेनेति भावः । विकल्पेन बाधक इति । इतिवसंमवादिनां विधेयसंज्ञाविशेषणं विभाषाधिकारः । तत्र यत्र संज्ञान्तरप्राप्तिस्तत्र वाक्यमनुज्ञायते, यत्र न, तत्र वाक्यमेवेत्यभिप्रायः ।

१–क्वचित् । २–'पूनयवम्' पा० । * षष्ठी २. २. ८.

तावुभौ वचनाद्भविष्यतः ॥ अत उत्तरं पठति—

**पारे मध्ये षष्ठ्या वावचनम् ॥ १ ॥**

पारे मध्ये षष्ठ्या वेति वक्तव्यम् ।

**अवचने हि षष्ठीसमासाभावो यथैकदेशिप्रधाने ॥ २ ॥**

अक्रियमाणे हि वावचने षष्ठीसमासस्याभावः स्यात्, 'यथैकदेशिप्रधाने'† । तद्यथा,—एकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति । किं पुनः कारणमेकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति ? समासतद्धितानां वृत्तिर्विभाषा, वृत्तिविषये नित्योऽपवादः । इह पुनर्वावचने क्रियमाण एकया वृत्तिर्विभाषा, अपरया वृत्तिविषये विभाषापवादः ।

प्र०— अत उत्तरमिति । एतस्मात्पश्चादुपरीत्यर्थः । वक्तव्यमिति । 'कृत्याश्चे'त्यावश्यके कृत्यः । एकदेशिप्रधान इति । ननु 'पूर्वकाय' इत्यादौ पूर्वपदार्थ एकदेशः प्रधानम्, न त्वेकदेशी । एवं तर्हि—एकदेशिनोऽनूद्यमानत्वादप्रधान्यं, समासस्य तु विधेयत्वात्प्राधान्यम् । तत्रैकदेशिनः प्रधानमिति षष्ठीसमासेन समास उच्यते । अथवा प्राधान्येन निमित्तत्वं लक्ष्यत इति बहुव्रीहावपि न दोषः । समासतद्धितानामिति । तुल्यन्यायत्वाद्विचाराय तद्धिता अपि निर्दिष्टाः । इह वाक्येनाभिधाने प्राप्ते वृत्तिरारभ्यमाणा वाक्यस्य बाधिका प्राप्नोतीति विकल्पेन वाक्यस्य पक्षेऽनुज्ञानं क्रियते । तत्रापवादेऽपि विकल्पेन विधीयमाने विकल्पो वाक्यस्यैवानुज्ञानं करोतीति उत्सर्गस्य नित्येन बाधेन भाव्यम् । तत्र वाग्रहणेनोत्सर्गोऽपि पक्षेऽभ्यनुज्ञायत इति त्रैरूप्यं सिध्यति । एकयेति । विभाषयेत्यर्थः । अपरयेति । इदमेव वावचनमु'दश्वितोऽन्यतरस्या'मित्यन्यतरस्याङ्ग्रहणं च ज्ञापकम्—'यत्रोत्सर्गापवादौ वृत्तिषु विभाषा, तत्रापवादेन मुक्त उत्सर्गो न

उ०— एतस्मादिति । एतस्माद्वावचनं किमर्थमिति पूर्वपक्षादुपरि तदुत्तरकाले तत्समाधानभूतं वार्तिकं पठतीत्यर्थः । सूत्रकारेण वाग्रहणस्य कृतत्वाद्वक्तव्यमित्यसङ्गतमित्यत आह—आवश्यके कृत्य इति । समास उच्यते इति । एकदेशिनः प्रधाने—विधीयमाने एकदेशिघटितसमुदायस्य विधीयमाने समासे इत्यर्थं इति भावः ॥ भाष्ये—वृत्तिर्विभाषेति । वृत्तिः—एकार्थीभावः । अयं भावः—'अपपरी'त्यादौ समास इत्यनुवृत्तम्, समर्थ इति च परिभाषयोपस्थितम् । तत्र लोकसिद्धैकार्थीभावः क्वास्ति, क्व नेति ज्ञातुमसमर्थानां बालानां स्फुटं बोधनाय तत्र तत्र सूत्रे समासादिसंज्ञाविधिवदेकार्थीभावरूपसामर्थ्यमपि विधेयम् । विभाषाग्रहणं च सामर्थ्येनैव संबध्यते, व्याख्यानात् । सामर्थ्ये समासविकल्पाविशेष 'सुबन्तं क्रियादिभिः सहोच्चार्यमाणं वा समर्थं भवति, समर्थं च समाससंज्ञं भवतीत्यर्थः । निषेधसूत्रैरपि समासनिषेधे सन्नियोगशिष्टन्यायेन सामर्थ्यनिषेधोऽपि, सामर्थ्यस्यैव वा निषेधः ॥ इह सुबर्था-

† पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २. २. १.

### एकारान्तनिपातनं च ॥ ३ ॥

एकारान्तनिपातनं च कर्तव्यम् । पारेगङ्गमिति । न कर्तव्यम् । सप्तम्या अलुका सिद्धम्† । भवेत्सिद्धं यदा सप्तमी, यदा त्वन्या विभक्तयस्तदा न सिध्यति ॥१८॥

## नदीभिश्च ॥ २ । १ । २० ॥

### नदीभिः संख्यासमासेऽन्यपदार्थे प्रतिषेधः ॥ १ ॥

नदीभिः संख्यासमासेऽन्यपदार्थे प्रतिषेधो वक्तव्यः । द्वीरावतीको देशः । त्रीरावतीको देशः । 'नदीभिः संख्ये'ति प्राप्नोति ।

न वक्तव्यः । इह कश्चित्समासः पूर्वपदार्थप्रधानः, कश्चिदुत्तरपदार्थप्रधानः, कश्चिदन्यपदार्थप्रधानः, कश्चिदुभयपदार्थप्रधानः । पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्वः । न चात्र पूर्वपदार्थप्राधान्यं गम्यते ।

प्र०-भवती'ति ॥ सप्तम्या अलुकेति । 'तत्पुरुषे कृती'ति बहुलग्रहणादिति भावः । यदा त्वन्या इति । 'पारेगङ्गादागत' इत्यादौ सप्तम्यर्थाभावात्सप्तम्यभावः ॥१८॥

नदीभिश्च । अर्थविशेषमनुपादाय पूर्वपदोत्तरपदमात्रनिर्देशेन समासोऽयं विधीयमानो द्विगोरिव बहुव्रीहेरपि बाधकः स्यादिति 'नदीभि'रिति वार्तिकारम्भः । न वक्तव्य इति । भाष्यकारो वार्तिकं प्रत्याचष्टे । पूर्वाचार्यविहितगुरुसंज्ञाश्रयणाद्यदुपाधीनां पूर्वाचार्याः संज्ञा व्यधिषत तदुपाधीनामेवैता भवन्ति । न चात्रेति । द्वीरावतीक इत्यादौ ।

उ०-वचनं तु सामर्थ्यादेकार्थीभाव एव संज्ञाया विकल्पबोधकमिति तद् ध्वनयन्नाह—वृत्तिरारभ्यमाणेति । वाक्यस्य—वाक्यविषयव्यपेक्षायाः । वृत्तिषु—एकार्थीभावविषयेषु । विभाषेति । महाविभाषया विकल्पितावित्यर्थः । न भवतीति । महाविभाषा विशेषणीभूतसामर्थ्येनैव संबध्यत इति ज्ञाप्यत इति तात्पर्यम् । सप्तम्यर्थाभावादिति । गङ्गायाः परादिति हि तत्रार्थः ॥१८॥

नदीभिश्च । भाष्ये—अन्यपदार्थ इति । समाहारातिरिक्ते इत्यर्थः । तद् ध्वनयन्नाह—द्विगोरिवेति । समाहारद्विगोरिवेत्यर्थः । परस्यापि बहुव्रीहेरनवकाशत्वाद्भाष्यसामान्यचिन्तापक्षे बाधकः स्यादिति भावः ॥ ननु पूर्वपदार्थप्राधान्ये एवाव्ययीभाव इत्यत्र न मानमत आह—पूर्वाचार्येति । गुरुसंज्ञया महार्थकत्वं दर्शयति—यदुपाधीनामिति । उपाधिश्चात्र तत्तदर्थप्रधानत्वमेव । एवं च तत्कृतमहासंज्ञाऽऽश्रयेण व्यवहारात्तदुक्तार्थोऽस्यानुमत इति ज्ञाप्यत

† तत्पुरुषे कृति बहुलम् ६. ३. १४.

ननु च यद्येनोच्यते स तस्यार्थो भवति । अत्र च वयमेताभ्यां पदाभ्यामेतमर्थमुच्यमानं पश्यामः ॥ एतदेव न जानीमो यद्येनोच्यते स तस्यार्थ इति । अपि चान्यपदार्थप्रधानता[1] न प्रकल्पेत—चित्रगुः शबलगुरिति । किं कारणम् ? अत्रापि हि वयमेताभ्यां शब्दाभ्यामेतमर्थमुच्यमानं पश्यामः ।

यद्यप्यत्रैताभ्यां पदाभ्यामेषोऽर्थ उच्यते, अन्यपदार्थोऽपि तु गम्यते ।

प्र०- ननु पञ्चनदं द्वियमुनमित्यादौ मूलोदाहरणेऽपि पूर्वपदार्थप्राधान्यं नास्ति । समाहारो ह्यत्र समासार्थः । स च यदि समाहरणं समाहार इति भावरूपस्तदान्यपदार्थप्राधान्यम्, अथ समाह्रियत इति समाहारस्तथापि द्वे यमुने समाहृते द्वियमुनमिति पूर्वपदार्थविशिष्ट उत्तरपदार्थः प्रधानम् । नैष दोषः । समाह्रियमाणार्थः समाहारः । तत्र पूर्वं द्विशब्दार्थप्रक्रमे 'के द्वे' इत्याकाङ्क्षायां यदा 'यमुने' इत्युच्यते, तदोत्तरपदार्थस्य विशेषणत्वं, विशेष्यत्वं च पूर्वपदार्थस्य । अथवा वृत्तिविषये द्व्यादयः संख्यानमात्रे वर्तन्त इति यमुनयोर्द्वित्वमित्यत्रार्थे द्वियमुनशब्दो वर्तत इति भवत्येव पूर्वपदार्थप्राधान्यम ।

इदानीं चोदकोऽन्यपदार्थमाक्षिपति—ननु चेति । अयं भावः—द्वीरावतीक इति देशविशेषोऽभिधीयते । स च पूर्वोत्तरपदयोः सहितयोरर्थ इति द्वाभ्यामप्यसौ व्यपदिश्यते । ततः पूर्वपदार्थत्वाद्देशस्य तस्य च प्राधान्यात्प्राप्नोत्यव्ययीभावः ॥ एतदेवेति-सिद्धान्तवादी । अस्याभिप्रायः—समासेनान्यपदार्थः प्रतीयते, न तु पूर्वपदोत्तरपदाभ्याम् । तयोरन्वयव्यतिरेकाभ्यामर्थान्तराभिधायित्वावधारणात् । तथा हि—द्विशब्दो द्वित्वावच्छिन्नं संख्येयमात्रमाह, न देशम्, इरावतीशब्दोऽपि नदीविशेषमाह, न देशमिति द्विशब्दो देशस्यावाचक इति कथं पूर्वपदार्थप्राधान्यमभिधीयते । अपि चेति ।

उ०-इति भावः । समाह्रियमाणार्थः समाहार इति । समाहारशब्दः कर्मव्युत्पन्न एवेत्यर्थः । तदोत्तरपदार्थस्येति । ननु परिच्छेदकत्वरूपं विशेषणत्वं, परिच्छेद्यत्वरूपं विशेष्यत्वं यद्यपि तत्रायाति, तथापि विषयताविशेषरूपं तत्पूर्वपदार्थस्य दुर्लभम्, गुणद्रव्ययोर्द्रव्यस्यैव विशेष्यत्वात् । पूर्वपदार्थप्रधान्यमित्यादौ च प्राधान्यं विषयताविशेषरूपविशेष्यत्वमेव विवक्षितम्, अन्यत्र सर्वत्र तस्यैव संभवादित्यरुचेराह—अथवेति । इदमपि प्रौढिवादः । पञ्चनदीसमूहस्य पञ्चतोऽत्यन्तमेवाभावात्पूर्वपदार्थप्रधानत्वमपि [ तत्र ] वक्तुं शक्यम् । अत्र तु न तत्सम्भवोऽपीति भाष्याशय इति तत्त्वम् ।

द्वाभ्यामप्यसाविति । इयमपि रीतिर्द्वियमुनमित्यादौ वक्तुं युक्ता । भाष्ये-एतदेवेति । यद्येनोच्यते इत्यादिन्यायेन यत्पूर्वपदार्थप्राधान्यमुक्तम्—एतदेव न जानीमः—अत्र न पश्याम इत्यक्षरार्थः । तदेवाह—समासेनेति ॥ दोषवानिति । त्वदीत्या चित्रग्वादावपि समस्यमानपदाभ्यामेवार्थप्रतीतेर्वास्तवबहुव्रीहावप्यन्यपदार्थप्राधान्यं भज्येतेत्यर्थः ॥ भाष्ये—अन्यपदार्थोऽपि त्विति । विग्रहवाक्येऽन्यपदेन प्रतीयमानस्येह समासेन प्रतीयमानत्वा-

१-'अन्यपदार्थता न' पा० ।

तत्रान्यपदार्थाश्रयो बहुव्रीहिर्भविष्यति ॥ इहापि तर्हि यद्यप्यन्यपदार्थो गम्यते, स्वपदार्थोपि तु गम्यते, तत्र स्वपदार्थाश्रयोऽव्ययीभावः प्राप्नोति ।

एवं तर्हीदमिह संप्रधार्यम्—अव्ययीभावः क्रियतां बहुव्रीहिरिति बहुव्रीहिर्भविष्यति विप्रतिषेधेन । भवेदेकसंज्ञाधिकारे सिद्धम्, परंकार्यत्वे तु न सिध्यति । आरम्भसामर्थ्यादव्ययीभावः प्राप्नोति, परंकार्यत्वाच्च बहुव्रीहिः† ।

परंकार्यत्वे च न दोषः । नदीभिः संख्यायाः समाहारेऽव्ययीभावो

---

प्र०-त्वत्पक्षाभ्युपगमो दोषवानित्यर्थः ।

चोदकश्चोद्यमुद्भावितं परिहरति—यद्यपीति । स एव परस्य चोद्यमापादयति—इहापीति, प्राप्नोतीत्यन्तम् । अयमभिप्रायः—पूर्वपदोत्तरपदव्यतिरेकेण समासाभावात्तयोरेव समुदितयोर्देशोऽर्थ इति पूर्वोक्तन्यायेन पूर्वपदस्याप्यसावर्थ इति प्राप्नोत्येवाव्ययीभावः ॥ एवं तर्हीति । पुरस्तादपवादन्यायेनायं द्विगुमेव बाधते, बहुव्रीहिणा तु परत्वाद्बाध्यते । शेषग्रहणं च तत्र प्रत्याख्यातम् । त्रिकापेक्षो वा शेषः ।

---

उ०-दित्यर्थः । सिद्धान्त्युक्तित्वासंभवात् 'इहापि तर्ही'ति भाष्ये 'तर्हि'शब्द एवमर्थे । तद् व्यनक्ति—स एव परस्येति । केचित्तु देशस्यान्यपदार्थत्वेऽपि तद्देशस्वरूपे त्रीरावतीरूपस्वपदार्थस्याप्यन्तर्भावात्तस्य च त्रिपदार्थान्तर्गतेरकेणान्यपदार्थघटकतया पूर्वपदार्थस्य समाहार इव यथाकथंचित्प्रधानत्वसत्त्वाद् दुर्वारोऽव्ययीभाव इति भाष्यार्थमाहुः ॥ शेषग्रहणं चेति । अन्यथानयोः पदयोरुक्तसमाससत्त्वाद्बहुव्रीहिर्न स्यादिति भावः ॥ भाष्ये—भवेदेकसंज्ञाधिकार इति । 'बाध्यविशेषचिन्तायां'मिति शेषः । परंकार्यत्वे तु न सिध्यतीति । तत्र हि पाठे पूर्वयाऽनवकाशया बाधे प्राप्ते परविधानार्थमिदम् । एवं च समाहारेऽपि द्विगुः, सामर्थ्यादव्ययीभावश्चेत्यवश्यम् । एवं च पुरस्तादपवादन्यायाऽभावेन द्विग्वव्ययीभाववदन्यपदार्थविषये बहुव्रीह्यव्ययीभावावपि स्यातामिति भावः ।

भाष्ये—सिद्धान्त्याह नदीभिः संख्याया: समाहार इति । 'परं कार्य'मिति पाठे द्विगोः परत्राव्ययीभावप्रकरणं कार्यमित्यर्थः । एवं च द्विगुविषये न दोषः, अन्यपदार्थे तु प्राप्तिरेव नेति भावः । स चावश्यमिति । 'एका संज्ञे'ति पाठेऽपि 'समाहार' इत्यवश्यं वाच्यमित्यर्थः । भाष्ये तत्फलमाह—सर्वमेकनदीतरे इति । तदभावे 'पुरस्ता'दिति न्यायेन 'पूर्वकालैके'ति बाधित्वान्नैवाव्ययीभावः स्यात् । तथा च तत्प्रयुक्तं सर्व—टच् नपुंसकत्वं चात्र

---

† अनेकमन्यपदार्थे २. २. २४.

वक्तव्यः । स चावश्यं वक्तव्यः । 'सर्वमेकनदीतरे'† ॥२०॥

## द्विगुश्च ॥ २ । १ । २३ ॥

द्विगोस्तत्पुरुषत्वे कानि प्रयोजनानि ?

### द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम् ॥ १ ॥

द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजयन्ति—पञ्चगवम् दशगवम् । पञ्चराजम् दशराजम्* ॥२३॥

## द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥२।१।२४॥

### श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् ॥ १ ॥

प्र०- एकनदीतरे इति । यदि समाहारग्रहणं न क्रियते तदा 'पुरस्तादपवादा' इत्यनेन न्यायेनायं समासः 'पूर्वकालैके'ति समासं बाधेत, समाहारे तु परत्वाद्द्विगुः स्यात् । ततश्चैकनदीत्यत्राव्ययीभावे कृते तन्निबन्धनो 'नदीपौर्णमास्याग्रहायणीभ्य' इति वा टच्प्राप्नोति, नपुंसकत्वं च । यस्तु 'गोदावर्याश्च नद्याश्चे'त्यच्समासान्तः सोऽच्प्रत्यन्ववेत्यत्र योगविभागेन क्रियते, स चेष्टप्रसिद्ध्यर्थ इति तत्पुरुषे प्रयोगादर्शनादेकनदीत्यत्र न प्रवर्तते । अव्ययीभावे तु पञ्चनदमित्यत्र भवत्येव । एकापूपीवत्समाहारविवक्षायामेकनदमेकनदीति भवतीत्याहुः ॥२०॥

द्विगु । समासान्ता इति । यद्यपि टजचावेव तत्पुरुषनिबन्धनौ—पञ्चगवम् द्व्यङ्गुलमिति, तथापि प्रकृतिभेदाद्बहुवचननिर्देशः । पञ्चराजमिति । अकारान्तोत्तरपदत्वाभावात्स्त्रीत्वाभावः । यदा तु 'समासार्थोत्तरपदान्ताः समासान्ता' इति पक्षस्तदा तु पात्रादित्वात्स्त्रीत्वाभावः ॥२३॥

द्वितीया । गमिगाम्यादीनामिति । औणादिकानामन्येषां च संग्रहार्थमुभयो-

उ०-स्यादिति भावः । 'सर्वमेकनदीतरे' इति कस्यचित्पक्षस्य शेष इति बहवः । तृधालोत्तर इति रूपम् । 'तीर' इति क्वचित्पाठः । इत्यत्र भवत्येवेति । 'नदीपौर्णमासी'ति 'ट'जिति शेषः । एकापूपीवत्समाहारेति । प्रत्ययवयवमपूपपत्वारोपेणेत्यर्थः । भवतीत्याहुरिति । अत्रारुचिबीजं तद्वदत्र समाहारविवक्षायां मानाभाव इति ॥२०॥

द्विगुश्च । पात्रादित्वादिति । वस्तुत उत्तरपदावयवत्वपक्षो नास्त्येव, 'अन्त' इति सूत्रस्थभाष्यविरोधादिति 'समासान्ता' इति सूत्रे शब्देन्दुशेखरे स्पष्टं निरूपितमस्माभिः ॥२३॥

द्वितीया श्रिता । गमिशब्दो 'गमेरिनि'रित्यौणादिकः । गामीति वृद्धिर्बाहुलकात् ।

१-'नदीतीरे' पा० । † नदीपौर्णमास्याग्रहायणीभ्यः ५.४.११०; अव्ययीभावश्च २.४.१८.
२-इदं वार्तिकं कीलहार्नभाष्ये नास्ति । * गोरतद्धितलुकि; राजाहःसखिभ्यष्टच् ५.४.९२;९१.

श्रितादिषु गमिगाम्यादीनामुपसंख्यानं कर्तव्यम् । ग्रामं गमी ग्रामगमी । ग्रामं गामी ग्रामगामी ।

**श्रितादिभिरहीने द्वितीयासमासवचनानर्थक्यं बहुव्रीहिकृतत्वात् २**

श्रितादिभिरहीनवाचिन्या द्वितीयायाः समासवचनमनर्थकम् । किं कारणम् ? 'बहुव्रीहिकृतत्वात्' । इह यः कष्टं श्रितः कष्टमनेन श्रितं भवति । तत्र बहुव्रीहिणा सिद्धम् ।

प्र०—रुपादानाम् । ग्रामगमीति । 'गत्यर्थकर्मणी'त्यत्र द्वितीयाग्रहणमपवादविषयेऽपि विधानार्थमिति कृत्प्रयोगे द्वितीयैव भवतीति षष्ठ्याः प्राप्तिरेव नास्तीति ये तस्या 'अकेनो'रिति प्रतिषेधं वर्णयन्ति ते पूर्वापरविस्मरणशीलत्वादुपेक्ष्याः । भाष्यकारेण तु गत्यर्थसूत्रस्य प्रत्याख्यानात्कृत्प्रयोगे षष्ठ्येवेष्यत इति तद्दर्शनेन सौत्रः षष्ठीनिषेधः ।

श्रितादिभिरिति । यः कष्टं श्रितः कष्टमनेन श्रितमिति बहुव्रीहिणैव विवक्षितार्थावगमादर्थस्वरूपस्वरभेदाभावात्तत्पुरुषो न विधेय इत्यर्थः । अहीनवाचिन्या इति । यः कष्टं श्रितः श्रितं कष्टं तेन न हीनमित्यर्थ इति भावः । श्रयतिश्चात्र गतौ वर्तत इति गत्यर्थत्वात्कर्तरि क्तः । ततः श्रितपतितगतैः समासोऽयं न विधेयः । अतीतादिभिस्तु स्वरसिद्ध्यर्थो विधेयः । तर्हि तत्पुरुषे सति थाथादिस्वरेण भाव्यम्, अतीतात्यस्तयोरहीन इति निषेधात्, प्राप्तापन्नयोरहीने द्वितीयानुपसर्ग इति निषेधात् पूर्वपदप्रकृतिस्वरो नास्ति। बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यम् । यदा तु जातिकालसुखादीनि पूर्वपदानि तदा तत्रापि बहुव्रीहितत्पुरुषयोः स्वरभेदाभावः । बहुव्रीहिकृतत्वादिति । बहुव्रीहिणा

उ०—अन्येषां चेति । 'सनाशंसे'त्युप्रत्ययादीनामित्यर्थः । ओदनं बुभुक्षुः ओदनबुभुक्षुरित्युदाहरणम् । उभयोरपि उणादिप्रत्ययान्तत्वेन कथमुभयोपादानेनान्येषां चेत्यर्थलाभ इति चिन्त्यम् । तस्मादादिग्रहणस्य प्रकारार्थत्वेन व्याख्यानादेतदर्थलाभो बोध्यः । उभयोपादानं तु स्पष्टार्थमेवेति परे । पूर्वापरेति । 'गत्यर्थकर्मणी'तिसूत्रस्यैतत्सूत्रस्य योरित्यर्थः । नास्तीत्यन्तो गत्यर्थसूत्रस्थः । 'अकेनोरिति प्रतिषेध' इत्यन्यत्रस्थः । 'प्राप्तिरेव नास्तीति वदन्तो येऽत्र सूत्रे तस्याः प्रतिषेधं वर्णयन्ति ते' इत्यन्वयः । सौत्र इति । 'अकेनो'रिति सूत्रविहित इत्यर्थः । एवं च 'गत्यर्थकर्मणी'ति सूत्रस्थो ग्रन्थो वृत्तिकृतो भाष्यविरुद्धोऽपीति तात्पर्यम् ।

भाष्ये—अहीने द्वितीयेति । अहीनवाचकद्वितीयान्तस्येत्यर्थः । विवक्षितार्थावगमादिति । कष्टकर्मकश्रयणकर्तृत्वविशिष्टोऽर्थं उभाभ्यामपि प्रतिपाद्यत इत्यर्थः । बहुव्रीहौ श्रितादीनां पूर्वनिपातः स्यादिति तु न शक्यं, तत्प्रकरणानित्यत्वादिति बोध्यम् । तेन न हीनमिति । न त्यक्तमित्यर्थः । यथा कान्तारमतीतेन कान्तारः । अतीतात्यस्तयोरिति । यो हि कान्तारमतीतोऽत्यस्तो वा तेन कान्तारो हीनो भवतीति द्वितीयान्तस्य हीनवाचित्वादित्यर्थः । यद्यप्यप्राप्त्यनुपसर्गे इति निषेधोऽप्यस्ति, तथाप्ययमप्यस्तीत्ययमेवोक्तः । यदा त्विति । 'वा जाताविभ्य'ति वक्ष्यमाणत्वादिति भावः ॥ ननु समासवचनपक्षकानर्थक्यानुमाने बहुव्रीहिकृतत्वहेतुर्व्यभिचरणोऽत आह—बहुव्रीहिणेति । एवं च बहुव्रीहिसिद्धिस्वसाध्यकपक्षत्वादिति हेतुरिति भावः ।

### अहीने द्वितीयास्वरवचनानर्थक्यं च ॥ ३ ॥

'अहीने द्वितीया' [ ६. २. ४७ ] पूर्वपदं प्रकृतिस्वरं भवतीत्येतत्स्वरवचनमनर्थकम् । किं कारणम् ? बहुव्रीहिकृतत्वादेव* ।

### जातिस्वरप्रसङ्गस्तु ॥ ४ ॥

जातिस्वरस्तु प्राप्नोति—ग्रामगतः अरण्यगत इति । 'जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः' [ ६. २. १७० ] इति ।

### तत्र जातादिषु वावचनात्सिद्धम् ॥ ५ ॥

यदेतद् 'वा जाते' [ ६. २. १७१ ] इति, एतद्'वा जातादि'ष्विति वक्ष्यामि । इमे जातादयो भविष्यन्ति ।

ननु च भेदो भवति । बहुव्रीहौ सति समासान्तोदात्तत्वेनापि भवितव्यं पूर्वपदप्रकृतिस्वरत्वेनापि, तत्पुरुषत्वे सति पूर्वपदप्रकृतिस्वरत्वेनैव ॥ नास्ति भेदः । योऽपि हि तत्पुरुषमारभते न तस्य दण्डवारितो बहुव्रीहिः । तत्र तत्पुरुषे सति द्वौ समासौ द्वौ स्वरौ, बहुव्रीहौ सत्येकः समासो द्विस्वरत्वम् ।

एवं तर्हि सिद्धे सति यत्तत्पुरुषं शास्ति तज्ज्ञापयत्याचार्यः 'समानेऽर्थे केवलं विग्रहभेदाद्यत्र तत्पुरुषः प्राप्नोति बहुव्रीहिश्च तत्र तत्पुरुषो भवती'ति ।

प्र०-स्वरूपस्य साधितत्वादित्यर्थः ॥ जातिस्वरप्रसङ्ग इति । यदि बहुव्रीहिरेव क्रियते तदा 'जातिकाले'त्यन्तोदात्तत्वं प्राप्नोतीत्यर्थः ।

बहुव्रीहिवादी स्वरदोषं परिहरति—तत्रेति । 'वा जाते' इति न्यासमपास्य 'वा जातादिष्वि'ति वक्ष्यते, तेन पक्षेऽन्तोदात्तत्वं, पक्षे पूर्वपदप्रकृतिस्वरत्वमिति स्वरद्वयसिद्धिः । इमे इति । श्रित गत-पतितशब्दाः । ततश्चा'ऽहीने द्वितीये'ति न वक्तव्यमिति लाघवं भविष्यति । तत्पुरुषवाद्याह—ननु चेति । बहुव्रीहिवाद्याह—नास्तिभेद इति । द्वौ स्वराविति । तत्पुरुषे 'अहीने द्वितीये'ति पूर्वपदप्रकृतिस्वरः, बहुव्रीहौ 'जातिकाले'त्यन्तोदात्तत्वम् । द्विस्वरत्वमिति । 'वा जातादिष्वि'ति सूत्रन्यासेन ॥ एवं तर्हीति । ततश्च बहुव्रीह्यभावात्कष्टश्रित इत्यादा'वहीने द्वितीये'ति पूर्वपदाद्युदात्तत्वं भवति । 'निष्ठा

उ०- भाष्ये—इत्येतत्स्वरवचनमिति । एतदर्थप्रतिपादकं स्वरस्य वचन'महीने द्वितीये'ति सूत्रमित्यर्थः ॥ अन्तोदात्तत्वमिति । तदेवेत्यर्थः । इष्यते तु समासभेदेन स्वरद्वयमिति भावः ॥ पूर्वपदाद्युदात्तत्वमिति । तदेवेत्यर्थः । अन्तोदात्तत्वमिति । तदपीत्यर्थः । अव्य-

* बहुव्रीहौ प्रकृत्या पूर्वपदम् ६. २. १.

किमेतस्य ज्ञापने प्रयोजनम् ? राज्ञः सखा राजसखः । राजा सखास्येति बहुव्रीहिर्न भवति ।

नैतज्ज्ञापकसाध्यम् 'अपवादैरुत्सर्गा बाध्यन्त' इति । बाधकेनानेन भवितव्यं सामान्यविहितस्य विशेषविहितेन । अथ न सामान्यविहितः, यदुच्यते 'बहुव्रीहिकृतत्वा'दित्येतदयुक्तम् ।

---

प्र०—'ब हुव्यजना'दित्याद्युदात्तत्वात्कष्टशब्दस्य । न तु जातिलक्षणबहुव्रीहिनिबन्धनमन्तोदात्तत्वम् । अव्यविकन्यायश्चानेन ज्ञापकेन स्मारितः । राज्ञः सखेति । सख्यस्योभयाधिष्ठानत्वाद्राजा सखास्येत्ययमर्थोऽन्तर्भूत इति बहुव्रीहिः स्यात्, अस्मात्तु ज्ञापकान्न भवति । अथ कश्चिदुत्सर्गापवादन्यायेन बहुव्रीह्यभावं मन्यमान आह—नैतदस्ति । अर्थाभेदे बहुव्रीहौ प्राप्ते तत्पुरुषस्यारम्भात् । ज्ञापकबाध्यपवादवादिनोश्चात्राहोपुरुषिकैव, तत्पुरुषारम्भे बहुव्रीहिबाधलक्षणं तु फलं न भिद्यते । विशेषविहितेनेति । श्रितादिसमभ्याहारेण विधानादस्य विशेषविहितत्वम् । अथ नेति । 'कष्टं श्रित' इति स्वपदार्थे तत्पुरुषविधानात्तत्र च बहुव्रीहेरप्राप्तत्वान्नास्ति सामान्यविहितत्वम् । अन्तर्भूतश्चार्थो न शब्दसंस्कारे निमित्तं, किन्तु शब्दवाच्य एव । यदुच्यत इति । अर्थभेदाच्छ्रितादिग्रहणं कृतमिति भावः ।

---

उ०—विकेति । अवेर्मांसमिति विग्रह एव, आविकादेव च प्रत्ययोत्पत्तिः—आविकमिति, तथा 'कष्टं श्रितमनेने'ति वाक्यमेव, 'कष्टं श्रित' इति विग्रहे एव समास इत्यर्थः । ननु 'राज्ञः सखे'त्यस्य राजनिरूपितसखित्ववानर्थः, बहुव्रीहौ राजाभिन्नसखिसम्बन्धीति बोधेऽन्यनिरूपितं सखित्वं राजनि प्रतीयते इति समानार्थकत्वाभावात्कथं पूर्वोक्तज्ञापकेनात्र समासाभाव इत्यत आह—सख्यस्योभयेति ।

कश्चिदुत्सर्गापवादभावं मन्यमानो ज्ञापकं दूषयति—नैतज्ज्ञापकेति । एतत्—उक्तं वस्तु, ज्ञापकसाध्यं न—ज्ञापकत्वस्यैवासम्भवादित्यर्थः । एवं च श्रितादिविषयतत्पुरुषेणानवकाशतया बहुव्रीहिबाधे कष्टश्रितादौ पूर्वपदाद्युदात्तत्वमेव भवति । एवं च राजा सखास्येति विग्रहे बहुव्रीहिः स्यादेव, 'षष्ठी'ति शास्त्रस्य राजपुरुषादौ सावकाशत्वेन बहुव्रीहिबाधकत्वाभावादिति भावः । किं च उभयोश्चरितार्थयोः परत्वाद्बहुव्रीहिरेव स्यात्, षष्ठीतत्पुरुषो न स्यादेव । टज्विधानं तु 'सुन्दरसख' इत्यादौ कर्मधारये चरितार्थमित्याशयः । एवं च 'ज्ञापकबाध्यपवादवादिनोरत्राहोपुरुषिकैव, तत्पुरुषारम्भे बहुव्रीहिबाधलक्षणं तु फलं न भिद्यते' इति कैयटाशयश्चिन्त्यः । स्वपदार्थे तत्पुरुषेति । स्वपदार्थप्रधानविग्रह इत्यर्थः । बहुव्रीहिस्तु नैवंविधे विग्रहे, किन्तु कष्टं श्रितमनेनेति विग्रहे । एवं च विषयभेदान्न सामान्यविहितत्वं बहुव्रीहेरिति भावः ॥ ननु कष्टं श्रित इत्यत्र बहुव्रीहिविग्रहार्थोऽप्यन्तर्भूत इत्यत आह—अन्तर्भूतश्चार्थ इति । अर्थभेदादिति । एवं च सूत्रसार्थक्यात्त्वदीयज्ञापकत्वमप्यसङ्गतमिति भावः । लोके विग्रहेति । समासप्रयोगे कर्तव्ये लोके विग्रहवाक्यस्याप्रयोगात्तत्पुरुष[illegible]

अस्ति खल्वपि विशेषो बहुव्रीहेस्तत्पुरुषस्य च । किं शब्दकृतोऽथार्थकृतः ? शब्दकृतश्चार्थकृतश्च । शब्दकृतस्तावत्—बहुव्रीहौ सति कपा भवितव्यं* तत्पुरुषे सति न भवितव्यम् । अर्थकृतः—तत्पुरुषे सति रुहादीनां क्तः कर्तरि भवति धात्वर्थस्यानपवर्गे—आरूढो वृक्षं देवदत्त इति । बहुव्रीहौ व्यपवृक्ते कर्मणि भवति—आरूढो वृक्षो देवदत्तेनेति ।

अन्यथाजातीयकाः खल्वपि प्रत्यक्षेणार्थसंप्रत्ययोऽन्यथाजातीयकः संबन्धात् । राज्ञः सखा राजसखः । संबन्धादेतद्गन्तव्यं नूनं राजाप्यस्य सखेति ।

प्र०— ननु 'कष्टश्रित' इति समासप्रयोगे लोके विग्रहवाक्याप्रयोगात्तात्पर्याभेदादस्ति बहुव्रीहिकृतत्वमित्याशङ्क्याह—अस्ति खल्वपीति । पूर्वोक्तेन न्यायेनार्थस्वरूपस्वरेषु विशेषमपश्यन् पृच्छति—किमिति । बहुव्रीहाविति । 'शेषाद्विभाषे'त्यनेन कष्टश्रितक इति । तत्पुरुष इति । कष्टश्रित इत्यादौ । रुहादीनामिति । आदिशब्दः प्रकारे । तेन गत्यर्थादयोऽपि गृह्यन्ते । धात्वर्थस्यानपवर्ग इति । सर्वस्य धात्वर्थस्यानिष्ठितत्वेऽपि तदेकदेशभूतत्वाश्रयेणारोहणक्रियाविशिष्टे एव वृक्षारूढ इति शब्दशक्तिस्वाभाव्यादिदमभिधीयते । यथा बद्धो बन्धनमनुभवन्नेवोच्यते, तथा कष्टश्रित इति कष्टमनुभवन्नेवोच्यते । व्यपवृक्त इति । सर्वात्मना धात्वर्थे निष्ठित इत्यर्थः । यथा 'भुक्त ओदन' इति भुजिक्रियायाः समाप्तौ प्रयुज्यते ।

भेदान्तरमप्याह—अन्यथेति । प्रत्यक्षेणेति । शब्दादव्यवधानेनेत्यर्थः । अव्यव-

उ०—नवगमादिति भावः । अर्थद्वयबाधेऽप्याह—तात्पर्यस्यादि । एवं च ज्ञापकत्ववादिनोऽपवादत्ववादिनश्च खण्डनायास्ति खल्वपीत्यादि सिद्धान्तिनो ग्रन्थ इति भावः ।

भाष्ये—बहुव्रीहौ सतीति । तस्मिन्नेव सतीत्यर्थः । तत्पुरुषे सतीति । तस्मिन्नपि सतीत्यर्थः । न भवितव्यमिति । पूर्वपदप्रकृतिस्वरसन्नियोगेन न भवितव्यमित्यर्थः । तत्पुरुषारम्भे 'वा जाताद्विभि'त्यस्याभावाद् ग्रामगत इत्यादावन्तोदात्तत्वमेवेति 'बहुव्रीहा'विति पूर्वपदप्रकृतिस्वरसंनियोगेन न कदापि कप् । तदनारम्भे तु 'वा जाताद्विभि'त्यारम्भात्पक्षे बहुव्रीहावपि पूर्वपदप्रतिस्वरसत्त्वात्तत्संनियोगेनापि कबापत्तिरिति भावः । कैयटोक्तोदाहरणे समासद्वयेऽपि पूर्वपदप्रतिस्वरसत्त्वात्कपो वैकल्पिकत्वाच्च न विशेष इति चिन्त्यम् ।

भाष्ये—अर्थकृत इति । अर्थभेदे सत्येकेनापरस्य न गतार्थतेति भावः । धात्वर्थस्यानपवर्गे इति । सर्वधात्वर्थासमाप्तौ धात्वर्थाविष्ट एव कर्तरि एकदेशस्य भूतत्वाश्रयेण क्तो भवति तत्पुरुषे । बहुव्रीहौ तु सर्वधात्वर्थसमाप्तौ धात्वर्थानाविष्टे कर्मण्येव क्त इति विशेष इत्यर्थः । अन्यथाजातीय इति । शब्दत्वाक्रान्त इत्यर्थः । अन्यथाजातीयकः सम्बन्धा-

* शेषाद्विभाषा ५. ४. १५४.

उभयं खल्वपीष्यते—स्वस्ति सोमसखा पुनरेहि, गवांसख इति ॥२४॥

## खट्वा क्षेपे ॥ २ । १ । २६ ॥

किमुदाहरणम् ? खट्वारूढो जाल्मः ॥ क्षेप इत्युच्यते कः क्षेपो नाम ? [१]अधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वारोढव्या । य इदानीमतोऽन्यथा करोति स उच्यते खट्वारूढोऽयं जाल्मः । नातिव्रतवानिति ॥२६॥

प्र०–धानोपलक्षणत्वात्प्रत्ययस्य ॥ ज्ञापकफलमपि निराकर्तुमाह—उभयमिति । सोमसखेति । बहुव्रीहित्वात्समासान्ताभावः । गवांसख इति । तत्पुरुषत्वात्समासान्तस्तत्पुरुषे कृति बहुलमिति, 'षष्ठ्या आक्रोश' इति वा षष्ठ्या अलुक् ॥२४॥

खट्वा । 'खट्वारूढ' इत्यत्र क्षेपहेतोर्धर्मस्यानिर्देशात् क्रियाकारकसम्बन्धमात्रावगमात्पृच्छति—किमुदाहरणमिति । समासस्य क्षेपोऽर्थः, स चात्रास्तीत्याह-खट्वारूढ इति । अधीत्येति । ब्रह्मचारिणा वेदाध्ययने निष्पादिते गृहस्थाश्रमः कर्तव्यः । अन्यथेति । असमाप्तेऽध्ययने भूमिशयनार्हो यः खट्वारोहणं करोतीत्यर्थः । खट्वारोहणं चाविनयोपलक्षणार्थमित्याह—नातिव्रतवानिति ॥२६॥

उ०–दिति । आनुमानिक इत्यर्थः । नन्वेवं राज्ञः सखास्येति विग्रहे बहुव्रीहिः स्यादत आह—उभयं खल्वपीति ॥२४॥

खट्वा । अधीत्य स्नात्वेति । अधीत्य स्नात्वा चेत्यर्थः ॥२६॥

१–'जाल्मोऽसमीक्ष्यकारी स्या'दित्यमरः । खट्वारोहणं चेह विमार्गप्रस्थानस्योपलक्षणम् । रूढश्चायं शब्दः । तेन खट्वामारोहतु मा वा, निषिद्धानुष्ठानपरः सर्वोऽपि खट्वारूढ उच्यते । अत एव विभाषाधिकारेऽपि नित्यसमासोऽयम् । न हि वाक्येन निन्दा गम्यते ।

२–"वेदं समाप्य स्नायात् ॥१॥ ब्रह्मचर्यं वाऽष्टाचत्वारिंशकम् ॥२॥ द्वादशकेऽप्येके ॥३॥ गुरुणाऽनुज्ञातः ॥४॥" (पार० गृ० का० २, कं० ६)

"एवं हि समामनन्ति 'वेदमधीत्य स्नाया'दिति" (मीमांसा० शाबर० १।१।१)

"गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया । वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥" (या० स्मृ० १।५१)

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥"

"गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।" इति मनुः (अ० ३ श्लो० २; ४)

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥२।१।५८॥

अथ किमर्थमुत्तरत्रैवमाद्यनुक्रमणं क्रियते, न 'विशेषणं विशेष्येण बहुलम्' [ २. १. ५७ ] इत्येव सिद्धम् ?

**बहुलवचनस्याकृत्स्नत्वादुत्तरत्रानुक्रमणसामर्थ्यम् ॥ १ ॥**

अकृत्स्नं बहुवचनमित्युत्तरत्रानुक्रमणं क्रियते । यद्यकृत्स्नं यदनेन कृतमकृतं तत् । एवं तर्हि न ब्रूमोऽकृत्स्नमिति । कृत्स्नं च कारकं च साधकं च निर्वर्तकं च । यच्चानेन कृतं सुकृतं तत् । किमर्थं तर्ह्येवमाद्यनुक्रमणं क्रियते ?

---

प्र०- पूर्वापर । अथ किमर्थमिति । एतत्सूत्राद्युत्तरसूत्रानुक्रमणमित्यर्थः । 'पूर्वकाले'त्ययं तु योगः पूर्वकालादीनां पूर्वनिपातनियमार्थः । 'दिक्संख्ये' इति संज्ञायां नियमार्थः । 'कुत्सितानी'ति विशेष्यस्य पूर्वनिपातार्थः । एवमन्यत्रापि प्रयोजनमूह्यम् । यत्र तु प्रयोजनाभावः । 'पूर्वापरप्रथमे'त्यादौ तस्यायमाक्षेपः, पूर्वेणैव समासस्य सिद्धत्वात् ।

बहुलवचनस्याकृत्स्नत्वादिति । अकृत्स्नप्रतिपत्तृविषयत्वादित्यर्थः । न हि मन्दबुद्धयो बहुलग्रहणमात्रेण समासासमासविषयविवेकमवगन्तुं क्षमा इत्यर्थः । इतरो यथोक्तमकृत्स्नशब्दार्थमप्रतिपद्य बहुलवचनस्याव्यापकत्वमकृत्स्नत्वं मत्वा चोदयति—यद्यकृत्स्नमिति । ततश्च निष्प्रयोजनं बहुलवचनमिति भावः । कृत्स्नं चेति,—पर्यायोपादानं लौकिक्या वाचोयुक्त्या सामर्थ्याविघातप्रतिपादनार्थं, यथा स्वामी प्रभुरीश्वरो भगवानिति । चतुर्भिः शब्दैश्चत्वारो बहुलशब्दार्था इति 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्ति'रित्यादयः संगृहीता इत्येक आहुः । तेन 'कृष्णसर्प' इत्यादौ नित्यः समासः । 'रामो जामदग्न्य' इत्यादावसमासः । नीलमुत्पलं नीलोत्पलमित्यादौ विकल्पः । 'सुसूक्ष्मजटकेशादा'वयवसमासाभावः । अन्ये त्वाहुः—'कृत्स्न'मिति । सर्वेष्टस्य संग्राहकत्वाद्व्यापकमित्यर्थः । केन रूपेण व्यापकत्वमित्याह—कारकमिति । कुर्वदपि न विपर्ययेण करोतीत्याह—साधकमिति । न च कस्यचिद्वर्जनेन प्रवर्तकमित्याह—निर्वर्तकमिति । अथवा साधकं पारम्पर्येण स्यात्, वर्णोपदेश इव प्रत्याहारद्वारेण लक्ष्यसंस्कारस्येत्याह—निर्वर्तकमिति । साक्षात्कार्यं निष्पादयतीत्यर्थः ।

---

उ०- पूर्वापर । भाष्ये—उत्तरत्र—विशेषणं विशेष्येणेत्युत्तरम् । एवमादि—'पूर्वापरे'त्यादि । तदाह—एतत्सूत्राद्युत्तरेत्यादि । 'उत्तरत्रे'त्यस्य फलमाह—पूर्वकालेत्ययं त्विति । ऊह्यमिति । 'दिक्संख्ये' इति नियमात् । 'तद्धितार्थे'त्याद्यावश्यकम् । इवार्थघटितेऽर्थे समासस्य लक्ष्ये—उपमानानीति । 'सामान्यवचनैरेवे'ति नियमार्थमिदमित्यन्ये । उपमितमिति विशेष्यस्य पूर्वनिपातार्थमिति बोध्यम् । यत्र तु प्रयोजनाभाव इति । वीरैकादिष्वाप्युक्ते बहुलग्रहणानुवृत्तेरप्यावश्यकत्वेन तेनैव गुणादिसमाभ्याहारे पूर्वनिपातनियमसिद्धिरिति भावः । भाष्ये एवमादीत्यादिशब्दः प्रकारे इति बोध्यम् ।

उदाहरणभूयस्त्वात् । ते खल्वपि विधयः सुपरिगृहीता भवन्ति येषु लक्षणं प्रपञ्चश्च । केवलं लक्षणं केवलः प्रपञ्चो वा न तथा कारकं भवति ।

अवश्यं खल्वस्माभिरिदं वक्तव्यं 'बहुलम्' 'अन्यतरस्याम्' 'उभयथा' 'वा' 'एकेषा'मिति । सर्ववेदपारिषदं हीदं शास्त्रम् । तत्र नैकः पन्थाः शक्य आस्थातुम् ॥५८॥

प्र०— उदाहरणभूयस्त्वादिति । 'विभाषा गुणेऽस्त्रिया'मिति पञ्चमी । अस्यैव लक्षणस्य भूयांस्युदाहरणानि प्रदर्शयितुमित्यर्थः । केवलमिति । केवलेन लक्षणेन मन्दबुद्धिर्विषयविभागं नावधारयति । केवलेन प्रपञ्चेन च सामान्यलक्षणरहितेन प्रतिपदपाठवच्छास्त्रस्य गौरवप्रसङ्गः । व्यवस्थितविभाषैव कस्मान्नाश्रीयते किं बहुलग्रहणेनेत्याह—अवश्यमिति । वैदिकव्यवहारानुसरणाय सर्वैः शब्दैरिह व्यवहार इत्यर्थः । सर्ववेदपारिषदमिति । परिषद इदं परिषदं, साधारणमित्यर्थः । 'पश्चाध्वर्युपरिषदश्चे'त्यण् । अन्ये त्वाहुः—पारिषदः—परिषत्परिचारक उच्यते । स च परिषत्साधारण इति पारिषदत्वेन साधारणत्वं लक्ष्यते । सर्ववेदाङ्गत्वादस्य सर्ववेदसाधारणं लक्षणं बहुलादिग्रहणोपेतं क्रियते । आनुषङ्गिको लौकिकशब्दसंस्कार इति वेदग्रहणं कृतम् ॥५८॥

उ०— उत्तरत्रानुक्रमणसामर्थ्यमिति । उत्तरत्रैवमाद्यनुक्रमणकरणसामर्थ्यमित्यर्थः । 'सूत्रं कृतं दर्शित'मिति शेषः । अव्यापकत्वमिति । कृत्स्नपदं कृत्स्नविषयपरमिति भावः । भाष्ये—यदनेन कृतमिति । प्रवृत्त्यादिकं तत्सर्वं विषयाऽव्यापकत्वाद्विप्रयोजनमित्यर्थः । सामर्थ्याविघातेति । बहुलग्रहणघटितवचनस्य प्रयोजनार्थमित्यर्थः । तत्प्रयोजनं प्रवृत्त्यादिसंग्रहः । तेन तद्ग्रहणसामर्थ्ये व्यर्थकालक्षेपाभावः । तत्र दृष्टान्तमाह—यथेति । व्याख्यान्तरमाह—चतुर्भिरिति । चत्वारः—'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेवे'त्येवंरूपाः । अत्र पक्षे कृत्स्नादिशब्दैः सम्यगर्थादपैतद्यर्थाकाभावद्योतनम्—अन्ये त्विति । कारकमितीति । प्रवृत्त्यादिकारकत्वेन व्यापकमित्यर्थः । साधकमितीति । यथायोग्यकारकमित्यर्थः । निर्वर्तकम्—सर्वविषयव्याप्त्या साक्षात्प्रयोगसाधकमित्यर्थः ।

विभाषा गुणेति । प्रयोजनस्यापि प्रयोजकत्वेन हेतुत्वादिति भावः । भाष्ये—ते खल्वपीति । यद्विधिविषये लक्षणं—सामान्यशास्त्रं, प्रपञ्चस्तस्यैव विशेषशास्त्रेण उदाहरणप्रदर्शनं, ते विधयो मन्दामन्दबुद्धिभिः सर्वैरपि सम्यक् ज्ञातुं शक्यत्वात्सुपरिगृहीता भवन्तीत्यर्थः । एवं च प्रपञ्चार्थमिदं शास्त्रमिति भावः । केवलेनेति । उदाहरणप्रपञ्चपरविशेषसूत्ररहितेन बहुलपदघटितसामान्यसूत्रेणेत्यर्थः । प्रपञ्चेनेति । सामान्यलक्षणरहित प्रपञ्चपरविशेषसूत्रेणेत्यर्थः ॥ भाष्ये—अवश्यं खल्वपीति । अवश्यं विकल्पार्थकशब्दप्रयोगे कर्तव्ये पर्यायेषु लाघवगौरवविचाराभावाद्वेदे नानाशब्दैर्व्यवहारदर्शनाच्च वेदानुकरणार्थमिति मन्यमिदं वेदस्य नानाशब्दैर्व्यवहार इत्यर्थः । पुरुषान्तरमप्याह—सर्ववेदपारिषदं हीति । हिरर्थे । तत्र नैकः पन्था इति । 'क्वचिदन्यदेवे'त्यर्थक बहुलग्रहणविषयव्यापकशास्त्राणि प्रतिपादयितुमशक्यत्वादित्यर्थः । बहूदाहरणानि च वेदेषु बहूनीति तत्प्रदर्शनेन लोकवेदसाधारणेऽपि सर्ववेदपारिषदत्वोक्तिरिति बोध्यम् ॥५८॥

## श्रेण्यादयः कृतादिभिः ॥ २ । १ । ५६ ।

श्रेण्यादयः पठ्यन्ते, कृतादिराकृतिगणः ।

• श्रेण्यादिषु च्व्यर्थवचनम् ॥ १ ॥

श्रेण्यादिषु च्व्यर्थग्रहणं कर्तव्यम् । अश्रेणयः श्रेणयः कृताः श्रेणिकृताः । यदा हि श्रेणय एव किञ्चित्क्रियन्ते तदा मा भूदिति । अन्यत्रायं च्व्यर्थग्रहणेषु च्व्यन्तस्य प्रतिषेधं शास्ति* । तदिह न तथा । किं कारणम् ? अन्यत्र पूर्वं च्व्यन्तकार्यं परं च्व्यर्थकार्यम् । इह पुनः पूर्वं च्व्यर्थकार्यं परं च्व्यन्तकार्यमिति† ॥५६॥

## क्तेन नञ्विशिष्टेनानञ् ॥ २ । १ । ६० ॥

नञ्विशिष्टे समानप्रकृतिग्रहणम् ॥ १ ॥

---

प्र०— श्रेण्यादयः । श्रेण्यादय इति । अत एवात्रादिशब्दो व्यवस्थावाची, कृतादिरित्यत्रादिशब्दः प्रकारवाची । प्रयोगदर्शनाच्चोदाहरणस्थानीयाः कतिपये वृत्तिकारैः प्रदर्शिताः । एकशिल्पपण्याश्रयणेन जीविनां संघः—श्रेणिः । तत्र यदा पृथक्संस्थितानां श्रेणीकरणं तदा समासो यथा स्याद्यदा तु श्रेणीस्थानामेव दण्डनादिरूपकरणं तदा मा भूदित्येवमर्थमाह—श्रेण्यादिष्वित्यादि । अन्यत्रेति । 'साक्षात्प्रभृतीनि च'त्यत्र 'च्व्यर्थवचन'मित्युक्त्वा च्व्यन्तप्रतिषेध उक्तः, इह तु कस्मान्न कृत इति प्रश्नः । अन्यत्र पूर्वमिति । 'साक्षात्कृत्ये'त्यत्र च्व्यन्तत्वे सति नित्यविकल्पितगतिसंज्ञाप्रसङ्गे परत्वाद्विकल्पः स्यादिति तत्र च्व्यन्तप्रतिषेधः क्रियते । तेन पूर्वा नित्या गतिसंज्ञा भवति । इह तु 'श्रेणीकृता' इति परत्वान्नित्यो गतिसमासः सिध्यतीति नार्थ इह च्व्यन्तप्रतिषेधेनेत्यर्थः ॥५९॥

क्तेन नञ्वि । विशिष्टशब्दो यदावधारणरहिताधिक्यवाच्युपात्तस्तदातिव्याप्तिपरिहाराय—नञ्विशिष्ट इति । समानत्वं त्वर्थरूपाभ्यां बोद्धव्यम् । गौरवमप्यस्मिन्पक्ष

---

उ०— श्रेण्यादयः । यद्यपि सूत्रादौ श्रेण्यादयः कृतादयश्च पठ्यन्ते तथापि कृतादिराकृतिगण एवेति बोधयितुं भाष्ये—श्रेण्यादय इति । एकशिल्पेति । एकशिल्पाश्रयेण, एकपण्याश्रयेण चेत्यर्थः । तत्र यदेति । एकशिल्पाजीविसंघस्य तद्रूपकरणमित्यर्थः । दण्डनादिरूपकरणम् । तयोरन्यतरकरणमवरोधादीति यावत् । तदुक्तं भाष्ये—किंचित् क्रियन्ते इति । किंचिदर्थविशिष्टाः क्रियन्त इत्यर्थः । परत्वान्नित्य इति । ऊर्यादिच्वीति च्व्यन्तस्य गतित्वादिति भावः ॥५९॥

येन नञ् । अवधारणेति । नञैव विशिष्टेन नान्येनेत्येवमित्यर्थः । आधिक्य-

---

* तत्र च्व्यप्रतिषेधः १. ४. ७४ वा० १. † कुगतिप्रादयः २. २. १८.

नञ्विशिष्टे समानप्रकृतिग्रहणं कर्तव्यम् । इह मा भूत्—सिद्धं चाभुक्तं चेति ।

अनञिति च प्रतिषेधो वक्तव्यः । इह मा भूत्—कर्तव्यमकृतमिति ।

## नुडिडधिकेन च ॥ २ ॥

नुडिडधिकेन च समासो वक्तव्यः । इहापि यथा स्यात्—अशितानशितेन* जीवति । क्लिष्टाक्लिशितेन† जीवतीति ।

किमुच्यते 'समानप्रकृतिग्रहणं कर्तव्य'मिति यदा नञ्विशिष्टेनेत्युच्यते, न चात्र नञ्कृत एव विशेषः ? किं तर्हि ? प्रकृतिकृतोऽपि ॥ अयं विशिष्टशब्दोऽस्त्येवधारणे वर्तते । तद्यथा,—देवदत्तयज्ञदत्तावाढ्यावभिरूपौ दर्शनीयौ

प्र०—इत्याह—अनञिति चेति । न विद्यते नञ् यस्मिन् पूर्वपदे तदनञ्, तत्र प्रत्यासत्त्या क्तान्तमेवेह गृह्यते । तदयमर्थः—आधिक्यमात्रवचने विशिष्टशब्द उपादीयमाने 'कर्तव्यमकृत'मित्यत्रापि समासप्रसङ्गः । समानप्रकृतित्वं चास्तीति वार्त्तिकेनापि समासो न निवारितः । ततश्चानञ्ग्रहणं क्तान्तपूर्वपदनिर्देशार्थं कर्तव्यमिति । अवधारणसहिताधिक्यवचनेऽप्यव्याप्तिरिति तत्परिहारायाह—नुडिडधिकेन चेति । यद्यपि नुडिटौ तद्भक्तौ तथापि श्रुतिभेदहेतुत्वादवधारणेन च श्रुतिभिन्नस्य निराकरणात्तदधिकस्याप्राप्तिरिति भावः । नुडिड्ग्रहणमागममात्रोपलक्षणार्थमिति छिन्नाच्छिन्नमित्यत्र तुगधिकस्यापि समासो भवतीति केचिदाहुः—अर्थभेदमकुर्वतो विकारस्याप्युपलक्षणमिति 'छातच्छित'मित्यत्र 'शाच्छोरन्यतरस्या'मितीत्त्वे कृते तदधिकेनापि समासो भवति । 'त्रातात्राण'मित्यादौ तु नत्वस्यासिद्धत्वाद्भेदकत्वाभावः ।

तद्यथेति । यदा समसंप्रधारणा प्रतिपाद्यते तदावधारणे विशिष्टशब्दः । स्वरूपवर्णनमात्रे त्वाढ्यादिगुणद्वारेण क्रियमाणे आधिक्यमात्रे विशिष्टशब्दः ।

उ०—वार्त्तीति । नञाधिकेनेत्यर्थः । अर्थरूपाभ्यामिति । एति गच्छति अहातिविहीरस्योभयोर्वृत्तये उभयोपादानम् ॥ भाष्ये—प्रतिषेधो वक्तव्य इति । प्रतिषेधघटितबहुव्रीहिरूपं क्तान्तविशेषणमित्यर्थः । क्तान्तलाभार्थं तत्कर्तव्यम् । अन्यपदार्थश्च उपस्थितक्तान्त एवेति तल्लाभ इति भावः । तदयमर्थ इति । 'अनञिति प्रतिषेधो वक्तव्य' इति भाष्यस्यायमर्थ इत्यर्थः । ततश्चानञिति । अवधारणसहिताधिक्यपरत्वे तु तन्न कर्तव्यं भवतीति भावः ।

अर्थभेदमिति । तत्कारी विकारः केति विग्रहम् । समसम्प्रधारणेति । समयोर्मध्येऽन्यतरस्य संप्रधारणा—गुणाधिक्यं प्रतिपिपादयिषितमित्यर्थः । अवधारणे । तद्गर्भे आधिक्ये इत्यर्थः । भाष्ये—नाप्यनञिति । नञैव विशिष्टेन क्तान्तेन सुवन्तं समस्यत

१—इतः पूर्वं 'अनञिति चे'ति वार्तिकं केचित् पठन्ति ।

* तस्मान्नुडचि ६. ३. ७४. † क्लिशः क्त्वानिष्ठयोः ७. २. ५०.

[1]पक्षवन्तौ देवदत्तस्तु यज्ञदत्तात्स्वाध्यायेन विशिष्टः । स्वाध्यायेनैवेति गम्यतेऽन्ये गुणाः समा भवन्ति । अस्त्याधिक्ये वर्तते । तद्यथा,—'देवदत्तयज्ञदत्तावाढ्यावभिरूपौ दर्शनीयौ पक्षवन्तौ देवदत्तस्तु यज्ञदत्तात्स्वाध्यायेन विशिष्टः । स्वाध्यायेनाधिकोऽन्ये गुणा अविवक्षिता भवन्ति ॥ तद्यदा तावदवधारणे विशिष्टशब्दस्तदा नैवार्थः समानप्रकृतिग्रहणेन । नेह भविष्यति—सिद्धं चाभुक्तं चेति । नाप्यनञिति प्रतिषेधेन । नेह भविष्यति—कर्तव्यमकृतमिति । नुडिडधिकेनापि तु तदा समासो न प्राप्नोति । यदाधिक्ये विशिष्टशब्दस्तदा समानप्रकृतिग्रहणं कर्तव्यम् । इह मा भूत्—सिद्धं चाभुक्तं चेति । अनञिति च प्रतिषेधो वक्तव्यः । इह मा भूत्—कर्तव्यमकृतमिति । नुडिडधिकेनापि तु [ तदा ] समासः सिद्धो भवति । तत्राधिक्ये विशिष्टशब्दं मत्वा समानप्रकृतिग्रहणं चोद्यते ।

[3]अवधारणं नञा चेन्नुडिड्विशिष्टेन न प्रकल्पेत ।
अथ चेदधिकविवक्षा कार्यं तुल्यप्रकृतिकेनेति ॥

प्र०—तद्यदेति । इह 'क्तेन नञ्वि'ति सिद्धे विशिष्टग्रहणात्सावधारणाधिक्यगतिः स्यात्, गुरुलाघवानादरे त्वाधिक्यमात्रवृत्तिर्विशिष्टशब्दो गृह्यत इति द्वैतोपपत्तिः ।

अवधारणं नञा चेदिति । पूर्वोक्त एवार्थ आर्यया[3] संगृहीतः । 'अन'ञित्येतत्सूत्रे कृतमेवेति आर्यायां कर्तव्यत्वेन नोक्तम् । इदानीमप्यव्याप्त्यतिव्याप्तिपरिहाराय

उ०—इत्युक्ते: कान्तप्रकृतिकमेव तल्लभ्यत इति भावः । समासो न प्राप्नोतीति । तस्मात्तत्कर्तव्यमिति भावः ।

१–पक्षशब्देनेह केशसमूहो ग्राह्य. । यद्यपि कचकेशकाकादिशब्देभ्य उत्तर एव पक्षशब्दः समूहार्थो भवति । तद्यथाहामरः—'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' ।

अथवा पदैकदेशन्यायेन काकपक्षस्य स्थाने पक्षशब्दो द्रष्टव्यस्तद्यथा,—'देवदत्तो दत्तः सत्यभामा भामेति' (भाष्ये १. १ ४५ वा० ३ पृ० ३४४ पं० ५)

'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः' इति हलायुधः । 'काकपक्षः शिखण्डकः' इत्यमरः । 'क्षत्रियाणां चूडा 'काकपक्ष इति गौडः' इति क्षीरस्वामी ।

रामायणे रामस्य विशेषणत्वेन बहुशो दृश्यते—'काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि' (बा० १९।९); 'काकपक्षधरो धन्वी' (बा० २२।६); 'काकपक्षधरौ वीरौ' (बा० ५०।२२); 'काकपक्षधरो धन्वी शिखी कनकमालया' (अरण्य० ३८।१४) ।

'काकपक्षधरमेत्य याचितः' (रघुवंशे ११।१) ।

२–कचिह्न । ३–आर्येयम् । इदं प्रथमं लौकिकं गणच्छन्दः । पथ्या-विपुला चपलाद्यो नव-षोडश-अशीतिभेदा भवन्त्यार्यायाः । लक्षणं तु छन्दःशास्त्रे (४।१४–३१) द्रष्टव्यम् ।

## कृतापकृतादीनां चोपसंख्यानम् ॥ ३ ॥

कृतापकृतादीनां चोपसंख्यानं कर्तव्यम् । कृतापकृतम् भुक्तविभुक्तम् पीतविपीतम् ।

## सिद्धं तु क्तेन विसमाप्तावनञ् ॥ ४ ॥

सिद्धमेतत् । कथम् ? क्तान्तेन क्रियाविसमाप्तावनञ्क्तान्तं समस्यत इति वक्तव्यम् ।

## गतप्रत्यागतादीनां चोपसंख्यानम् ॥ ५ ॥

गतप्रत्यागतादीनां चोपसंख्यानं कर्तव्यम् । गतप्रत्यागतम् यातानुयातम् पुटापुटिका क्रयाक्रयिका फलाफलिका मानोन्मानिका ॥६०॥

---

प्र०—न्यासान्तरमप्याह—सिद्धं त्विति । विसमाप्तिः—असमाप्तिः । कृताकृतमित्यत्रै-कदेशे करणाकरणाभ्यां करणस्यासमाप्तिर्गम्यत इति समासः । 'कृतापकृत'मित्य-त्राप्यसमाप्तिर्गम्यते यत्कृतं तदेवापकृतं—विरूपं कृतमित्यर्थावगमात् । एवं भुक्त-विभुक्तमिति यद्भुक्तं तद्विभुक्तं—विरूपं भुक्तमुक्तमिति वार्थो विशब्दस्य प्रतिषेधा-र्थत्वात् । भुक्ते विभुक्तं चैकदेशद्वारकं भोजनकार्याकरणाद्वा बोद्धव्यम् । 'सिद्धमभुक्तं' 'कर्तव्यमकृत'मित्यत्र प्रतिषेधमात्रावगमाद्विसमाप्त्यभावात्समासाभावः । यत्सर्वथा वक्तव्यं तदाह—गतप्रत्यागतादीनां चेति । क्रयिकेत्यादावल्प इति कप्रत्ययः । तदन्तश्च स्वभावात्कचित् स्त्रियां वर्तते । क्रयाक्रयिके'त्यन्येषामपी'ति दीर्घः ॥६०॥

---

उ०- इदानीमव्याप्त्यतिव्याप्तीति । अव्याप्तिः—कृतापकृतादौ, अतिव्याप्तिः—'सिद्धम-भुक्तं' 'कर्तव्यमकृत'मित्यादौ प्रागुक्ता । कैयटे द्वावप्यपिशब्दौ प्रश्लिष्टौ, फलाभावात् । विरूपं कृतमिति । असमाप्त्यैव विरूपत्वं, मध्ये तत्क्रियात्यागाच्च तथा विरूपत्वमिति भावः । अभुक्तमिति वार्थ इति । एवमपकृतमित्यस्याकृतमिति वार्थ इत्यपि बोध्यम् । सिद्ध-मभुक्तमिति । अत्रारब्धस्यासमाप्तिर्न गम्यत इति न दोष इति भावः ।

यत्सर्वथेति । अयं भावः—सूत्रस्थनञ्विशिष्टपदं लक्षणया विसमाप्तिपरत्वेनापि व्याख्येयमिति सूत्रेणैव सिध्यतीति नुडिडधिकेनेत्यपि न कर्तव्यम्, तथाविधत्वेऽपि विसमाप्ति-वचनत्वाक्षतेरिति । भाष्ये—गतप्रत्यागतमिति । गतं गमनं, तदारम्भकमेव प्रत्यागमनं तथोच्यते । वस्तु ग्रामान्तरं प्रति निर्गत्य तमप्राप्य मध्यत एव निवृत्तस्यैव गमनप्रत्यागमने एकत्वेन तथा व्यवह्रियेते । यातमनुयातं—यातमेव पुनर्गमनात् अनुयातम् ॥६०॥

## युवा खलतिपलितवलिनजरतीभिः ॥ २ । १ । ६७ ॥

अयुक्तोऽयं निर्देशः । 'समानाधिकरणेने'ति* वर्तते कः प्रसङ्गो यद् व्यधिकरणानां समासः स्यात् ?

एवं तर्हि ज्ञापयत्याचार्यो 'यथाजातीयकमुत्तरपदं तथाजातीयकेन पूर्वपदेन 'समासो भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? 'प्रातिपदिकग्रहणे लिङ्ग-विशिष्टस्यापि ग्रहणं भवती'त्येषा परिभाषा न कर्तव्या भवति ॥६७॥

## वर्णो वर्णेन ॥ २ । १ । ६८ ॥

इदं विचार्यते वर्णेन तृतीयासमासो वा स्यात्—कृष्णेन सारङ्गः कृष्ण-

प्र०— युवा खल । अयुक्त इति । पुँल्लिङ्गस्य स्त्रीलिङ्गेन सामानाधिकरण्यं नोपपद्यत इत्यर्थापत्त्या परिभाषा ज्ञाप्यते । तेन युवतिर्जरतीति स्त्रीलिङ्गयोः समासः । नन्वेतयो-रपि विरुद्धवयोवाचित्वान्नास्ति सामानाधिकरण्यम् । नैष दोषः । जरत्यां युवतिधर्मो-पलम्भाद्युवतेर्वा जरतीधर्मसद्भावात्तद्रूपारोपात् । युवतिशब्दस्यैव पूर्वनिपातार्थमिदम्, अनियमो हि गुणशब्दत्वात्स्यात् । 'जरद्भिः'[1] इत्यपि पाठं शिष्या आचार्येण बोधिता इति 'युवजर'मित्यपि भवति ॥६७॥

वर्णो वर्णेन इदमिति । बुद्ध्या परामृष्टं वस्तु प्रत्यक्षवाचिना सर्वनाम्ना परा-मृश्यते । न तावदस्मिन्प्रदेशे सूत्रस्य प्रत्याख्यानम् । पश्चात्तु भविष्यति । इह कृष्ण-

उ०— युवा खलति । भाष्ये—यथाजातीयकमिति । स्त्रीलिङ्गशब्दरूपमित्यर्थः । किमेत-स्येति । लिङ्गविशिष्टपरिभाषयैव सिद्धमिति प्रश्नः । 'सा एतज्ज्ञापकसिद्धैवे'त्युत्तरम् । यद्यपि 'मुखं चन्द्र' इत्यादौ भिन्नलिङ्गयोरपि सामानाधिकरण्यं दृश्यते, तथापि न सर्वत्र, किं तु संप्रतिपन्नस्थले एव । तदप्येकस्य नियतलिङ्गस्य एवेति भाष्याभिप्रायः । तद्रूपारोपादिति । नन्वेवं पुंस्त्वस्याप्यारोपोऽस्तु किं ज्ञापकेन असंगतं च तदिति चेन्न । उभयारोपे गौरवाल्लक्ष्यानु-रोधेन भाष्यप्रामाण्येन लक्षणपरिभाषाज्ञापनस्यैवौचित्यादित्यलम् । जरद्भिरित्यपीति । अत्र मानं चिन्त्यम् । युवजरमिति । बहुलग्रहणेनापि सुसाधम् ॥६७॥

वर्णो वर्णेन । बुद्ध्या परामृष्टमिति । वक्ष्यमाणमसन्निहितमपि विचारविषय-मित्यर्थः । बुद्धिविषयत्वेनैव च प्रत्यक्षता । नन्विदंशब्देन सूत्रमेव गृह्यतां, तत्राह—न ताव-दिति । सूत्रकर्तव्यत्वाकर्तव्यत्वविचारो नास्तीति न तस्येदमा परामर्श इति भावः । 'अस्मिन्प्रदेश' इति पाठः । कस्मिन् प्रकरणे सूत्रं कार्यमित्येवात्रत्यविचारतात्पर्यमित्याशयः ।

---

* पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन २. १. ४९. १–'समस्यत इति' पा० ।
२–'जरतीभिः' इत्यस्य स्थाने 'जरद्भिः' इत्यपि पाठः सूत्रकारसम्मत इति कैय्यटाशयः । 'पाणिनिः स्वोपज्ञं व्याकरणं स्वयं शिष्यानध्यापयामास' इदमप्यनेन व्यज्यते ।

सारङ्ग' इति । समानाधिकरणो वा—कृष्णः सारङ्गः कृष्णसारङ्ग इति । कश्चात्र विशेषः ?

**वर्णेन तृतीयासमास एतप्रतिषेधे वर्णग्रहणम् ॥ १ ॥**

वर्णेन तृतीयासमास एतप्रतिषेधे वर्णग्रहणं कर्तव्यम् । तृतीयापूर्वपदं प्रकृतिस्वरं भवति[†] । 'अनेते वर्णे' इति वक्तव्यम्[‡] । [ इह[१] मा भूत्—हिमेन एतः हिमैतः । ]

प्र०—सारङ्ग इति सारङ्गशब्दः शबलपर्यायः, स च गुणोपसर्जनद्रव्यवाचित्वाद्गुणवचनो भवति । सारङ्गत्वस्य च कृष्णाकृतत्वमस्ति, तस्मिन्नसति तस्याभावादिति शंकुलाखण्डवत्समासः सिद्धः । अथ कृष्णावयवत्वात्सारङ्गवृत्तिः कृष्णशब्दस्तदा समानाधिकरणपदः सामासः । स च गौणेऽपि सामानाधिकरण्ये बहुलवचनाद्विशेषणं विशेष्येणेति सिद्ध इति । कृष्णेनेति । हेतुतृतीया । कश्चात्रेति । क लाघवमिति प्रश्नः ।

एतप्रतिषेध इति । स्वरे विधीयमान इत्यर्थः । अनेते वर्ण इति । 'कृष्णसारङ्ग' इत्यादौ 'तत्पुरुषे तुल्यार्थतृतीये'ति पूर्वपदप्रकृतिस्वरे सिद्धे 'अनेते वर्णे' इति सूत्रं कर्तव्यम् । वर्णवाचि पूर्वपदमेत उत्तरपदे प्रकृतिस्वरं न भवतीत्यर्थः । तेन 'कृष्णैत' इति समासान्तोदात्तत्वमेव भवति । [ कृष्णेनेति[२] सहयोगे इत्थंभूतलक्षणे वा तृतीया, अनेनैव समासः । ] वर्णग्रहणाच्च हिमेन एतो हिमैत इत्यादौ पूर्वपदप्रकृतिस्वर एव

उ०—पश्चात्प्रतिप्रत्याख्यानप्रकारं मन्दबुद्धिव्युत्पत्तये सौकर्याय च दर्शयति—इह कृष्णसारङ्ग इतीति । 'विशेषणं विशेष्येणेति सिद्ध' इति प्रत्याख्यानं तु पश्चात्प्रतिपत्तीत्यन्वयः । षष्ठीसमासस्त्वीदृशे विषये न संभवत्येव, भाष्यप्रामाण्येनानभिधानाच्च । गौणेऽपीति । बहुलग्रहणाद्गौणमुख्यन्यायोऽत्र न प्रवर्तत इति भावः । विशिष्टरूपोपादानाभावाल्लाक्षणिकतामात्रेण गौणत्वाभावाच्च चिन्त्यमिदम् । भाष्ये—वर्णेन तृतीयासमासो वा स्यादिति । 'वर्णो वर्णेने'ति सूत्रं 'तृतीया तत्कृते'त्यनन्तरं कार्यम्, उतात्रैवेति विचार्यत इत्यर्थः । ननु तृतीयासमासस्य तत्कृतत्वेनैव सिद्धेस्तत्प्रकरणे इदं व्यर्थमत आह—हेतुतृतीयेति । हेतुतृतीयान्ते हि तस्य न प्राप्तिरिति भावः ।

प्रकृतिस्वरे सिद्ध इति । 'अतिप्रसङ्गनिवारणार्थ'मिति शेषः । 'अनेते वर्णे' इति सूत्रं कर्तव्यमित्यन्वयी । तेन कृष्णैत इति । एतः—शबलः । 'शबलैतास्तु कर्बुरे' इतिकोशात् । इत उत्तरं—'कृष्णेनेति सहयोगे इत्थंभूतलक्षणे वा तृतीया अनेनैव समास' इति ग्रन्थः कैयटे दृश्यते, सोऽग्रन्थः । एतशब्दस्य कृष्णघटितवर्णसमुदायवदर्थकत्वेन साहित्यस्य ज्ञापकत्वस्य चात्यन्तभेदनियतत्वेन सहयोगतृतीयायाः, इत्थंभूततृतीयायाश्चाप्राप्तेः । कृष्णसारङ्गोक्तरीत्या सिद्धे उक्तयोगाभावाच्चेति केचित् । पूर्वपदप्रकृतिस्वरो भवतीति । पूर्वपदस्य हिमशब्दस्य वर्णवाचित्वाभावात्प्रतिषेधाप्राप्तेरित्यर्थः । 'अनेते वर्णे' इति प्रथमान्तम् । अन्यत्र 'वर्णो

१—'इति' क्वचिन्न । † तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६. २. २.
‡ वर्णो वर्णेष्वनेते ६.२ ३. २—क्वाचित्कोऽयं पाठः । ३—अपपाठोऽयमिति नागेश उद्द्योते ।

अथ द्वितीयेन वर्णग्रहणेनैतविशेषणेनार्थः ? बाढमर्थो यत्रवर्ण एत-शब्दोऽस्ति । ननु चायमस्ति—आ इत एतः कृष्णेतः लोहितेत इति । नार्थ एवमर्थेन वर्णग्रहणेन । यदि तावदयं कर्मणि क्तः, 'तृतीया कर्मणि' [६.२.४८] इत्यनेन स्वरेण भवितव्यम् । अथापि कर्तरि, परत्वात्कृत्स्वरेण भवितव्यम्* ॥ अथ समानाधिकरणः ।

## समानाधिकरणे द्विर्वर्णग्रहणम् ॥ २ ॥

समानाधिकरणे द्विर्वर्णग्रहणं कर्तव्यम् । 'वर्णो वर्णेष्वनेत' इति वक्तव्यम् । एकं वर्णग्रहणं कर्तव्यम्, इह मा भूत्—परमशुक्लः परमकृष्ण इति ।

प्र०-भवति । हिमेनेति हेतौ तृतीया, 'तत्कृतार्थे'ति समासः । कृत्स्वरस्तु नास्ति उणादीनामव्युत्पन्नत्वात्, अकारकत्वाद्वा हिमस्य ॥ यत्रवर्ण इति । वर्णग्रहणस्य व्यवच्छेद्यत्वेन प्रयोजको नास्तीति भावः । इतरः पराभिप्रायमबुध्वा सत्तां प्रतिपादयितुमाह—ननु चेति । कृष्णेन इति । 'ओमाङोश्चे'ति पररूपम् । तृतीया कर्मणीति । 'अनेत' इति प्रतिषेध आनन्तर्यान्मध्येऽपवादा इति वा 'तत्पुरुषे तुल्यार्थे'त्यस्यैव बाधक इत्यभिप्रायः । परत्वादिति । कृष्णेन अभ्रादिना करणेन इत आगतः 'कृष्णेत' इत्यत्र—'अनेत' इति प्रतिषेधः पूर्वपदप्रकृतिस्वरस्य किं बाधकोऽस्तु अथ कृत्स्वर इति विचारे परत्वात् कृत्स्वर एव बाधक इति नार्थ एतविशेषणार्थेन वर्णग्रहणेनेत्यर्थः । कृत्स्वरमपि बाधित्वा थाथादिस्वरेणात्र भाव्यं, विशेषाभावात्तु भाष्यकारेणैवमोक्तम् । अथवा परत्वात्—उत्कृष्टत्वात्, कक्ष्यान्तरप्राप्तत्वाच्च कृत्स्वरः 'थाथादिस्वर' इत्यर्थः ।

उ०-वर्णेने'ति न प्राप्नोति, हिमस्य वर्णत्वाभावादत आह-हेतौ तृतीयेति । कनकत्वसाम्याद्धेतुपदं कर्तृपलक्षणं, कृतद्वारकं च सामर्थ्यमिति भावः । तदाह—तत्कृतार्थेनेति समास इति । अकारकत्वाद्वेति । कृतद्वारकसामर्थ्ये एव समाससत्त्वेनैतपदार्थं प्रत्यकारकत्वादित्यर्थः । भाष्ये—द्वितीयेनेति । सप्तम्यन्तेनेत्यर्थः । नैते वर्णो वर्णे इतिसूत्रं पाठ्यमिति भावः । अनेत इत्यस्यासमर्थसमासत्वेन वा न क्षतिरिति ।

भाष्ये—यत्रपदसमर्पितेन सूचितं तदभावमाह—प्रयोजको नास्तीति । 'तृतीया कर्मणी'त्यादिप्रवृत्तेरिति भावः । नन्वनेत इति 'तृतीया कर्मणी'त्यस्यापि निषेधः स्यादत आह—आनन्तर्यादित्यादि । 'अनेत' इत्यस्य पूर्वपदप्रकृतिस्वरनिषेधत्वात्कृत्स्वरस्य च पूर्वपदप्रकृतिस्वरापवादत्वात्परत्वादित्यसङ्गतं, तत्राह—अनेत इति प्रतिषेध इति । पूर्वपदप्रकृतिस्वरस्य बाधकः किंप्रतिषेधोऽथ कृत्स्वर इत्यन्वयः । विशेषाभावात्त्विति । एतशब्दस्यान्तोदात्तत्वादिति भावः । 'निषेधाश्च बलीयांस' इति न्यायमभिप्रेत्याह—अथवेति । कक्ष्यान्तरप्राप्तत्वादिति । पूर्वपदप्रकृतिस्वरापवादकृत्स्वरापवादत्वादित्यर्थः ।

भाष्ये—द्विर्वर्णग्रहणमिति । 'अनेत इति प्रतिषेध' इत्यनुवर्त्यते ॥ आचार्यदेशीयः

* गतिकारकोपपदात् कृत् ६. २. १३९.

द्वितीयं वर्णग्रहणं कर्तव्यम्, इह मा भूत्—कृष्णतिला इति ।

एकं वर्णग्रहणमनर्थकम् । [ अवर्णस्य[1] वर्णे वर्णस्य वावर्णे ] अन्यतरत्र कस्मान्न भवति ? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ।

एवं सति तान्येतानि त्रीणि वर्णग्रहणानि भवन्ति समासविधौ द्वे, स्वरविधौ चैकम् । यस्यापि तृतीयासमासस्तस्यापि तान्येव त्रीणि वर्णग्रहणानि भवन्ति समासविधौ द्वे, स्वरविधौ चैकम् । सामान्येन मम तृतीयासमासो भविष्यति 'तृतीया तत्कृतार्थेन गुणवचनेन' [ २. १. ३० ] इति ।

अवश्यं वर्णेन प्रतिपदं समासो वक्तव्यो यत्र तेन न सिध्यति तदर्थम् । क्व च तेन न सिध्यति ? शुकबभ्रुः हरितबभ्रुरिति । तथा च सति तान्येव[2] त्रीणि वर्णग्रहणानि भवन्ति समासविधौ द्वे, स्वरविधौ चैकम् । अथेदानीं समानाधिकरणः सामान्येन सिद्धः स्यात् ? बाढं सिद्धः । कथम् ? 'विशेषणं विशेष्येण बहुलम्' [ २.१.५७ ] इति । एवमपि द्वे वर्णग्रहणे कर्तव्ये स्वरविधावेव, प्रतिपदोक्तस्याभावात् । तस्मात्समानाधिकरण इत्येष पक्षो ज्यायान् ।

प्र०—लक्षणप्रतिपदोक्तयोरिति । 'वर्णो वर्णेने'ति यः समासः स एव स्वरविधौ द्वितीयवर्णग्रहणमन्तरेणापि ग्रहीष्यते, तेनातिप्रसङ्गो न भविष्यतीत्यर्थः ।

शुकबभ्रुरिति । शुको हरितः शुक्लो वा । बभ्रुः कपिलः । ततः तत्कृतत्वाभावात् शुकेन बभ्रुरिति तृतीया सहयोग इत्थंभूतलक्षणे वा कर्तव्या । तस्मादिति । एतत्सूत्रा-

उ०-प्रकृतसूत्रसत्ताश्रयणेन प्रतिपदोक्तपरिभाषया सिद्धिमाश्रित्यैकवर्णग्रहणाकरणेन पक्षयोः साम्यं दर्शयति भाष्ये—एकं वर्णग्रहणमिति । अन्यतरत्र कस्मादिति । अवर्णस्य वर्णे, वर्णस्य वा अवर्णे कस्मान्न भवतीत्यर्थः । क्वचित्तु तथैव पाठः ।

अथ तृतीयासमासवादी स्वमते लाघवमाह—सामान्येन ममेति । इतर आह—अवश्यं वर्णेति । यद्यपि हेतुतृतीयान्तेन समासार्थं 'कृष्णसारङ्ग' इत्याद्यर्थमेवावश्यकं, तथापि स्पष्टत्वाय यत्र कृतद्वारकसामर्थ्यस्यासंभवस्तदर्थमिदमित्याह—शुकबभ्रुरिति । सहयोगे तृतीयेत्येव व्याख्यम् । स एव पुनः पृच्छति—अथेदानीमिति । सिद्धान्त्याह—बाढमिति । एवमपीति । एवं चेत्यर्थः । इदं सूत्रमत्र पक्षे उदाहरणमात्रपरमिति बोध्यम् ।

---

१–क्वाचित्कोऽयं पाठः । २–'तान्येतानि' पा० ।

## समानाधिकरणाधिकारे प्रधानोपसर्जनानां परं परं विप्रतिषेधेन ॥३॥

समानाधिकरणाधिकारे प्रधानोपसर्जनानां परं परं भवति विप्रतिषेधेन । प्रधानानां प्रधानम्, उपसर्जनानामुपसर्जनम् ॥ प्रधानानां तावत्प्रधानम् । 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' [ २. १. ६२ ] इत्यस्यावकाशः—गोवृन्दारकः अश्ववृन्दारकः । पोटायुवतीनामवकाशः*—इभ्ययुवतिः आढ्ययुवतिः । इहोभयं प्राप्नोति—नागयुवतिः वृन्दारकयुवतिः । प्रधानानां परं प्रधानं भवति विप्रतिषेधेन ॥ उपसर्जनानां परमुपसर्जनम् । 'सन्महत्परमोत्तमोत्कृष्टाः' [ ६१ ] इत्यस्यावकाशः—सद्गवः सदश्वः । 'कृत्यतुल्याख्या अजात्या' [ ६८ ] इत्यस्यावकाशः—तुल्यश्वेतः तुल्यकृष्णः[1] । इहोभयं प्राप्नोति–तुल्यसन् तुल्यमहान् । उपसर्जनानां परमुपसर्जनं भवति विप्रतिषेधेन ।

## समानाधिकरणसमासाद्बहुव्रीहिः ॥ ४ ॥

समानाधिकरणसमासाद् बहुव्रीहिर्भवति विप्रतिषेधेन । समानाधिकरण-

प्र०–नारम्भाल्लाघवादित्यर्थः ॥ प्रधानोपसर्जनानामिति । प्रधानग्रहणेन समासशास्त्रे तृतीयान्तानि लक्ष्यन्ते, उपसर्जनशब्देन समासशास्त्रे प्रथमानिर्दिष्टमुच्यते ।

समानाधिकरणसमासादिति । 'समानाधिकरणसमासाद्बहुव्रीहिः कदाचित् कर्मधारयः सर्वधनाद्यर्थे' इति वार्तिककारेणेष्टिरूपेण पठितम् । भाष्यकारस्तु न्याय-

उ०- कश्चिद्विशेषणविशेष्यभावे कामचारात्प्रधानोपसर्जनत्वेऽव्यवस्थिते । तत्राह—प्रधानग्रहणेनेति । तत्रायमर्थः–पूर्वपरसूत्रोपात्तप्रधानयोः सह समाससंज्ञाप्रसङ्गे परसूत्रोपात्तं प्रधानं [प्रधानं] भवति, पूर्वसूत्रोपात्तं प्रधानमुपसर्जनम् । तादृशोपसर्जनयोः समासप्रसङ्गे परशास्त्रोपात्तमुपसर्जनमुपसर्जनम्, पूर्वसूत्रोपात्तमुपसर्जनं प्रधानमिति ॥ भाष्ये—'इभ्ययुवतिराढ्ययुवति'रिति पाठः, स चिन्त्यः । तयोरजातित्वात् । 'इभ्ययुवतिरश्वयुवति'रिति पाठस्तूचित इति केचित् । भाष्यप्रामाण्यात्तयोरपि जातिवाचित्वम्, अत एव 'जातेरस्त्री'तिसूत्रेऽप्योपचारिकत्वेन 'इभ्या क्षत्रिये'ति प्रत्युदाहरणं भाष्ये दत्तम् । हस्तिपकजातिश्चेभ्यपदेनोच्यते । 'अर्ये'ति पाठः । अर्यो ब्राह्मण इत्यन्ये । वृन्दारकयुवतिरिति । वृन्दारकशब्दो देवजातिवाचीत्याहुः । भाष्ये—'कृत्यतुल्ये'त्यस्यावकाशप्रदर्शनावसरे 'तुल्यमहा'नित्यपपाठः । 'तुल्यश्वेतः तुल्यकृष्ण' इत्येव प्राकृतः पाठः ।

* पोटायुवति···धूर्तजातिः २.१.६५. १–'तुल्यमहान्' इति पा० । स त्वपाकृत इति नागेशः ।

समासस्यावकाशः—वीरः पुरुषो वीरपुरुषः[†] । बहुव्रीहेरवकाशः—कण्ठेकालः । इहोभयं प्राप्नोति—वीरपुरुषको ग्रामः । बहुव्रीहिर्भवति विप्रतिषेधेन[‡] ।

**कदाचित्कर्मधारयः सर्वधनाद्यर्थः ॥ ५ ॥**

कदाचित्कर्मधारयो भवति बहुव्रीहेः । किं प्रयोजनम् ? 'सर्वधनाद्यर्थः' । सर्वधनी, सर्वबीजी, सर्वकेशी नटः, गौरखरवदरण्यम्, गौरमृगवदरण्यम्, कृष्णसर्पवान्वल्मीकः, लोहितशालिमान् ग्रामः । किं प्रयोजनम् ? कर्मधारय-

प्र०—व्युत्पादनाय विप्रतिषेधमुपन्यस्य दूषयित्वा इष्टिरूपतां स्थापयिष्यति—प्रत्यासत्तेः सामर्थ्यस्य बलवत्त्वाश्रयेण । कण्ठेकाल इति । व्यधिकरणानां बहुव्रीहिः सप्तम्यन्तस्य पूर्वनिपातविधानेन ज्ञाप्यते । वीरपुरुषक इति । बहुव्रीहिसंज्ञायां सत्यां पूर्वपदप्रकृतिस्वरः, पाक्षिकश्च कप्समासान्तो भवति । बहुव्रीहिसंज्ञायां शेषग्रहणे प्रत्याख्याते विप्रतिषेधश्चिन्त्यते ।

कदाचिदिति । विषयविशेषनिर्देशाय 'क्वचि'दिति वक्तव्ये 'कदाचि'दित्यनेन विषयविशेषावच्छिन्नः कालविशेषो निर्दिष्ट इति नास्ति वस्तुभेदः । सर्वधनीति । सर्वाणि धनान्यस्येत्यर्थविवक्षायां कर्मधारये कृते मत्वर्थीय इनिः, तदर्थं पूर्वप्रतिषेध आश्रयणीय इत्युक्तं भवति । किं प्रयोजनमिति । 'सर्वधनाद्यर्थ'मिति मत्वर्थीयरहितस्य

उ०— न्यायव्युत्पादनायेति । प्रत्यसत्त्याविष्यायेत्यर्थः । विप्रतिषेधप्रकरणादिष्टिरूपत्वं कथं लभ्यमित्यत आह—प्रत्यासत्तेरिति । ज्ञाप्यत इति । शेषत्वाभावादिति भावः । शेषग्रहणे प्रत्याख्यात इति । तथासत्येव 'कण्ठेकाल' इति तदवकाशो युज्यते इति भावः । न हि ज्ञापकसिद्धे सावकाशत्वं गृहीत्वा सूत्रेण विप्रतिषेधो युक्तो विचारयितुमित्यभिमानः । अयं ग्रन्थः प्रौढ्या, न हि त्रिकतः शेषे एकसंज्ञाधिकारे च तत्प्रत्याख्यानमस्ति । व्यधिकरणसमासस्यात्यल्पविषयतासूचनार्थं तस्यावश्यकत्वाच्चेति केचित् ।

कदाचिदित्यनेन समासद्वयस्यैकविषयत्वमाशङ्क्याह—विषयविशेषेति । नास्ति वस्तुभेद इति । क्वचिदित्यतो नार्थभेद इत्यर्थः । भाष्ये—सर्वधनाद्यर्थ इति । सर्वधनादिप्रकृतिकमत्वर्थीयार्थमित्यर्थः । प्रयोजनस्योक्तत्वात् 'किंप्रयोजन'मिति प्रश्नानुपपत्तिमाशङ्क्याह—सर्वधनेति । 'प्रयोगादर्शनात्स्व'इति वर्जितः पाठः । वाक्यालङ्कारे वा च: । कर्मधारयस्यानुक्तसिद्धत्वादिति । 'कदाचित्कर्मधारय' इति पूर्वविप्रतिषेधानुक्तावपि सिद्धत्वादित्यर्थः । मत्वर्थीयप्रकृतिरिति षष्ठीतत्पुरुषः । भाष्ये—मत्वर्थीयैरभिधानमिति । तैः प्रत्ययैस्तदर्थाभिधानं

† पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च २. १. ५८

‡ शेषाद्विभाषा ५. ४. १५४; बहुव्रीहौ प्रकृत्या पूर्वपदम् ६. २. १

प्रकृतिभिर्मत्वर्थीयैरभिधानं यथा स्यात्। किं च कारणं न स्यात्? बहुव्रीहिणोक्तत्वान्मत्वर्थस्य।

यद्युक्तत्वं हेतुः कर्मधारयेणाप्युक्तत्वान्न प्राप्नोति। न खल्वपि संज्ञाश्रयो मत्वर्थीयः। किं तर्हि? अर्थाश्रयः। स यथैव बहुव्रीहिणोक्तत्वान्न भवत्येवं कर्मधारयेणाप्युक्तत्वान्न भविष्यति।

एवं तर्हीदं स्यात्—सर्वाणि धनानि सर्वधनानि, सर्वधनान्यस्य सन्ति सर्वधनीति। नैवं शक्यम्। नित्यमेवं सति कर्मधारयः स्यात्तत्र यदुक्तं 'कदाचित्कर्मधारय' इत्येतदयुक्तम्।

---

प्र० सर्वधनशब्दस्योपादानात्तस्य च केवलस्यान्यपदार्थविवक्षायां प्रयोगादर्शनाच्च स्वपदार्थे बहुव्रीहेरप्रसङ्गात्कर्मधारयस्यानुक्तसिद्धत्वात्प्रश्नः। कर्मधारयप्रकृतिभिरिति। मत्वर्थीयप्रकृतिः सर्वधनशब्दो वार्तिकेऽनुकृतो न तु स्वतन्त्र इत्यर्थः। बहुव्रीहिणेति। सर्वाणि धनान्यस्येति विवक्षायां यदि बहुव्रीहिः क्रियते तदा तेनैव मत्वर्थस्योक्तत्वान्मत्वर्थीयो न स्यात्, कर्मधारये तु सति तेन मत्वर्थस्यानुक्तत्वात्प्रत्ययः सिध्यतीत्यर्थः। यद्युक्तत्वमिति। सर्वाणि धनान्यस्येत्यर्थविवक्षायां पूर्वविप्रतिषेधेन यदि कर्मधारयः क्रियते तदा तेनापि मत्वर्थ उच्यत एव। न हि बहुव्रीहिकर्मधारयसंज्ञाभेदमात्रेण स्वरव्यवस्थावत्पदार्थस्याभिधानानभिधानव्यवस्था युज्यते, तस्याः स्वाभाविकत्वादिति भावः।

एवं तर्हीति। अनपेक्षितान्यपदार्थं स्वपदार्थं कर्मधारयं कृत्वा मत्वर्थीयोऽर्थान्तरे विधास्यत इत्यर्थः। नित्यमेवं सतीति। यथा पूर्वं विषयभेदविवक्षया कदाचिदित्युक्तं तथात्र सकलविषयव्याप्त्यपेक्षया सर्वत्रेति वक्तव्यं नित्यमित्युक्तम्। एतदुक्तं भवति—अनेन न्यायेन सर्वत्र मत्वर्थीयप्रकृतिभिः कर्मधारयः स्यादिति कदाचिद् ग्रहणं विषयविशेषनिर्देशार्थं वक्तव्यं न भवति।

---

उ०—यथा स्यादित्यर्थः। तस्याः स्वाभाविकत्वादिति। बहुव्रीहिविषये पूर्वविप्रतिषेधेन कर्मधारयविधानात्तदर्थस्तेनोक्त एवेति भावः। मत्वर्थीयोऽर्थान्तर इति। अन्यपदार्थरूपे मत्वर्थे इत्यर्थः।

न वक्तव्यमिति। वक्तुमनर्हमित्यर्थः। क्वचित्तु 'न कर्तव्य'मिति पाठः। तत्राप्ययमेवार्थः, तदर्थस्य विषयविशेषविधानस्याभावादिति भावः। अन्यथा—प्रकारान्तरेण। मत्वर्थीयोत्पत्ति—सन्नियमम्। वस्त्वित्यर्थं इति। 'भवति वै किंचि'दिति भाष्यस्य,—एवंजातीयकं किंचिद्वचनं भवति वस्त्वित्यर्थः। 'किंजातीय'मित्याकाङ्क्षायां 'कार्याः शब्दा' इति यज्जातीयं तज्जातीयमित्युत्तरम्। 'कार्याः शब्दा' इति वचनमेव केनाभिप्रायेण पठितमित्यत

एवं तर्हि भवति वै किंचिदाचार्याः कार्यवद् बुद्धिं कृत्वा पठन्ति 'कार्याः शब्दा' इति। तद्वदिदं पठितं समानाधिकरणसमासाद् बहुव्रीहिः कर्तव्यः कदाचित्कर्मधारयः सर्वधनाद्यर्थं' इति।

यदुच्यते 'समानाधिकरणसमासाद्बहुव्रीहिर्भवति विप्रतिषेधेने'ति नैष युक्तो विप्रतिषेधः। अन्तरङ्गः कर्मधारयः। कान्तरङ्गता ? स्वपदार्थे कर्मधारयोऽन्यपदार्थे बहुव्रीहिः। अस्तु। विभाषा कर्मधारयो यदा न कर्मधारयस्तदा बहुव्रीहिर्भविष्यति।

प्र०- इदानीमन्यथा मत्वर्थीयोत्पत्तिमाह—एवं तर्हीति। भवतीति। एवंजातीयकं वस्त्वित्यर्थः। किं तदित्याह—आचार्या इति। अथवा पठिक्रिया भवतिक्रियायाः कर्त्री भवति। 'कार्याः शब्दा' इति दर्शने लक्षणादेव शब्दानामर्थव्यवस्था, ततोऽन्यपदार्थे बहुव्रीहिशासनात्तस्यैव तत्प्रत्यायनं, न तु कर्मधारयस्य। तत्र सर्वाणि धनान्यस्येत्यर्थविवक्षायां पूर्वविप्रतिषेधेन कर्मधारयः क्रियमाणोऽन्यपदार्थं नाभिधत्त इति तदभिधानायायं मत्वर्थीय उत्पाद्यत इत्यर्थः।

विप्रतिषेधापनयनायाह—नैष युक्त इति। स्वपदार्थ इति। 'मध्यममध्यमवीराश्रे'ति स्वपदार्थमात्राश्रयेण विधानादन्यपदार्थानाश्रयणादिति भावः। इतरो विषयविशेषे बहुव्रीहिं साधयति—अस्त्विति। यथोक्तेन प्रकारेणान्तरङ्गत्वं कर्मधारयस्य भवत्वित्यर्थः। विभाषेति। नात्र महाविभाषा विवक्षिता, तया हि पक्षे व्यपेक्षैव प्रतिपाद्यते, नन्वेकार्थीभावे संज्ञाया भावाभावौ क्रियेते। तस्मा'द्विभाषा कर्मधारय' इत्यस्यायमर्थः—विकल्पितः कर्मधारयो विषयविभागेनावस्थानात्। स्वपदार्थे ह्यसौ वर्तते नान्यपदार्थे। एतदुक्तं भवति-अनपेक्षितान्यपदार्थं स्वपदार्थमात्रविवक्षायां भवतु कर्मधारयः, पूर्वमेव त्वन्यपदार्थविवक्षायां 'वीरपुरुष' इत्यादौ बहुव्रीहिः सिध्यति।

उ०-आह-आचार्याः कार्यवद् बुद्धिं कृत्वा पठन्तीति। घटादिरूपकार्यवच्छब्दा अपि कार्या इति बुद्ध्या पठन्तीत्यर्थः। पठ्यमानवचनाकारमाह—कार्याः शब्दा इति। अथवा पठिक्रियेति। आचार्यकर्तृककिंचित्कर्मकार्यवद् बुद्धिकरणोत्तरकालिकपठनक्रियाकर्तृकं भवनमित्यर्थः। दृष्टान्तमुपपाद्य प्रकृतोपयुक्तमाह—तद्वदिति। 'कार्याः शब्दा' इतिवत्कार्यवद्बुद्ध्येदं पठितमित्यर्थः। तदाशयमाह—कार्याः शब्दा इति दर्शने इति। तत्प्रत्यायनम्—तत्प्रत्यायनसामर्थ्यम्॥ नन्वेवं 'वीरः पुरुष' इत्यादावन्तरङ्गत्वात्कर्मधारय एव स्यात्, न तु बहिरङ्गो 'वीरपुरुषक' इति बहुव्रीहिरित्यत आह भाष्ये—अस्तु विभाषेति। तदाशयमाह—नात्रेत्यादिना। बहुव्रीहिः सिध्यतीति। अपवादत्वादिति भावः। भाष्ये—'इष्टिरिय'मित्यनेन

एवमपि यद्यत्र कदाचित्कर्मधारयो भवति कर्मधारयप्रकृतिभिर्मत्वर्थीयैरभिधानं प्राप्नोति। सर्वश्चायमेवमर्थो यत्नः 'कर्मधारयप्रकृतिभिर्मत्वर्थीयैरभिधानं मा भूदिति।

एवं तर्हि नेदं तस्य योगस्योदाहरणं 'विप्रतिषेधे पर'मिति* । किं तर्हि ? इष्टिरियं पठिता—'समानाधिकरणसमासाद् बहुव्रीहिरिष्टः, कदाचित्कर्मधारयः सर्वधनाद्यर्थं' इति । यदीष्टिः पठिता नार्थोऽनेन । इह हि सर्वे मनुष्या [1]अल्पेन यत्नेन महतोऽर्थानाकाङ्क्षन्ति । एकेन माषेण शतसहस्रम् । एकेन [2]कुद्दालपदेन खारीसहस्रम् । तत्र कर्मधारयप्रकृतिभिर्मत्वर्थीयैरभिधानमस्तु बहुव्रीहिणेति बहुव्रीहिणा भविष्यति लघुत्वात् ।

प्र०- एवमपीति । पूर्वमनपेक्षितेऽन्यपदार्थे यदि कर्मधारयः क्रियते तदा पश्चादन्यपदार्थविवक्षायां 'वीरपुरुषवान् ग्राम' इत्याद्यपि स्यादित्यर्थः ।

इष्टिरियमिति । वीरपुरुषादौ प्रथममेवान्यपदार्थविवक्षा कार्या, 'सर्वधनी'त्यादौ तु पश्चादिति विवक्षानियम इष्टसिद्धये प्रतिपाद्यत इत्यर्थः । नार्थोऽनेनेति । न्यायसिद्धत्वादिति भावः । यदि कर्मधारयान्मत्वर्थीयः क्रियते तदा स्वपदार्थप्राधान्यमाश्रित्य कर्मधारयः कर्तव्यः, तेषामेव पदार्थानामन्यत्र गुणभावमाश्रित्य मत्वर्थीय उत्पाद्यत इति प्रतिपत्तिगौरवप्रसङ्गः । यदा तु पूर्वमेवान्यपदार्थविवक्षा तदा वर्तिपदार्थानां तत्र गुणभाव एवाश्रीयत इति प्रतिपत्तिलाघवं भवति । अन्ये तु शब्दलाघवं मन्यन्ते । बहुव्रीहिरन्यानपेक्षोऽन्यपदार्थं प्रतिपादयति, कर्मधारयस्तु मत्वर्थीयसहित इति शब्दगौरवप्रसङ्गः । एवञ्च शब्दलाघवं तथा प्रयोगदर्शनादत्रैव विषय आश्रीयत इति वृत्त-

उ०—यदुक्तं तद्दर्शयति—प्रथममेवेति । वीरपुरुषादौ यद्यन्यपदार्थविवक्षा तर्हि प्रथममेव, न तु कर्मधारयोत्तरमित्यर्थः । इदमेवार्थतः पठ्यते 'न कर्मधारयान्मत्वर्थीय' इति ।

भाष्ये—अल्पेनेति । मूल्येनेत्यर्थः । 'अल्पेन यत्नेने'ति क्वचित्पाठः । माषेण—तत्परिमितस्वर्णेन । शतसहस्रमिति । वस्त्राणि, गा वेत्यर्थः । कुद्दालपदेनेति । पर्वतीयाः कुद्दालैरेव भूकर्षणं कृत्वा सस्यं संपादयन्तीति तद्व्यवहारानुसारेणेदम् । प्रतिपत्तिगौरवेति । एकस्य विरुद्धयोः प्राधान्यगुणत्वयोराश्रयणमेव प्रतिपत्तिगौरवमित्याहुः । अन्ये तु शब्दलाघवमिति । इदमेव भाष्यस्वरससिद्धं मतम्, एकस्यैवार्थस्य प्रतिपादनाय वृत्तिद्वयापेक्षायां

* विप्रतिषेधे परं कार्यम् १. ४. २. १–'अल्पेनाल्पेन महतो महतोऽर्थान्' पा० ।
२–'कुद्दालकेन' कीलहार्न पाठः ।

कथं सर्वधनी सर्वबीजी सर्वकेशी नट इति ? इनिप्रकरणे सर्वादेरिनिं वक्ष्यामि† । तत्रावश्यं वक्तव्यं ठनो‡ बाधनार्थम् ।

कथं गौरखरवदरण्यम्, गौरमृगवदरण्यम्, कृष्णसर्पवान् वल्मीकः, लोहितशालिमान् ग्रामः ? अस्त्यत्र विशेषः । जात्यात्राभिसंबन्धः क्रियते । कृष्णसर्पो नाम सर्पजातिः सास्मिन्वल्मीकेऽस्ति । यदा ह्यन्तरेण जातिं तद्वताभिसंबन्धः क्रियते 'कृष्णसर्पो वल्मीक' [१]इत्येवं तदा भविष्यति ।

**पूर्वपदातिशये आतिशायिकाद्बहुव्रीहिः सूक्ष्मवस्त्रतराद्यर्थः ॥ ६ ॥**

पूर्वपदातिशय आतिशायिकाद् बहुव्रीहिर्भवति विप्रतिषेधेन । किं प्रयोजनम् ? 'सूक्ष्मवस्त्रतराद्यर्थः' । आतिशायिकस्यावकाशः—पटुतरः पटुतमः । बहुव्रीहेरवकाशः—चित्रगुः शबलगुः । इहोभयं प्राप्नोति—सूक्ष्मवस्त्रतरः तीक्ष्णशृङ्गतरः । बहुव्रीहिर्भवति विप्रतिषेधेन ।

प्र०—वनस्पत्यादिषु न प्रसञ्जनीयम् । सर्वादेरिति । ततश्चात्र वचनाल्लाघवं नाश्रीयत इति कर्मधारये कृते इनिः कर्तव्य इत्यर्थः । ठनो बाधनार्थमिति । योऽपीष्टिमारभते तेनापि कर्मधारयाट्ठन्बाधनायेनिरेवेति वक्तव्यमित्यर्थः । जात्यात्रेति । जातिश्चाकृते कर्मधारये न प्रतीयते । यदा ह्यीति । विशिष्टगुणेन द्रव्येण तद्वत्तायां विवक्षितायामित्यर्थः ।

पूर्वपदातिशय इति । अतिशयेन सूक्ष्माणि वस्त्राण्यस्येत्यर्थविवक्षायामुभय-

उ०—गरीयान् शब्दो बोधको बहुव्रीहौ स्वल्प इति भावः । न प्रसञ्जनीयमिति । मत इष्टिरित्येव सम्यक् । एवं च 'यदीष्टिः पठ्यते मार्गोऽनेने'त्यादिः 'इत्येव तदा भवती'त्यन्तग्रन्थ आचार्यदेशीयस्येति भावः । किं च वक्ष्यमाणयुक्तिभिः 'सर्वधनी'त्यादिप्रयोगसाधनेऽप्यसुष्यत इति 'प्रत्ययस्यात्का'दितिसूत्रस्थभाष्यप्रयोगासङ्गतिः, मम तु 'सर्वधनाद्यर्थं' इत्यादिसम्बन्ध प्रकारार्थत्वान्न दोषः । कर्मधारयपदं च नञ्समासस्याप्युपलक्षणम् । ध्वनितं चेदं 'र कत' इति सूत्रे भाष्ये । ततश्चात्र वचनादिति । 'सर्वादे'रिति वचनसामर्थ्यात् । भाष्ये—कृष्णसर्पो नाम जातिरिति । जातिव्यक्त्योरभेदाश्रयेणैतदुक्तम् ।

भाष्ये—पूर्वपदातिशय इति । तदर्थातिशये इत्यर्थः । समासार्थस्य—लिङ्गसंख्या-

† सर्वादेश्च ५. २. १२५. वा० २ । ‡ अत इनिठनौ ५. २. ११५.

१–'इत्येव तदा भवति' पा० स चोद्द्योतसम्मतः ।

नैष युक्तो विप्रतिषेधः । 'विप्रतिषेधे पर'मित्युच्यते* पूर्वश्च बहुव्रीहिः, पर आतिशायिकः† । इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवति ।

एवमप्ययुक्तः । अन्तरङ्ग आतिशायिकः । कान्तरङ्गता ? ङ्याप्प्रातिपदिकादातिशायिकः‡ सुबन्तानां बहुव्रीहिः । आतिशायिकोऽपि नान्तरङ्गः । कथम् ? समर्थात्तद्धित उत्पद्यते, सामर्थ्यं च सुबन्तेन । एवमप्यन्तरङ्गः । कथम् ? स्वपदार्थ आतिशायिकोऽन्यपदार्थे बहुव्रीहिः । एवमपि नान्तरङ्गः । कथम् ? स्पर्धायामातिशायिको भवति, न चान्तरेण प्रतियोगिनं स्पर्धा भवति ।

नैव वात्रातिशायिकः प्राप्नोति । किं कारणम् ? असामर्थ्यात् । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । यावता वस्त्राणि तद्वन्तमपेक्षन्ते

प्र०–प्रमङ्गे पूर्वं बहुव्रीहिरिष्यते ततो बहुव्रीहेः प्रत्ययः । भाष्यकारस्तु विप्रतिषेधं प्रत्यासत्त्या पूर्ववदुपन्यस्य सामर्थ्याश्रयेण दूषयित्वेष्टित्वं स्थापयिष्यति । ङ्याप्प्रातिपदिकादिति । ननु प्रकर्षं आतिशायिकः, प्रकर्षश्च समासार्थस्य भवति । ततश्च पदात्तेनोत्पत्तव्यम् । एवं तर्ह्यधिकारमात्रमाश्रित्यैवमुक्तम् । अत एवोच्यते—'समर्था'दिति । सुबन्तेनेति । हेतौ तृतीया । सुबन्तेन पदेन प्रकर्षानुभवविषयं सामर्थ्यमर्थस्य नान्यथेत्यर्थः । आतिशायिकस्य प्रतियोगिवस्त्वन्तरापेक्षया बहुव्रीहिणा साम्यं प्रतिपाद्य सर्वथानुत्पत्तिं प्रतिपादयितुमाह—

नैव वेति । तद्वन्तमिति । वस्त्रस्वामिनमित्यर्थः । अस्यातिशयेन सूक्ष्माणि

उ०–वाक्यस्वारसिकत्वम् । समर्थादिति । 'समर्थः पदविधि'रित्युक्तेरिति भावः । सुबन्तेन पदेनेति । तेन हेतुना लिङ्गसंख्यादिभिः परिसमाप्तस्यार्थस्य प्रकर्षादिसंबन्धसामर्थ्यमिति भावः । नान्यथेति । केवलप्रातिपदिकोपस्थाप्यं नेत्यर्थः । प्रतियोगिवस्त्वन्तरापेक्षयेति । हेतौ तृतीयेयम् । तद्वतोऽपेक्षणादिति । वस्त्राणि सौक्ष्म्यविषयस्पर्धायां तद्वन्तमपेक्षन्त इति भाष्याक्षरार्थः । बहुव्रीह्यातिशायिकयोर्युगपत्प्राप्तिविषये तद्वन्तमपेक्ष्य वस्त्राणां सौक्ष्म्यगुणविषया स्पर्धेति । अस्यापि सूक्ष्माणि वस्त्राण्यस्यापि सूक्ष्माणि, अस्यास्मादतिशयेन सूक्ष्माणीति विवक्षायां किंकातिशायिकबहुव्रीह्योरेकत्र प्रसक्तिर्वाच्या । तत्र वस्त्रद्वारा सूक्ष्मशब्दस्य तद्वत्सापेक्षत्वादातिशायिकाप्रसक्तिरित्ययुक्तो विप्रतिषेध इति भावः । एवं च परम्परया सौक्ष्म्यगुणविषयप्रकर्षस्य विशेषणस्यैव सापेक्षत्वमित्युक्तं भवति । वचनप्रामाण्यादातिशायिकस्तत्र भविष्यत्येवेति मन्यमानः पृच्छते भाष्ये—ननु चेति । या हि तद्वन्तमिति । न सा विद्यतेति भावः । पूर्व-

* विप्रतिषेधे परं कार्यम् १. ४. २. † अनेकमन्यपदार्थे २. २. २४; अतिशायने तमबिष्ठनौ; द्विवचनविभज्योपपदे तरबीयसुनौ ५. ३. ५५; ५७. ‡ ङ्याप्प्रातिपदिकात् ४. १. १.

तद्वन्तं चापेक्ष्य वस्त्राणां वस्त्रैर्युगपत्स्पर्धा भवति । ननु चायमातिशायिक एवमात्मकः सत्यां व्यपेक्षायां विधीयते । सत्यमेवमात्मको यो च नान्तरेण व्यपेक्षामातिशायिकस्य प्रवृत्तिस्तस्यां सत्यां भवितव्यम् । का च नान्तरेण व्यपेक्षामातिशायिकस्य प्रवृत्तिः ? या हि प्रतियोगिनं प्रति व्यपेक्षा । या हि तद्वन्तं प्रति न तस्यां भवितव्यम् ।

बहुव्रीहिरपि तर्हि न प्राप्नोति । किं कारणम् ? असामर्थ्यादेव । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । यावता वस्त्राणि वस्त्रान्तराण्यपेक्षन्ते तद्वता चाभिसंबन्धः ।

एवं तर्हि नेदं तस्य योगस्योदाहरणं 'विप्रतिषेधे पर'मिति* । किं तर्हि ? इष्टिरियं पठिता–'पूर्वपदातिशय आतिशायिकाद् बहुव्रीहिरिष्टः सूक्ष्मवस्त्रतराद्यर्थ' इति । यदीष्टिरियं पठिता नार्थोऽनेन । कथं यैषा युक्तिरुक्ता 'वस्त्रान्तराणां वस्त्रान्तरैर्युगपत्स्पर्धा तद्वता चाभिसंबन्ध' इति । यदा ह्यन्तरेण वस्त्राणां

प्र०–वस्त्राणीति तद्वतोऽपेक्षणात् । सत्यामिति । ततश्च यथा प्रतियोग्यपेक्षायां प्रत्ययो भवत्येवं तद्वदपेक्षायामपि कस्मान्न भवतीति भावः । वस्त्राणीति । अविशयानानि वस्त्राण्यतिशय्यमानानि वस्त्राण्यपेक्षन्त इत्यर्थः ।

एवं सापेक्षत्वाद् द्वयोरपि निराकृतयोरर्थान्तरत्वमाह–एवं तर्हीति । नार्थोऽनेनेति । इष्ट्या विनाप्यस्यार्थस्य सिद्धत्वादिति भावः । यैषा युक्तिरिति । सा नाश्रीयत इत्यर्थः । कथं तर्ह्याश्रीयत इत्याह—यदा हीति । अन्यपदार्थमात्रविवक्षायां बहुव्रीहौ कृते पश्चा-

उ०–स्वामिकयोरपि स्पर्धादर्शनादिति बोध्यम् । अतिशयानानीति । अन्याभिभवकर्तॄणि प्रकर्षयुक्तानीत्यर्थः । अतिशय्यमानानि । अभिभूयमानानीत्यर्थः । अतिशेतिरभिभवे । भाष्ये—'तद्वता चाभिसंबन्ध' इत्यनेन हि—प्रकृते विशेषणस्य सापेक्षत्वकथनं तरपोऽप्राप्तिबीजं स्मारितम् । अर्थान्तरत्वम्—इष्टिरूपत्वम् । क्वचित्त्वर्थत्वमिति पाठस्तत्राप्ययमेवार्थः । भाष्ये—किं तर्हीति । एवं च तत्सामर्थ्यात्सापेक्षत्वेऽपि बहुव्रीहितद्धितावितिभावः । कथमिति । वस्त्रान्तराणां वस्त्रान्तरैर्युगपत्स्पर्धा, तद्वता चाभिसंबन्ध इति येयं बहुव्रीहितद्धितयोरप्राप्त्युपपादिका युक्तिरुक्ता तया युक्त्या द्वयोरप्यप्राप्तेः कथमानर्थक्यमिति प्रश्नः । समाधत्ते—यदाहीतीत्यन्ये । 'यदा ह्यन्तरेण वस्त्राणां वस्त्रैर्युगपत्स्पर्धा'मिति पाठः ।

* विप्रतिषेधे परं कार्यम् १ ४. २.

वस्त्रान्तरैर्युगपत्स्पर्धा तद्वता चाभिसंबन्धः क्रियते निष्प्रतिद्वन्द्वस्तदा बहुव्रीहिर्बहुव्रीहेरातिशायिकः ।

न तर्हीदानीमिदं भवति 'सूक्ष्मतरवस्त्र' इति ? भवति । यदान्तरेण तद्वन्तं वस्त्राणां वस्त्रान्तरैर्युगपत्स्पर्धा, निष्प्रतिद्वन्द्वस्तदातिशायिकः ।

कथं पुनरन्यस्य प्रकर्षेणान्यस्य प्रकर्षः स्यात् ? नैवान्यस्य प्रकर्षेणान्यस्य प्रकर्षेण भवितव्यम् । यथैवायं द्रव्येषु यतते 'वस्त्राणि मे स्यु'रिति, एवं गुणेष्वपि यतते 'सूक्ष्मतराणि मे स्यु'रिति । नात्रातिशायिकः प्राप्नोति । किं

---

प्र०–दातिशायिकः क्रियते । अतिशयमात्रविवक्षायां तु प्रत्यये कृते पश्चाद् बहुव्रीहिः । ततश्च 'सूक्ष्मतरवस्त्र' इत्यपि सिद्धयति । इष्टौ तु सत्यामेतन्न सिध्येत् ।

यदुक्तं 'बहुव्रीहौ कृते पश्चादातिशायिकः क्रियते' इति, तत्राह—कथं पुनरिति । अतिशयेन सूक्ष्मवस्त्र इति बहुव्रीहेः प्रत्यये क्रियमाणे वस्त्रगतसौक्ष्म्यप्रकर्षे कथमन्यपदार्थप्रकर्षः स्यादित्यर्थः । अत्रोत्तरं—नैवान्यस्येति । सर्वत्रैव यतः प्रत्ययो विधीयते

---

उ०–'तद्वता चाभिसम्बन्ध' इति च । इष्टौ तु सत्यामिति । तस्मादिष्टिर्नेति भाष्याभिप्राय इति भावः । तर्हीदानीमिति । तदेदानीमित्यर्थः । इष्ट्यारम्भे इति यावत् । इदं न भवति—इदं न सिध्यति । भवति—सिध्यति । कुतस्तत्राह—यदेति—इति भाष्याक्षरार्थः ।

कथमन्यपदार्थस्य प्रकर्ष इति । यतः प्रत्ययस्तदर्थप्रकर्षस्तत्प्रत्ययनिमित्तम् । एवं च सौक्ष्म्यप्रकर्षे प्रत्यये क्रियमाणेऽप्यन्यपदार्थप्रकर्षाभावात्कथं तत्प्रतिपादकसमुदायात्प्रत्ययः । प्रकर्षद्वयप्रतिपादने तु नैकस्य सामर्थ्यम् । न च सौक्ष्म्यप्रकर्ष एवान्यपदार्थप्रकर्षः, अन्यदीयस्यान्यदीयत्वायोगादिति भावः । एक एवासाविति । गुणप्रकर्ष एव द्रव्यप्रकर्ष इत्यर्थः । स च क्वचित्प्रवृत्तिनिमित्तगुणप्रकर्षः, यथा—'शुक्लतर' इत्यादौ । क्वचित्तत्सहचरितगुणप्रकर्षो यथा—'गोतर' इत्यादौ । क्वचित्तद्विशेषणघटकगुणप्रकर्षो यथा प्रकृते । 'नैवान्यस्ये'ति भाष्येणापि पृथग्द्रव्यप्रकर्षाभाव एव प्रतिपाद्यते इति बोध्यम् । भाष्ये—वस्त्राणि मे स्युरिति । वस्त्रस्य द्रव्यत्वात्तत्र प्रकर्षाभावेन तरब्न कृतः । सूक्ष्मतराणीति । सूक्ष्मत्वस्य गुणत्वात्तत्र प्रकर्षसम्भवेन बहुव्रीहेरुत्पन्नेनाप्यातिशायिकेन परम्परासम्बद्धस्य तस्यैव प्रकर्ष उच्यत इति भावः । तथापि यत्रेति । साक्षात्स्वगतगुणप्रकर्षः स्वसम्बन्धिपदार्थगतगुणप्रकर्षो वा उभयमपि द्रव्यप्रकर्षरूपं भवत्येवेति भावः ।

---

१–'वस्त्रैर्युगपत्' पा० ।

कारणम् ? 'गुणवचना'दित्युच्यते न च समासो गुणवचनः । समासोऽपि गुणवचनः । कथम् ? 'अजहत्स्वार्था वृत्ति'रिति । अथ जहत्स्वार्थायां तु दोष एव । जहत्स्वार्थायां च न दोषः । भवति बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा— शुक्लवाससमानय' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'ति तद्गुणा आनीयते तद्गुणाश्च प्रचरन्ति ।

**उत्तरपदातिशय आतिशायिको बहुव्रीहेर्बह्वाढ्यतराद्यर्थः ॥ ७ ॥**

उत्तरपदातिशय आतिशायिको बहुव्रीहेर्भवति विप्रतिषेधेन । किं प्रयोजनम् ? 'बह्वाढ्यतराद्यर्थः' । बह्वाढ्यतरः बहुसुकुमारतरः । कः पुनरत्र विशेषो बहुव्रीहेर्वातिशायिकः स्यादातिशायिकान्तेन वा बहुव्रीहिः ? स्वरकपोर्विशेषः । यद्यत्रातिशायिकाद् बहुव्रीहिः स्याद् बह्वाढ्यतर एवं स्वरः प्रसज्येत, बह्वाढ्यतर इति चेष्यते* । बह्वाढ्यकतर इति च प्राप्नोति, बह्वाढ्यतरक इति चेष्यते† ।

प्र०—तदर्थस्य स्वतः प्रकर्षाभावादन्यगत एव प्रकर्ष आश्रीयते । यथोक्तम्—

'द्रव्यस्याव्यपदेश्यस्य य उपादीयते गुणः ।
भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते' ॥ इति ।

एक एवासौ प्रकर्ष इत्यर्थः । यद्यप्यत्राश्रयान्तरवर्तिगुणप्रकर्षस्तथापि यत्र यथाभूतः संभवति तत्र तथाभूत आश्रीयते ।

गुणवचनादिति । नात्र'जादी गुणवचनादेवे'ति बोद्धव्यं, तरपोऽत्र प्रकृतत्वात् । तस्माद् गुणस्यैव प्रकर्षः संभवति न द्रव्यस्येत्याश्रित्यैतदुक्तम् । अजहत्स्वार्थेति । तत्र सूक्ष्मार्थस्य विद्यमानत्वात्प्रकर्षसंभवः । बह्वाढ्यतर इति । यद्यत्र बहुव्रीहिं कृत्वा

उ०— भाष्ये—गुणवचनादिति । गुणोपसर्जनगुणिबोधकात्प्रवृत्तिनिमित्तगुणप्रकर्षे, तत्सहचरितगुणप्रकर्षे वा प्रत्यय उच्यत इत्यर्थः । गुणग्रहणं धर्ममात्रपरम् । समासोऽपि गुणवचन इति । सूक्ष्मत्वविशिष्टवस्त्रविशिष्टपुरुषवचनत्वादिति भावः । अन्यपदार्थे कहतया गुणवचनत्वं नेत्याशयेन पृच्छति—कथमिति । उत्तरयति—अजहत्स्वार्थेति । एवं चावयवार्थोपस्कृतान्य-

* बहोर्नञ्वदुत्तरपदभूम्नि ६. २. १७५; अनुदात्तौ सुप्पितौ ३. १. ४.
† शेषाद्विभाषा ५. ४. १५४.

## समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च ॥ ८ ॥

समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानं कर्तव्यमुत्तरपदलोपश्च वक्तव्यः । शाकभोजी पार्थिवः शाकपार्थिवः । कुतपवासाः सौश्रुतः कुतपसौश्रुतः । अजापत्यस्तौल्वलिरजातौल्वलिः । यष्टिप्रधानो मौद्गल्यो यष्टिमौद्गल्यः ॥६९॥

## चतुष्पादो गर्भिण्या ॥ २ । १ । ७१ ॥

[1]चतुष्पाज्जातिरिति वक्तव्यम् । इह मा भूत्—कालाक्षी गर्भिणी । स्वस्तिमती गर्भिणी ॥७१॥

प्र०-आतिशायिकः क्रियते तदा 'बहोर्नञ्वदुत्तरपदभूम्नी'त्यन्तोदात्तत्वमाढ्यशब्दाकारस्य स्याद्रेफाकारस्य चेष्यते । अयमर्थो न्यायसिद्धो यदि समासात्प्रकर्षप्रत्यय उत्पद्यते तदा किं बहुत्वगुणाश्रयः प्रकर्ष उत आढ्यत्वाश्रयः प्रत्ययोत्पत्तिनिमित्तमिति संदेहः स्यात् । तस्मात्पूर्वं प्रकर्षस्य विवक्षा, पश्चादन्यपदार्थस्य ॥ शाकभोजीति । शाकभोजित्वात्तत्साहचर्यात्तद्व्यपदेशाभावार्थं उत्तरपदलोपेनेत्याहुः ॥६५॥

चतुष्पादो । चतुष्पाज्जातिरिति । केचिज्जातिग्रहणमनुवर्त्यमित्याहुः । अन्ये त्वाहुः—शब्दान्तरसन्निधिनिरपेक्षा ये चतुष्पाज्जातिवचनास्त एवान्तरङ्गत्वाद् गृह्यन्ते न तु कालाक्ष्यादयो यौगिकाः शब्दान्तरसन्निधानाच्चतुष्पाज्जातिविषयाः ॥७१॥

उ०-पदार्थस्य समुदायेनोपस्थापनाद् गुणवचनत्वम् । प्रवृत्तिनिमित्तसहचरितगुणप्रकर्ष इव प्रवृत्तिनिमित्तविशेषणविशेषगुणप्रकर्षोऽपि तदुत्पत्तिनिमित्तम् । स च 'गोतर' इत्यादाववाच्यगतोऽपि यदि निमित्तं किं वक्तव्यं विशेषणविशेषणतया वाच्यस्येति भावः । अथेति । तत्र हि उपसर्जनपदानामर्थाभावेऽपि प्रधानपदेन समुदायेन वस्तुतस्तादृशगुणोपलक्षितव्यक्तेरेव बोधो न तु गुणानां वाच्यत्वमिति भावः । जहत्स्वार्थायां च न दोष इति । अवयवानामर्थाभावेऽपि तद्गुणविशिष्टाया व्यक्तेरानयनादि यथावाच्यस्येऽपि तथा तद्गतप्रकर्षे प्रत्ययः, गोतर इत्यादाववाच्यवाहदोहादिप्रकर्ष इवेति भावः । सन्देहः स्यादिति । प्रकरणादिना निश्चयसम्भवादिदं चिन्त्यम् ॥ नार्थं उत्तरपदलोपेनेत्याहुरिति । अत्रायमाशयः—'शाकभोजिपार्थिव' इत्यादिप्रयोगव्यावृत्तये वार्तिकमावश्यकमिति ॥६९॥

चतुष्पादो । भाष्ये—'वक्तव्य'मित्यस्य व्याख्येयमित्यर्थः । व्याख्यानप्रकारं दर्शयति—केचिदित्यादिना । शब्दान्तरेति । 'चतुष्पाद्वचनाश्चतुष्पाद्विषया' इत्येव पाठः । 'जाति'-रित्यस्य विच्छिन्नत्वादन्तरङ्गबहिरङ्गभावस्य च सर्वेषु शब्देष्वभावाद्वचनमेवावश्यकमिति तत्त्वम् ॥७१॥

---

१.-इतः पूर्वं 'चतुष्पाज्जातिः' इति वार्तिकं क्वचिद् दृश्यते ।

## मयूरव्यंसकादयश्च ॥ २ । १ । ७२ ॥

किमर्थश्चकारः ? एवकारार्थः । मयूरव्यंसकादय एव । क मा भूत् ? परमो मयूरव्यंसक इति ॥७२॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् । पादश्च समाप्तः ।

---

प्र०- मयूरव्यंस । मयूर इव व्यंसको धूर्तः, छात्र इव व्यंसकः, काम्बोज इव मुण्ड इत्युपमानसमासापवादोऽयं समासः प्रतिपदविहितोपमानसमासविषयपूर्वपदप्रकृतिस्वरबाधनार्थं इत्याहुः ॥७२॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे द्वितीयाध्यायस्य प्रथम पादे तृतीयमाह्निकम् । पादश्च समाप्तः ।

---

उ०- मयूरव्यंस । मयूर इव व्यंसक इति । केचित्तु विशेषणसमासे गुणवचनत्वाद्व्यंसकस्य पूर्वनिपाते प्राप्ते इदमित्याहुः । तन्न । 'उपमानानी'ति सूत्रस्थभाष्यकैयटरीत्या तस्य 'येन नाप्राप्ति'न्यायेन विशेषणसमासबाधकत्वात् ॥७२॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते द्वितीयाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् । पादश्च समाप्तः ।

# अथ द्वितीयः पादः

## अर्धं नपुंसकम् ॥ २ । २ । २ ॥

इह कस्मान्न भवति—ग्रामार्धः नागरार्धं इति ? अर्धशब्दस्य नपुंसकलिङ्गस्येदं ग्रहणं पुँल्लिङ्गश्चार्धशब्दः । क पुनरयं नपुंसकलिङ्गः क पुँल्लिङ्गः ? समप्रविभागे नपुंसकलिङ्गः, अवयववाची पुँल्लिङ्गः ।

इह कस्मान्न भवति—अर्धं पिप्पलीना'मिति ? न वा भवत्यर्धपिप्पल्य इति ? भवति यदा खण्डसमुच्चयः—अर्धपिप्पली चार्धपिप्पली

---

प्र०- अर्धं नपुं । नपुंसकस्याव्यवस्थितत्वात्कृते च समासे पूर्वपदार्थस्य लिङ्गविशेषानवधारणात्कृतमपि नपुंसकग्रहणमकृतसमामिति मत्वा पृच्छति-इहेति । क पुनरिति । नपुंसकत्वावधारणहेतावयं प्रश्नः । अवयववाची पुँल्लिङ्ग इति । नियमेन नपुंसकलिङ्गो न भवतीत्येवंपरमेतत् । अवयववाची त्वभिधेयवशात्सर्वलिङ्गः । तथा च प्रयोगो दृश्यते—'अपूपार्धं मया भक्षितं' 'दन्तार्धमास्यात् पतित'मिति । तदत्र नपुंसकग्रहणाद्य-

---

उ०- अर्धं नपुं । सूत्रे 'नपुंसक'मित्युक्तेरिह 'कस्मा'दितिप्रश्नोऽनुपपन्न इत्याशङ्क्याह—नपुंसकस्येति । सूत्रे नपुंसकग्रहणं किमर्धशब्दस्यार्थविशेषप्रतिपत्तये, उत समासगतरूपविशेषप्रतिपत्तये ? आद्य इत्याह—अव्यवस्थितत्वादिति । नपुंसकत्वस्यापूपार्धमित्याद्यवयवपदार्थेऽपि दर्शनादिति भावः । नान्त्य इत्याह—कृते चेति । तत्र नपुंसकत्वलक्षणविशेषानवसायेन तत्कृतरूपविशेषाभावादिति भावः । अधिकरणस्याकाशस्य निर्ज्ञातत्वात्प्रश्नानुपपत्तेराह—नपुंसकत्वेति । कस्मिन्नर्थे पुंस्त्ववाचक इति भाष्याक्षरार्थः ॥ पुँल्लिङ्ग एवेति भ्रमं वारयति—नियमेनेति । नपुंसकग्रहणं ज्ञापकमिति । निर्देशेन नपुंसकत्वमात्रे लब्धेऽपि नित्यनपुंसकत्वलाभाय तस्यावश्यकत्वम् । अन्यथा 'अपूपार्धमम्' 'दन्तार्ध'मित्यादावसमासवाचिन्यपि एकदेशिसमासः स्यादिति विभक्तमेतत् । परे तु 'समप्रविभागे नपुंसकलिङ्ग' इत्यत्र—नपुंसकलिङ्गोऽपीत्यर्थः । अत एव 'ए ओङ्' 'एच इ'गिति सूत्रयोर्भाष्ये 'एचो ह्रस्वविधानेऽर्धैकारार्धौकारौ माप्नुत' इति शङ्कायां 'नैव लोके नापि वेदेऽर्ध एकारोऽर्ध ओकारो वास्ती'त्युत्तरपदभाष्ये समविभागविवक्षेऽपि पुँल्लिङ्गः प्रयुक्तः । अवयववाची तु पुँल्लिङ्ग एव । अपूपार्धमिति—समप्रविभाग एव । अन्यथापूपार्धं इत्येव । 'परवल्लिङ्ग'मिति सूत्रे भाष्ये-

चार्धपिप्पली च=अर्धपिप्पल्य इति । यदा त्वेतद्वाक्यं भवत्यर्धं पिप्पली-नामिति तदा न भवितव्यम् । तदा कस्मान्न भवति ? एकाधिकरणा* इति वर्तते ।

न तर्हीदानीमिदं भवति 'अर्धराशि'रिति ? भवति । एकमेवेदमधिकरणं भवति योऽसौ राशिर्नाम ॥२॥

---

प्र०–स्मिन्नर्थविशेषे नियमेन नपुंसकत्वं तदर्थवृत्तिरेवार्धशब्द आश्रीयते, तत्रैवार्थे नपुंसकत्वाव्यभिचारात् । 'अर्ध'मिति निर्देशादेव नपुंसकत्वे लब्धे नपुंसकग्रहणं ज्ञापकं निर्देशेषु लिङ्गाविवक्षायाः । यदा त्वेतदिति । अर्धश्चात्र भिद्यत एव । समासे च कृते 'अर्धपिप्पली'त्येव स्यात्, पूर्वपदार्थस्य च प्राधान्यात्तस्य चैकत्वात् ।

अर्धराशिरिति । राशेरवयवव्यतिरेकेणाभावादवयवानां च बहुत्वादेकत्वाभावं मन्यते । एकमेवेति । शब्दादेकस्यैवार्थस्य तिरोहितभेदस्यावगमात् ॥२॥

---

उ०–प्येतस्पष्टमित्युत्तरसूत्रे स्फुटीकरिष्यते । अन्यतरस्यांग्रहणापकर्षेण योगविभागेन वा एक-देशिसमासविषये षष्ठीसमासः सूत्रकृतोऽपीष्ट एव । एवं चारम्भप्रत्याख्यानयोः समफलता । नपुंसकग्रहणं तु सूत्रेषु निर्देशे लिङ्गाविवक्षाया ज्ञापकमित्याहुः ।

भाष्ये—अर्धं पिप्पलीनामिति । दशानां पिप्पलीनामर्धमित्यर्थः । न च समासे एकत्वसंख्याया औत्सर्गिकत्वात्कथमत्र समासापादनम्, एकत्वस्यापि तत्राभावाच्छुद्धपिप्पली-त्वेनानेकपिप्पलीबोधसम्भव इति शङ्काशयः । इतरोऽर्धपदार्थस्य तत्र पञ्चपिप्पलीरूपत्वेन समासे बहुवचनं मत्वा पृच्छति—न वा भवतीति । अर्थान्तरे भवति न त्वेतदर्थे इत्याह परः—भवति यदेत्यादिना । अर्धश्चात्रेति । दशानां पिप्पलीनामर्धं, पञ्चेत्यर्थः, पिप्पलीनां प्रत्येकमर्धानि बहूनीति तत्रार्थः । भाष्ये—'तदा न भवितव्य'मित्यस्य—'अनेन रूपेण न भवितव्य'मित्यर्थस्तमभिप्रेत्याह—अर्धपिप्पलीत्येव स्यादिति । यद्यप्यर्धपदार्थो बहवस्तथा-प्यर्धशब्देनैकत्वावच्छिन्नसमुदायस्यैव भानादिति भावः ॥ तदा कस्मान्नेति । समासः कुतो नेत्यर्थः ।

तिरोहितभेदस्येति । तिरोहितावयवभेदस्येत्यर्थः । समूहः समूहिभ्यो भिन्नोऽपीति भावः ॥२॥

---

* पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २. २. १

## तत्स्थैश्च गुणैः ॥ २ ॥

तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम् । ब्राह्मणवर्णः चन्दनगन्धः पटहशब्दः नदीघोषः ।

## न तु तद्विशेषणैः ॥ ३ ॥

न तु तद्विशेषणैरिति वक्तव्यम् । इह मा भूत्—घृतस्य तीव्रो [1]गन्धः ।

प्र०— प्रतिप्रसवप्रसङ्गेनान्यदपि कथ्यते—तत्स्थैरिति । तच्छब्देन सन्निधानाद् गुण एव परामृश्यते । तेनायमर्थः—स्वात्मनि ये गुणा अवस्थितास्तैः सह समासः । न च स्वात्मन्यवस्थानं गुणानां संभवति, भेदनिबन्धनत्वान्मुख्यस्याधाराधेयभावस्य । सर्वस्य च गुणस्य द्रव्याश्रयत्वात् । तस्मादभिधानव्यापारापेक्षया तत्स्थत्वमुच्यते । इह केचिद् गुणाः शब्देन द्रव्याश्लिष्टा एव प्रत्याय्यन्ते, न तु द्रव्यस्योपरञ्जकत्वेन । यथा 'चन्दनस्य गन्ध' इति सर्वदा वैयधिकरण्यमेव गुणगुणिनोः, न कदाचिच्चन्दनं गन्ध इति सामानाधिकरण्यं भवति । शुक्लादयस्तु गुणाः कदाचिच्छ्लिष्टरूपाः शब्दैरुच्यन्ते पटस्य शुक्ल इति । कदाचिद् द्रव्येणैकत्वमापन्नाः 'शुक्लः पट' इति । तस्माद् द्विविधगुणसद्भावात्तत्स्थैरिति विशेषणं रूपादिगुणपरिग्रहार्थमुपात्तमिति ब्राह्मणवर्णादय उदाहरणम् । अथ 'बलाकायाः शौक्ल्य'मिति समासः कस्मान्न भवति ? तत्स्थं हि शौक्ल्यम् । सर्वदा वैयधिकरण्येन संबन्धात् । नैष दोषः । शौक्ल्यशब्देन शुक्लो गुणोऽभिधीयते शुक्लशब्दस्य द्रव्ये वर्तमानस्य तस्मिन्नेव प्रवृत्तिनिमित्ते भावप्रत्ययविधानात् । न चासौ तत्स्थः । अभेदाध्यवसायेन द्रव्यं प्रत्यनुरञ्जकत्वदर्शनाच्छुक्लः पट इति । अर्थस्य च तत्स्थत्वमाश्रीयत इति शब्दभेदेऽप्यर्थस्याभेदान्नास्ति शुक्लस्य गुणस्य तत्स्थत्वम् । 'रूपवान् पट' इत्यादौ तु नास्ति गुणगुणिनोरभेदाध्यवसायः । भेदाश्रयेणैव मत्वर्थीयप्रयोगादिति रूपस्य तत्स्थत्वमव्यावृत्तमिति 'पटरूप'मिति समासो भवत्येव ।

न तु तद्विशेषणैरिति । तच्छब्देन गुणाः परामृश्यन्ते । तेषां गुणानां यानि विशेषणानि तद्वचनैः सह समासो न भवतीत्यर्थः । घृतस्य तीव्र इति । तीव्रो गन्धस्य

उ०— तच्छब्देन द्रव्यपरामर्शे 'काकस्य कार्ष्ण्य'मित्यादावतिप्रसङ्गमाशङ्क्याह—तच्छब्देनेति । स्वात्मनीति । स्वात्मन्येवाभेदेनावस्थिता न तु द्रव्ये इत्यर्थः । नन्वभेदस्याधाराधेयभावविघातकत्वाभावात्तत्स्थैरित्यनुपपन्नमिति शङ्कते—न चेति । यद्यपि व्यपदेशिवद्भावेन तत्स्थैरिति वक्तुं शक्यं, तथापि स न मुख्य इत्याह—मुख्यस्येति । उत्तरयति- तस्मादभिधानेति । गुणमात्रवाचकशब्दमात्रप्रतिपाद्यगुणवाचकैः शब्दैरित्यर्थः । अत एवार्थस्य तत्स्थत्वमित्यग्रे वक्ष्यति । तदेवोपपादयति—इह केचिदिति द्रव्याश्लिष्टाः—भेदेनैव द्रव्यान्वयिनः । तथा हि गुणगतजातिः प्रवृत्तिनिमित्तम् । उपरञ्जकत्वं—स्वाभेदेन द्रव्यप्रत्यायकत्वम् । द्रव्येणैकत्वमिति । जातिविशिष्टगुणः प्रवृत्तिनिमित्तम्, अत एव ततो भावप्रत्ययेन गुणबोधः । अर्थस्य तत्स्थत्वमिति । एवं च गुणिपरत्वव्यावर्तकशब्दाभावपरत्वं तात्स्थ्यमिति फलितम् ।

१-'गन्ध' इति क्वचिन्न ।

चन्दनस्य मृदुरिति ।

किमर्थमिदमुच्यते ? 'गुणेन ने'ति प्रतिषेधं वक्ष्यति* तस्यायं पुरस्ताद-पकर्षः । किं पुनः कारणं गुणेन नेत्युच्यते, न पुनर्गुणवचनेन नेत्युच्येत ? नैवं शक्यम् । इह हि न स्यात्—काकस्य कार्ष्ण्यम्, कण्टकस्य तैक्ष्ण्यम्, 'बलाकायाः शौक्ल्य'मिति । एतदेव [[1]खल्वपि] तस्मिन्योग उदाहरणम् । [3]यद्धीदं ब्राह्मणस्य शुक्लाः वृषलस्य कृष्णा इति, असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । द्रव्यमत्रापेक्ष्यते दन्ताः । तस्माद् 'गुणेन ने'ति वक्तव्यम् । 'गुणेन ने'त्युच्यमाने 'तत्स्थैश्च गुणै'रिति वक्तव्यम् । 'तत्स्थैश्च गुणै'रित्युच्यमाने 'न तु तद्विशेषणै'रिति वक्तव्यम् ॥८॥

प्र०-विशेषणम् । 'चन्दनस्य मृदु'रिति स्पर्शस्य मृदुत्वं विशेषणम् । ननु घृतस्य गन्धेन सम्बन्धो न तु तद्गतेन तीव्रेण विशेषणेनेति सामर्थ्याभावात्समासस्य प्राप्तिरेव नास्ति, तत्किंप्रतिषेधेन ? एवं तर्हि यदा प्रकरणादिवशात्तीव्रशब्द एव विशिष्टगन्धवृत्तिस्तदा तदर्थोपजनित एव व्यतिरेके घृतस्येति षष्ठी तदा 'षष्ठी'ति समासप्रसङ्गः । यश्च गन्ध-विशेषवचनस्तीव्रशब्दस्तस्य द्रव्यवाचिना समानाधिकरण्याभावाद् गन्धशब्दस्येव तत्स्थ-गुणाभिधायित्वात्समासप्रसङ्गे प्रतिषेध उच्यते । ननु च 'तीव्रं घृतं' 'मृदु चन्दन'मिति सामानाधिकरण्यदर्शनात्तत्स्थत्वाभावात्समासाप्रसङ्गात्प्रतिषेधोऽनर्थकः । एवं तर्हि सौत्रस्य प्रतिषेधस्य विषयकथनमिदं 'न तु तद्विशेषणै'रिति । तत्स्थत्वाभावात्तैः समासः प्रतिषिध्यत एवेत्यर्थः ।

न पुनरिति । तत्र गुणोपसर्जनद्रव्यवाचिना समासो निषिध्यते इति केवलगुण-वाचिना रूपादिशब्देन समासो भविष्यतीत्यर्थः । एतदेवेति । केवलगुणवाच्येवेत्यर्थः । द्रव्यमत्रेति । ततश्च दन्तापेक्षया ब्राह्मणस्येति षष्ठीति शुक्लार्थेन संबन्धाभावात्समासस्य प्रसङ्गाभावात्सार्थः प्रतिषेधेन ॥८॥

उ०- एवं तर्हीति । 'तद्विशेषणै'रित्यस्य तद्विशेषप्रतिपादकैरित्यर्थ इति भावः । तीव्रादिशब्दैः समासप्रसङ्गमुपपादयति—यश्च गन्धेति । एवं तर्हीति । 'तद्विशेषणै'रित्यस्य तद्विशेषप्रति-पादकैरित्यर्थात्तीव्रादयः शुक्लादयश्च निषेधसूत्रस्य विषया इत्यनेन सूच्यते इति भावः । भाष्ये-किमर्थमिदमिति । इदमा व्यवहितमपि 'तत्स्थै'रिति परामृश्यते, तदाह—गुणेनेति । केवल-गुणेति । 'घृतस्य तीव्र' इत्यादावपि केवलगुणवाच्येवेति भावः । भाष्ये-एतदेवेति । 'काकस्य कार्ष्ण्य'मित्यादोव । यद्धीदमिति । यच्चिदमित्यर्थः । सापेक्षमसमर्थमिति । इतरसापेक्षत्वेन 'शुक्ला' इत्यनेनानन्वयादसामर्थ्यमित्याशयः । तद् व्यनयन्नाह-शुक्लार्थेन संबन्धाभावादिति । 'न तु तद्विशेषणै'रिति वक्तव्य'मिति भाष्ये 'प्रतिषेधविषयप्रदर्शनार्थ'मित्यादिः ॥८॥

* पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २. २. ११.

१-'उच्यते' पा० । २-क्वचिन्न । ३-'यद्धै' पा० ।

# न निर्धारणे ॥ २ । २ । १० ॥

**प्रतिपदविधाना च ॥ १ ॥**

प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम् । इह मा भूत्—सर्पिषो ज्ञानम्, मधुनो ज्ञानमिति† ॥१०॥

# पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥२।२।११॥

गुणे किमुदाहरणम् ? ब्राह्मणस्य शुक्लाः, वृषलस्य कृष्णा इति । नैतदस्ति प्रयोजनम् । असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । द्रव्यमत्रापेक्ष्यते दन्ताः ॥ इदं तर्हि—काकस्य कार्ष्ण्यम्, कण्टकस्य तैक्ष्ण्यम्, बलाकायाः शौक्ल्यमिति ॥ इदं चाप्युदाहरणम्—ब्राह्मणस्य शुक्लाः, वृषलस्य कृष्णा इति । ननु चोक्तमसामर्थ्यादत्र न भविष्यति,

प्र०- पूरणगुण । 'अर्थ'शब्दस्य प्रत्येकं सम्बन्धाद् गुणेति स्वरूपग्रहणं न भवति, नाप्यदेकाम् । किं तर्हि ? 'सत्त्वे निविशतेऽपैती'त्येतल्लक्षणलक्षितो गुणो गृह्यते । 'संसर्गिभेदक'मित्यादिलक्षणयुक्तस्तु न गृह्यते, सामान्यादेरपि ग्रहणप्रसङ्गात् । नापि शुक्लादेरेव ग्रहणं, 'कण्टकस्य तैक्ष्ण्य'मित्यस्योदाहृतत्वात् । 'गोविंशति'रित्यादौ संख्यया समासो न निषिध्यते, 'शतसहस्रान्ताच्च निष्कात्' 'क्रोशशतयोजनशतयोरुपसंख्यानम्' 'स्वारीशतमपि ददाती'ति मुनित्रयवचनाज्ज्ञापकात्, 'उत्तरपदार्थप्राधान्य'मित्यादेश्च मुनिप्रयोगादस्य प्रतिषेधस्यानित्यत्वाद्यत्नगौरवादिशब्दसिद्धिः ।

उ०- पूरणगुण । सत्त्वे निविशत इत्यादि । वस्तुत इदं चिन्त्यम् । तस्याकडारसूत्रोक्तगुणवचनपदार्थसमत्वात् । तत्र 'वाचकः सर्वलिङ्गाना'मित्युक्तत्वात्काकस्य कार्ष्ण्यमित्यादेरनुदाहरणत्वप्रसङ्गात् । तस्मादत्र व्याकरणान्तरकेवलगुणवाची सन् यो गुणिबोधकस्तत्प्रकृतिकभावप्रत्ययान्तप्रतिपाद्यानां गुणपदेन ग्रहणम्, अर्थपदान्वयाच्च तद्बोधकशब्दमात्रग्रहणम् । एवं च भाष्यगौरवादौ प्रसक्तिरेव न ।

अवसितश्रुतिरिति । सामान्यशब्दस्यापि प्रकरणाद्विशेषमात्रोपस्थापकत्वमित्यर्थः । अनेनैतत्सूचयति—वाक्यैकदेशान्वयेन 'शुक्ला' इत्यस्य दन्ताः शुक्ला इत्यर्थः । 'षष्ठी'त्यस्य च षष्ठ्यन्तं समर्थप्रकृतिकसुबन्तेन समस्यते इत्यर्थः । तादृशं च न 'शुक्ला' इति पदमित्यसामर्थ्यं तदवस्थमेव । एतदभिप्रायेणैव पूर्वसूत्रे 'एतदेवोदाहरण'मित्युक्तम् । अयमर्थं भाष्यं त्वेकदेशयुक्तिः, अनेन 'समासकृद्ग्रहणाकारणाबुधानां यत्नः क्रियत' इति 'कर्मणि चे'ति सूत्रे वदता कैयटेन ध्वनितमेतत् । अन्यथा 'ब्राह्मणस्य ग्रामं गत' इत्यत्र 'ग्राम'मित्यस्य प्रकरणादिना ज्ञाने 'गत' इत्यस्यैव वाक्यैकदेशान्वयेन तादर्थ्ये समासोऽसमासापत्तिरिति स्पष्टं 'कर्मणि चे'ति सूत्रे भाष्ये ।

† शेऽविवर्यस्य करणे २. ३. ५१.

कथमसामर्थ्यम् ? सापेक्षमसमर्थं भवतीति द्रव्यमत्रापेक्ष्यते दन्ता इति । नैष दोषः । भवति वै कस्यचिदर्थात्प्रकरणाद्वापेक्ष्यं निर्ज्ञातं तदा वृत्तिः प्राप्नोति ।

सति किमुदाहरणम् ? ब्राह्मणस्य पक्ष्यन्, ब्राह्मणस्य पक्ष्यमाणः । नैतदस्ति । प्रतिषिध्यतेऽत्र षष्ठी 'लप्रयोगे ने'ति* । या च श्रूयते, एषा ब्राह्मणमर्थमपेक्ष्य भवति । तत्रासामर्थ्यान्न भविष्यति । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । द्रव्यमत्रापेक्ष्यत ओदनः ।

इदं तर्हि—चौरस्य द्विषन्, वृषलस्य द्विषन् । ननु चात्रापि प्रतिषिध्यते । वक्ष्यत्येतत्—'द्विषः शतुर्वावचन'मिति† ।

अव्यये किमुदाहरणम् ? ब्राह्मणस्योच्चैः । वृषलस्य नीचैरिति । नैतदस्ति । असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । द्रव्यमत्रापेक्ष्यत आसनम् ॥ इदं तर्हि—'ब्राह्मणस्य कृत्वा', 'वृष-

प्र०— भवतीति । यदा प्रकरणादिवशाद्दन्तादार्थ एवावसितवृत्तिः शुक्लादिशब्दस्तदा तदर्थोपजनित एव ब्राह्मणादौ व्यतिरेक इति सामर्थ्यसद्भावात्समासप्रसङ्ग इत्यर्थः । ननु गुणस्य गुण्यपेक्षत्वाद् गुणिन एव समासनिषेधेन भाव्यं, न च ब्राह्मणः शुक्लगुणाधारः । नैष दोषः । 'गुण'शब्देन केवलगुणवाचिनो, गुणोपसर्जनद्रव्यवाचिनश्च व्याप्तिन्यायाश्रयेण गृह्यन्त इति गुणिनो गुणाधारसम्बन्धिनश्चोपपन्नः समासप्रतिषेधः ।

प्रतिषिध्यतेऽत्रेति । आवर्जनवाचिपक्त्याश्रयेण ब्राह्मणं पचेः कर्म मन्यते । यथास्य लोकपक्तिर्लोकावर्जनमित्यर्थः । ततश्च 'ब्राह्मणस्ये'ति षष्ठी पाकापेक्षया कर्मणि न भवतीत्यर्थः ।

चौरस्य द्विषन्निति । 'तौ स'दित्यत्र 'तौ'ग्रहणस्योपाध्यसंसर्गार्थत्वाद्'द्विषोऽमित्र' इत्येतत्सूत्रविहितोऽपि शता सत्संज्ञः । ननु चात्रापीति । 'तृ'न्निति प्रत्याहारेण शतुरपि ग्रहणात् ।

उ०— ननु 'ब्राह्मणस्य पक्ष्य'न्नित्यत्र ब्राह्मणस्यौदनं पक्ष्यन्नित्यर्थावगमाद् ब्राह्मणस्य पाकापेक्षया कर्मत्वकर्तृत्वाभावात्कर्तृत्वस्योक्तत्वाच्च षष्ठ्या अप्राप्तौ प्रतिषेधोक्तिरसङ्गतेत्यत आह—आवर्जनवाचीति । आवर्जनमङ्गीकारस्त्यागो वेत्याहुः । कर्मणि न भवतीति । शेषषष्ठ्यन्तस्य नामार्थान्वये संभवति क्रियान्वयो नेति भावः । एतेन कर्मणः शेषत्वविवक्षायां षष्ठी स्यादित्यपास्तम् । 'न लोके'त्येतन्निषेधविषयेऽनभिधानाच्छेषत्वविवक्षैव न, भाष्यप्रामाण्यादित्यन्ये ।

ननु 'द्विषोऽमित्रे' इति विहितस्य न सत्संज्ञकत्वं, 'लट' इति सूत्रविहितयोरेव तत्संज्ञाविधानादित्याशङ्कयाह—तौ सदिति । अस्य शतुर्लादेशत्वाभावादाह—तृन्निति । अस्योदाहरणत्वं स्थापयति भाष्यं—वक्ष्यत्येतदिति ।

* न लोकाव्ययनिष्ठाखलर्थतृनाम् २. ३. ६९. † २. ३. ६९ वा० १.

लस्य कृत्वे'ति । एतदपि नास्ति । प्रतिषिध्यते तत्र षष्ठी 'अव्ययप्रयोगे ने'ति* । या च श्रूयते, एषा बाह्यार्थमपेक्ष्य भवति । तत्रासामर्थ्यान्न भविष्यति । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । द्रव्यमत्रापेक्ष्यते कटः ।

इदं तर्हि—'पुरा सूर्यस्योदेतोराधेयः†' । 'पुरा वत्सानामपाकर्तोः' । ननु चात्रापि प्रतिषिध्यते'ऽव्यय'मिति कृत्वा । वक्ष्यत्येतत्—'अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध' इति‡ ।

समानाधिकरणे किमुदाहरणम् ? राज्ञः पाटलिपुत्रकस्य । शुकस्य माराविकस्य । पाणिनेः सूत्रकारस्य । नैतदस्ति । असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् ? 'समानाधिकरणमसमर्थवद्भवती'ति ।

प्र०— सूर्यस्योदेतोरिति । सूर्योदयात्पूर्वमित्यर्थः । 'वृक्षस्योपरी'त्यादीन्यप्यव्यय उदाहरणानि ।

राज्ञः पाटलिपुत्रकस्येति । विशेषणसमासोऽत्र भवत्येव, ततो विशेषणस्यैव पूर्वनिपातः सिद्धो भवति । षष्ठीसमासे तु पूर्वनिपातानियमः स्यादिति स प्रतिषिध्यते ।

उ०— इत्यादीन्यपीति । साहचर्यात्कृदव्ययमेव गृह्यते । अन्याव्ययैः सति सामर्थ्ये समास इष्ट एवेति भाष्याशयमाहुः ।

पूर्वनिपातानियमः स्यादिति । उपसर्जनत्वस्यान्वर्थतामाश्रित्य षष्ठीसमासेऽपि तन्नियमसंभवादुपसर्जनसंज्ञासूत्रे स्वयमपि तथैवोक्तेश्च चिन्त्यमेतत् । तस्माद्विशेषणसमासोऽप्यत्र बाहुलकाद्भवत्येव तदर्थमिति कश्चित्, तन्न, अर्धपिप्पलीत्याद्यनुरोधेन तस्या अन्वर्थत्वाश्रयणमशक्यमित्याशयात् । विशेषणसमासे वचनसामर्थ्यादिति । 'पूर्वापरप्रथमचरमे'ति सूत्रे 'समाने'त्यादिवचनसामर्थ्यादित्यर्थः । एवं च षष्ठीसमासे तदप्रवृत्तौ मानाभावः । न चैवं बहुव्रीहिरुच्छिद्येत, शेषग्रहणसामर्थ्येन तत्रान्यस्याप्रवृत्तेः । न च 'सुन्दरपाचक' इत्यादौ तस्य सावकाशता, एवं तर्हि 'समाने'त्यादिसामान्यापेक्षं, यत्र समानाधिकरणानां विशेषविहितः समासस्तत्रैतदप्रवृत्तिः । समानादेश्च कृदन्तेन न समासोऽनभिधानादित्याशयः । केचित्तु 'प्रथमानिर्दिष्ट'मिति सूत्रभाष्योक्तरीत्या 'षष्ठी'तिसूत्रे येन सुबन्तेन समासस्तदर्थनिरूपितसंबन्धार्थकषष्ठ्येव गृह्यते । तादृशमेव च सामर्थ्यं षष्ठीसमासप्रवृत्तौ निमित्तम् । न चेदं

* न लोकाव्ययनिष्ठाखलर्थतृनाम् २ ३ ६९ † काठकसंहिता ८ ३ ‡ २.२ ६९ वा० ४.

१–'माराविदस्य' इति कीलहार्नपाठः । हरदत्तस्त्वाह—'मारावीत्याहेति माराविकः, 'तदाहेति माशब्दादिभ्य उपसङ्ख्यानम्' (४. ४. १ वा० १) इति ठक्, शब्देन क्रियाया. प्रतिषेधको माराविकः,' संज्ञैषा शुकविशेषस्य । क्वचित्तु 'माराविदस्य' इति पाठः, तत्र माराविशब्दं ददातीति माराविदः, स एवार्थः ।' (पदमंजरी २. २. ११)

इदं तर्हि—सर्पिषः पीयमानस्य । यजुषः क्रियमाणस्येति । ननु चात्राप्यसामर्थ्यादेव न भविष्यति । कथमसामर्थ्यम् ? 'समानाधिकरणमसमर्थवद्भवती'ति । 'अघात्वभिहित'मित्येवं तत् ॥११॥

## कर्मणि च ॥ २ । २ । १४ ॥

कथमिदं विज्ञायते—'कर्मणि या षष्ठी सा न समस्यत' इति । आहोस्वित् 'कर्मणि यः क्त' इति । कुतः सन्देहः ? उभयं प्रकृतं† तत्रान्यतरच्छक्यं विशेषयितुम् । कश्चात्र विशेषः ?

**कर्मणीति षष्ठीनिर्देशश्चेदकर्तरि कृता समासवचनम् ॥ १ ॥**

'कर्मणी'ति षष्ठीनिर्देशश्चेदकर्तरि कृता समासो वक्तव्यः । इध्मप्रव्रश्चनः पलाशशातनः* ।

---

प्र०—विशेषणसमासे च वचनसामर्थ्यात्समानाधिकरणमसमर्थवदिति नाश्रीयते । अघात्वभिहितमिति । एवं च 'कटस्य क्रियमाणस्ये'त्याद्यप्युदाहरणम् ॥११॥

कर्मणि च । क्तषष्ठ्योः प्रकृतत्वादन्यतरविशेषणे दोषदर्शनात्पृच्छति—कथमिति । अकर्तरि कृतेति । यः कर्तरि विधीयते यथा 'कुम्भकार' इति तत्र परत्वादुपपदसमासेन भाव्यम् । क्वचित्तु 'तृजकाभ्यां कर्तरि' 'कर्तरि चे'ति प्रतिषेधेनेत्यभिप्रायेणाकर्तरीत्युक्तम् । इध्मप्रव्रश्चन इति । करणे ल्युट् कर्मणि षष्ठी ।

---

उ०—सामर्थ्यं प्रकृतेऽस्मि, इत्याशयेनाह—असामर्थ्यादत्र न भविष्यति । एवं च प्रत्याख्यातं समानाधिकरणग्रहणम् । अग्रिमभाष्यं त्वेतदाशयानभिज्ञपूर्वपक्षिसिद्धान्त्येकदेशिनोक्तिपरमित्याहुः ॥११॥

कर्मणि च । दोषदर्शनादिति । पक्षद्वयेऽपि दोषदर्शनादित्यर्थः । क्वचित्तु तृजकाभ्यामिति । 'तृजकाभ्या'मित्यस्य कर्त्रर्थतृजकाभ्यामित्यर्थे इदम् । 'कर्तरि चे'त्यस्यैवायमर्थ' इति ध्वनितमते आह—कर्तरि चेति । अन्येस्त्वनुपपदकृदन्तैः शेषषष्ठ्या समासो भवत्येव गङ्गाधरभूधरौ । स्वरेऽपि न विशेषः । उभयथाप्यन्तोदात्तत्वात् । न च गायकनि 'गायक'शब्देन साम्नां गायक इत्यर्थे समासानापत्तिः, शेषषष्ठ्या समासेऽपि स्वरे विशेषादिति वाच्यम् । 'अकर्तरी'त्यस्य 'तृजकाभ्यां कर्तरी'ति सूत्रनिर्दिष्टभिन्नेनेत्यर्थात्, कर्मणीत्यस्य षष्ठीविशेषणत्वे क्तेनेत्यस्यात्रानुवृत्तिरेवेति बोध्यम् ।

---

† षष्ठी; क्तेन च पूजायाम् २. २. ८; १२.

* करणाधिकरणयोश्च ३. ३. ११७; कर्तृकर्मणोः कृति २. ३. ६५

## तृजकाभ्यां चानर्थक प्रतिषेधः ॥ २ ॥

तृजकाभ्यां चानर्थकः कर्तरि प्रतिषेधो भवति । अपां स्रष्टा† । [ पुरां भेत्ता । यवानां लावकः । ] 'कर्मणी'त्येव सिद्धम् ।

अस्तु तर्हि कर्मणि यः क्त इति । किमुदाहरणम् ? ब्राह्मणस्य भुक्तम् । वृषलस्य पीतमिति ।

## क्तनिर्देशेऽसमर्थत्वादप्रतिषेधः ॥ ३ ॥

क्तनिर्देशेऽसमर्थत्वादप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । समासः कस्मान्न भवति ? असामर्थ्यात् । कथमसामर्थ्यम् ? 'सापेक्षमसमर्थं भवती'ति । द्रव्यमत्रापेक्ष्यत ओदनः ।

## प्रतिषेध्यमिति चेत्कर्तर्यपि प्रतिषेधः ॥ ४ ॥

अथैवं सति प्रतिषेधः कर्तव्य इति मन्यसे, कर्तर्यपि प्रतिषेधो वक्तव्यः स्यात्—ब्राह्मणस्य गतः, ब्राह्मणस्य यात इति ।

## पूजायां च प्रतिषेधानर्थक्यम् ॥ ५ ॥

पूजायां च प्रतिषेधोऽनर्थकः—राज्ञां पूजितः‡ । [ राजामर्चित इति । ] कर्मणीत्येव सिद्धम् ।

---

प्र०- तृजकाभ्यां चेति । कर्तरि यौ तृजकौ तत्र सामर्थ्यात्कर्मण्येव षष्ठीत्यनेनैव प्रतिषेधः सिद्धः । द्रव्यमत्रेति । 'ब्राह्मणस्ये'ति षष्ठी भुक्तापेक्षया न भवति 'न लोकाव्ययनिष्ठे'ति प्रतिषेधात् । ततश्च ब्राह्मणस्य य ओदनादिः सोऽन्येन भुक्त इत्यर्थः प्रतीयत इति ब्राह्मणस्य भुक्तेन संबन्धाभावः ।

प्रतिषेध्यमिति चेदिति । यदा पारम्पर्येण संबन्धसम्भवात्, 'भवति वै कस्यचि'दिति न्यायाद्वा समासशङ्कानिवारणायाबुधानां यत्नः क्रियते, तदातिप्रसङ्गो यत्नस्ये-

---

उ०- भाष्ये—तृजकाभ्यां चेति । अस्यैव कर्त्रर्थतृजकाभ्यामित्यर्थ इति भावः ॥ पारम्पर्येणेति । भुजेरोदनेनौदनस्य ब्राह्मणेनेतीत्यर्थः । भवति वै इति । 'ब्राह्मणस्य शुक्ला' इत्यत्रोक्तो न्यायः । समासशङ्कानिवारणायेति । अनेन तन्न्यायाश्रयणेऽपि 'पूरणे'तिसूत्रोक्तमहीत्या वस्तुतः सामर्थ्यं नास्त्येवेति सूचयति । तदाह—अबुधानामिति । अतिप्रसङ्ग इति । अन्यत्राप्येवं न्यायैः समासापादनसंभवात्तत्रापि प्रतिषेधो वक्तव्य इत्यर्थः । भाष्ये—'ब्राह्मणस्य

---

१-'चानर्थकः प्रतिषेधः' पा० । † कर्तरि च २ २ १६ २-क्वाचित्कः पाठः ।
३-'दृश्यते' पा० । ‡ क्तेन च पूजायाम् २. २. १२.

**तस्मादुभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधः ॥ ६ ॥**

तस्माद् 'उभयप्राप्तौ कर्मणि' [ २. ३. ६६ ] इत्येवं या षष्ठी तस्याः प्रतिषेधो वक्तव्यः । स तर्हि वक्तव्यः ? न वक्तव्यः । इत्यर्थेऽयं चः पठितः । 'कर्मणि च' । कर्मणीत्येवं या षष्ठीति ॥१४॥

## नित्यं क्रीडाजीविकयोः ॥ २ । २ । १७ ॥

किमिह नित्यग्रहणेनाभिसंबध्यते विधिराहोस्वित् प्रतिषेधः ? 'विधि'-रित्याह । कुत एतत् ? विधिर्हि विभाषा, नित्यः प्रतिषेधः ॥१७॥

## कुगतिप्रादयः ॥ २ । २ । १८ ॥

**प्रादिप्रसङ्गे कर्मप्रवचनीयप्रतिषेधः ॥ १ ॥**

प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः । वृक्षं प्रति विद्योतते विद्युत् । साधुर्देवदत्तो मातरं प्रति* ।

प्र०–त्यर्थः । इत्यर्थ इति । अनेकार्थत्वान्निपातानाम् । तेन 'कर्मणी'त्युच्चार्य या षष्ठी विधीयते सा न समस्यत इत्यर्थः । ततश्चाश्चर्यो गवां दोहोऽगोपालकेनेत्याद्युदाहरणम् ॥१४॥

नित्यं क्रीडा । प्रतिषेधे सिद्धेऽस्यारम्भाद्विधिरत्यत्र संभाव्यतेऽनन्तरत्वाच्च प्रतिषेधोऽपीति प्रश्नः । किमिहेति । विधिर्हीति । महाविभाषाधिकारात् । नित्य इति । विधिविकल्पेनैव पाक्षिकस्य प्रतिषेधस्य सिद्धत्वात् प्रतिषेधारम्भसामर्थ्यादेव नित्यः प्रतिषेधः सिद्ध इति किं नित्यग्रहणेनेत्यर्थः ॥१७॥

कुगति । प्रादिग्रहणस्येहागत्यर्थत्वात्कर्मप्रवचनीयानां प्रतिषेध उच्यते । प्रत्यादिविषय एवायं निषेधः, तथा च स्वत्याः समासो भवत्येव । वृक्षं प्रतीति । वृक्षविद्युद्-

उ०–गत' इत्यादेः 'ब्राह्मणस्य ग्रामं गत' इत्यादिक्रमेणार्थः । इत्याद्युदाहरणमिति । 'ब्राह्मणस्य भुक्तः' 'ब्राह्मणस्य गत' इति पूर्वोक्ते स्वसामर्थ्यादेव समासो न भवतीति हृदयम् ॥१४॥

नित्यं क्रीडा । प्रतिषेधे सिद्ध इति । जीविकाविषये 'तृजकाभ्यां'मित्यनेन 'कर्तरि चे'त्यनेन वेति भावः । नित्यप्रतिषेध इति । प्रतिषेधवाक्यैस्तद्विषये व्यपेक्षाया एव बोधनादिति भावः । विधित्वे तु जीविकायां 'कर्तरि चे'ति निषेधे प्राप्तेऽस्यारम्भात्तद्विषये नित्यमित्येतत्सार्थकम्, क्रीडायां तु विकल्पे प्राप्तेऽस्यारम्भात्सामर्थ्यादेव नित्यत्वं सिद्धमिति बोध्यम् ॥१७॥

कुगति । ननु गतिग्रहणेन प्रादीनां विशेषणात्कर्मप्रवचनीयेषु प्राप्त्यभावादनर्थकः प्रतिषेधोऽत आह—प्रादिग्रहणस्येति । प्रत्यादिविषय एवेति । व्याख्यानादिति भावः ।

* लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः [ १. ४. ९०.

## व्यवेतप्रतिषेधश्च ॥ २ ॥

व्यवेतानां च प्रतिषेधो वक्तव्यः । 'आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः† ।

## सिद्धं तु क्वाङ्स्वतिदुर्गतिवचनात् ॥ ३ ॥

सिद्धमेतत् । कथम् ? 'क्वाङ्स्वतिदुर्गतयः समस्यन्त' इति वक्तव्यम् । कु-कुब्राह्मणः कुवृषलः । आङ्-आकडारः आपिङ्गलः । सु-सुब्राह्मणः सुवृषलः । अति-अतिब्राह्मणः अतिवृषलः । दुर्-दुर्ब्राह्मणः दुर्वृषलः[1] । गति-प्रकारकः प्रणायकः प्रसेचकः[2] ऊरीकृत्य[3] ऊरीकृतम् ।

प्र०-द्योतनयोः प्राप्तिक्रियाजनितस्य लक्ष्यलक्षणसंबन्धस्यावच्छेदकः प्रतिरिति सामर्थ्यसद्भावात्समासप्रसङ्गः । संबन्धाभावे तु द्वितीयापि न स्यात् ।

व्यवेतानामिति । व्यवहितानां पदान्तरेण प्रादीनां समासो न भवतीत्यर्थः । आमन्द्रैरिति । 'याही'त्यस्यां क्रियायां द्वयोरुपनिपातात्तद्द्वारको दध्योदनादाविव परस्परसंबन्धोऽस्तीति समासप्रसङ्गः । तथा चैकस्वर्यं स्यादिति तत्प्रतिषेध उच्यते ।

एवं पाणिनीये लक्षणेऽतिव्याप्तिमुद्भाव्य कात्यायन आत्मीयं लक्षणं करोति—सिद्धं त्विति । तेन प्रत्यादीनां न भवति । 'आ मन्द्रै'रित्यत्र त्वाङ्ग्रहणेन प्राप्नोतीति सामर्थ्यमेव नास्तीति वक्तव्यम् ।

उ०-सामर्थ्यसद्भावादिति । सूत्रगतलक्षणस्य द्योतकत्वादिति भावः । द्वितीयापि न स्यादिति । 'कर्मप्रवचनीययुक्त' इति युक्तग्रहणादिति भावः ।

व्यवहितानामिति । स्वान्वययोग्यार्थवाचकपदापेक्षया पदान्तरेण व्यवहितानामित्यर्थः । समास इति । अव्यवहितपदैरित्यर्थः । सामर्थ्याभावमाशङ्कयाह—याहीति । ऐकस्वर्यमिति । अव्ययपूर्वपदप्रकृतिस्वरे सति मन्द्रस्य पृथगुदात्तत्वं न स्यादित्यर्थः । यद्यपि वेदे आपाद्यं रूपं नास्ति, तथापि एवंजातीयके लौकिकप्रयोगे दोष इत्यर्थः । वेदेऽपि तथा-साधुत्वज्ञाननिवृत्तिः फलमित्यन्ये ।

सामर्थ्यमेव नास्तीति । एकक्रियान्वयित्वरूपसामर्थ्यग्रहणे 'कृतः सर्वो मृत्तिकये'त्यादौ समासापत्तिरिति भावः । दध्योदनादौ तु क्रियान्तर्भावेण सामर्थ्यम् । एवं च वचनद्वयमपि प्रत्याख्यातमिति बोध्यम् ।

† ऋ० सं० ३. ४५. १.   १–क्वचिन्न ।   २–'प्रसेचकः' पा० ।   ३–'उररीकृत्य' पा० ।

## प्रादयः क्तार्थे ॥ ४ ॥

प्रादयः क्तार्थे समस्यन्त इति वक्तव्यम् । प्रगत आचार्यः प्राचार्यः । प्रान्तेवासी । प्रपितामहः ।

एतदेव च सौनागैर्विस्तरतकेण पठितम्—

**'स्वती पूजायाम्'** ॥ स्वती पूजायामिति वक्तव्यम् । सुराजा अतिराजा ॥ **'दुर्निन्दायाम्'** ॥ दुर्निन्दायामिति वक्तव्यम् । दुष्कुलम् दुर्गवः ॥ **'आङीषदर्थे'** ॥ आङीषदर्थ इति वक्तव्यम् । आकडारः आपिङ्गलः ॥ **'कुः पापार्थे'** ॥ कुः पापार्थ इति वक्तव्यम् । कुब्राह्मणः कुवृषलः ॥ **'प्रादयो**

प्र०— प्रादयः क्तार्थे इति । अगत्यर्थमिदम् । वृत्तिविषये क्तार्थवृत्तयः प्रादयः । एतदेवेति । कात्यायनाभिप्रायमेव प्रदर्शयितुं सौनागैरतिविस्तरेण पठितमित्यर्थः ।

सुराजेति । न पूजनादिति समासान्तप्रतिषेधः । उपाधीनां प्रयोगविषयोपलक्षणार्थत्वादन्यत्रापि समासो भवति । तेनातिक्रमणेऽप्यर्थतः समस्यते 'अतिसिक्तमेव भवती'ति । 'सुकर' इत्यादौ तूपपदसमासोऽस्त्येव । दुर्निन्दायामिति । प्रादिग्रहणेन यः समासस्तस्याय विषयनिर्देश इत्यर्थान्तरेऽपि गतित्वात्समासो भवति—'दुष्कृत'मिति । आङीषदर्थ इति । क्रियायोगे तु गतित्वात्समासः—'आबद्ध'मिति । 'आ मन्द्रै'रित्यत्र तु सत्यपि सामर्थ्ये मन्द्रं प्रत्यगतित्वात्तद्गतेषदर्थाभावाच्च समासाभावः । कुः पापार्थ इति । 'प्रशस्तेऽपि द्वेषान्निन्दा भवति, पापं तु वस्तुस्थित्या गर्हितमिति निन्दापापयोर्भेदः । पूर्ववदुपलक्षणार्थत्वादीषदर्थेऽपि समासो भवति—'कालवण'मिति । अन्ये त्वाहुः—पृथिवीवाचि'कु'शब्दनिवृत्तये 'कुः पापार्थे' इत्युच्यते । ईषदर्थे तूत्तरपदे कादेशविधानात्समासो भवत्येव ।

उ०— वृत्तौ 'गत'शब्दाप्रयोगे हेतुमाह—वृत्तिविषय इति । पदैकदेशन्यायेनेति भावः । प्रगतः—शिष्यं प्राप्तः, गुरुं प्राप्तः, पितामहस्य पितृत्वं प्राप्त इति चार्थः ।

'पूजाया'मित्युपलक्षणमित्याह—उपाधीनामिति । अतिसिक्तमेवेति । तथाप्रयोगदर्शनादिति भावः । कर्मप्रवचनीयत्वादत्र षत्वाभावः ॥ 'अर्थान्तरेऽपी'त्यस्य 'समासो भवती'त्यनेनान्वयः । तत्र हेतुर्गतित्वादिति । दुष्कृतमिति । दुः—कृच्छ्रार्थे । कृच्छ्रविधानाद्भूते खलु न भवति ॥ सत्यपीति । अपिना वस्तुतः सामर्थ्यमेव नास्तीति ध्वनितम् । अगतित्वादिति । मन्द्रस्य क्रियात्वाभावादिति भावः ॥ ईषदर्थेऽपीति । अत एवोत्तरपदाधिकारे 'ईषदर्थे' इति कोः कादेशविधानं चरितार्थम् । पृथ्वीवाचकस्य व्यावृत्तये त्वेतद्वचनम् । साहचर्यं तु न सर्वत्र व्यवस्थापकमिति भावः ।

१—इतः परं नव सौनागवार्तिकानि ।

**गताद्यर्थे प्रथमया'** ॥ प्रादयो गताद्यर्थे प्रथमया समस्यन्त इति वक्तव्यम् । प्रगत आचार्यः प्राचार्यः । प्रान्तेवासी । प्रपितामहः ॥ **'अत्यादयः क्रान्ताद्यर्थे द्वितीयया'** ॥ अत्यादयः क्रान्ताद्यर्थे द्वितीयया समस्यन्त इति वक्तव्यम् । अतिक्रान्तः खट्वाम्—अतिखट्वः । अतिमालः ॥ **'अवादय क्रुष्टाद्यर्थे तृतीयया'** ॥ 'अवादयः क्रुष्टाद्यर्थे तृतीयया समस्यन्त इति वक्तव्यम् । अवक्रुष्टः कोकिलयावकोकिलो वसन्तः ॥ **'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या'** ॥ पर्यादयो ग्लानाद्यर्थे चतुर्थ्या समस्यन्त इति वक्तव्यम् । परिग्लानोऽध्ययनाय पर्यध्ययनः ॥ **'निरादयः क्रान्ताद्यर्थे पञ्चम्या'** ॥ निरादयः क्रान्ताद्यर्थे पञ्चम्या समस्यन्त इति वक्तव्यम् । निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः । निर्वाराणसिः ।

**अव्ययं प्रवृद्धादिभिः ॥ ५ ॥**

अव्ययं प्रवृद्धादिभिः समस्यत इति वक्तव्यम् । पुनःप्रवृद्धं बर्हिर्भवति । पुनर्गवम् पुनःसुखम् ।

**इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ॥ ६ ॥**

इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । वाससीइव । कन्येइव ।

**अव्ययमव्ययेन ॥ ७ ॥**

अव्ययमव्येन समस्यत इति इति वक्तव्यम् । प्रप्र यज्ञपतिम्[†] ।

प्र०— अव्ययं प्रवृद्धादिभिरिति । 'आदि'शब्दः प्रकारे । तेन यस्याव्ययस्य समासो दृश्यते तस्यानेन समासः कार्यः । 'सह सुपे'त्यत्रोक्तमपि पुनरिह स्मरणायोक्तम् । अथवा वार्तिकगृहीतोऽर्थो योगविभागेन तत्र साधित इति पौनरुक्त्याभावः ।

उ०— 'सह' 'सुपे'ति योगविभागेन सिद्धे इदं व्यर्थमित्यत आह—सह सुपेत्यत्रेति । एतेन नित्यार्थमिदमित्यपास्तं, तत्राप्यप्रामाण्येनेह वार्त्तिकेषु नित्यपदासंबन्धादिति भावः । तत्पुरुषसंज्ञार्थमत्र वचनानां पाठः । अत एव 'पुनर्गव' इत्यत्र टच् । तत्र करणाद्दृतत्वमपि । यथानुरोधेन च व्यवस्थेत्याहुः ।

१—इदं कात्यायनवार्तिकं सौनागवार्तिकेष्वर्थनिर्देशात् । केचित् सौनागवत्पठन्ति ।
१—इदं वार्तिकं व्याख्याभाष्यं च क्वचिन्न दृश्यते । † यजु० सं० ५. १८.

## उदात्तवता गतिमता च तिङा ॥ ८ ॥

उदात्तवता तिङा गतिमता चाव्ययं समस्यत इति वक्तव्यम्। अनुव्यचलत्, अनुप्राविशत्। [ अनुव्याकरोति। ] यत्परियन्ति* ॥१८॥

## उपपदमतिङ् ॥ २ । २ । १९ ॥

'अति'ङिति किमर्थम्? कारको व्रजति, हारको व्रजति‡।

प्र०— अनुव्यचलदिति। अत्र पूर्वं परत्वा'त्तिङ्ङतिङ' इति निघातः, तत उदात्तवत्त्वाभावाद् गतिमतेति पृथगुक्तम्। तत्र त्रयाणां पदानां समासे कृते समासान्तोदात्तत्वं भवति। 'तत्पुरुषे तुल्यार्थे'त्यनेन तु पूर्वपदप्रकृतिस्वरत्वं न भवति। 'गतिर्गता'वित्यनेनानोरनुदात्तत्वात्। तत्र चोदात्तस्वरितग्रहणानुवर्तनात्। विशब्दस्य तु पूर्वपदत्वाभावात्। यत्परियन्तीत्युदात्तवत उदाहरणम्। 'निपातैर्यद्यदी'ति निघातप्रतिषेधाद्यन्तीत्यस्य प्रत्ययस्वरेणाद्युदात्तत्वात् 'परि'शब्दस्य 'यन्ती'त्यनेन समासः॥१८॥

उपपदम। अतिङिति किमर्थमिति। यदि तिङन्तस्य समासो निषिध्यते तदा सुप्सुपेत्यधिकारात्तिङन्तस्य प्राप्त्यभावादनर्थकः प्रतिषेधः। अथ तिङ्शब्देन तिङर्थो लक्ष्यते,—तिङन्तार्थवाचिनः शब्दस्य समासनिषेधार्थं, तथापि तिङर्थशब्दस्तिङन्त एव भवतीत्यनर्थक एव प्रतिषेध इति प्रश्नः। अत इति। यस्मात्तिङन्तस्यानर्थकः प्रतिषेधः इत्यर्थः।

उ०— अत्र पूर्वमिति। अनेना समासात्पूर्वमित्यर्थः। त्रयाणां पदानामिति। गतिविशिष्टतिङन्तेनाव्ययस्य समासविधानादित्यर्थः। 'उदात्तवते'त्यनेन तु न विना समासः, निघातेन तस्योदात्तवत्त्वाभावादिति। तत्पुरुषे तुल्यार्थेति। 'समपाद' इत्यादौ पूर्वपदप्रकृतिस्वरेण पूर्वपदानुदात्तत्ववारणाय उदात्तस्वरितग्रहणानुवृत्त्या तद्योगिपूर्वपदस्यैव 'बहुव्रीहौ प्रकृत्ये'त्यत्र ग्रहणादिति भावः। पूर्वपदत्वाभावादिति। विनाचलदित्यस्य न समासः, किं तु 'वि'विशिष्टेनाचलदित्यनेनानोरित्याशयः। अन्यथा वेरुदात्तत्वे उदात्तयणः परत्वादकारस्य स्वरितत्वं स्यादिति भावः॥१८॥

उपपदम। यदि तिङन्तस्येति। उपपदस्येत्यर्थः। तिङन्त एवेति। कृद्भिर्विहितस्य प्रत्ययस्याभावादिति भावः। न च 'मा भवान्भू'दित्येतद्व्यावृत्तयेऽतिङिति: समासः इत्यर्थकं तत्, 'माङी'त्यस्य सतीत्यर्थात्तत्रोपपदत्वमेव नेत्यदोषात्। प्रथमार्थे सौत्री सप्तमी हि उपपदसंज्ञालिङ्गम्। अत एव पक्षावित्यादौ नोपपदत्वम्। 'तुमुन्ण्वुला'वित्यत्र तु 'क्रियार्थोपपदस्ये'ति कार्यार्थमुपपदत्वमावश्यकमिति भाष्याशयः।

१—'उदात्तगतिमता' पा०। २—क्वचिन्न।

* निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ८. १. ३०.

‡ तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३. ३. १०.

अतिङिति शक्यमकर्तुम्। कस्मान्न भवति—कारको व्रजति, हारको व्रजतीति ? सुप्सुपेति† वर्तते ॥ अत उत्तरं पठति—

**उपपदमतिङिति[1] तदर्थप्रतिषेधः ॥ १ ॥**

उपपदमतिङिति तदर्थस्यायं प्रतिषेधो वक्तव्यः। कस्य ? तिङर्थस्य। कः पुनस्तिङर्थः ? क्रिया।

**क्रियाप्रतिषेधो वा ॥ २ ॥**

अथवा व्यक्तमेवेदं पठितव्यमुपपदमक्रियेति ॥ अथाक्रियेति किं प्रत्युदाह्रियते ? कारको गतः। हारको गतः ॥ नैतत्क्रियावाची ॥ किं तर्हि ? द्रव्यवाचि ।

प्र०- तच्छब्देनार्थशब्दसन्निधाने तिङर्थ उच्यते। स तिङन्तस्यार्थोऽर्थो यस्य स तदर्थः। कस्येति। सामान्याभिधानाद्विशेषावधारणाय प्रश्नः। कः पुनरिति। कालसाधनसंख्यापुरुषक्रियोपग्रहरूपस्तिङर्थः। तदर्थश्च तिङन्त एव संभवति नान्यत्रेति प्रश्नः। क्रियेति। अनेकार्थसंभवेऽपि साध्यत्वात्क्रिया प्रधानम्। प्रधानं चार्थस्तिङ्ग्रहणेन वचनसामर्थ्याल्लक्ष्यते इति भाव।

क्रियाप्रतिषेधो वेति। यदि तिङ्ग्रहणेन वचनसामर्थ्यात्क्रिया लक्षणीया तदा प्रतिपत्तिलाघवाय साक्षात् क्रियाप्रतिषेधः कर्तव्य इत्यर्थः। अत्रापि पक्षे सुबन्तस्य क्रियावाचित्वाभावान्निर्विषय एव प्रतिषेध इत्याह—अथेति। कारको गत इति। 'गत'शब्दः क्रियावाच्युपपदं, तत्र तुमुन्ण्वुलाविति ण्वुल्। कर्तु गत इत्यर्थः। अत्राअतिङ्ग्रहणात् समासाभावोऽन्यथा 'गतकारक' इति स्यात्। अत्र च प्रकृतिवाच्यक्रियाश्रयो ण्वुल्। तदाश्रयं गतशब्दस्य क्रियावाचित्वमिति समासप्रतिषेधः। नैतदिति।

उ०- अर्थशब्दसन्निधाने इति। तिङन्तशब्दरूपार्थकस्योपपदस्याभावादिति भावः। तिङर्थ उच्यत इति। कस्य ? 'तिङर्थस्ये'ति भाष्येऽपि तिङ्पदेन तदर्थो ग्राह्य इति भावः। 'कस्ये'ति प्रश्नोऽपि तदर्थशब्दार्थप्रश्नद्वारा तच्छब्दार्थप्रश्न एवेति बोध्यम्। पुरुषः—प्रत्यक्त्वादिः, उपग्रहः—कर्त्रभिप्रायत्वादिः। यद्यपि कर्त्रभिप्रायत्वं न तिङर्थस्तथापि यथाकथंचिद्द्योत्यं भवत्येवेति बोध्यम्। 'तिङर्थं' इत्यस्य तिङन्तार्थं इत्यर्थः। अनेकार्थेति। कालसाधनादिरूपेत्यर्थः। साध्यत्वादिति। साधनसाध्यत्वेन शाब्दप्राधान्यादित्यर्थः।

'तिङ्ग्रहणमपनीय 'क्रिया'पदग्रहणे लाघवं दर्शयति—यदीति। अतिङ्ग्रहणादिति। अक्रियाग्रहणाद्वेत्यपि बोध्यम्। नन्वत्र गतशब्दस्य सत्त्वप्रधानतया कथं क्रियावाचित्वमित्याशङ्क्याह—अत्र चेति। द्रव्यवाचित्वे प्रत्ययानुपपत्तिः, क्रियावाचित्वे तु उपपदसमासो

1—'वक्तुम्' पा०। † सुबामन्त्रिते पराङ्गवत् स्वरे; सह सुपा २. १. २; ४.

इदं तर्हि—कारकस्य गतिः । कारकस्य व्रज्या । एतदपि द्रव्यवाचि । कथम् ? 'कृदभिहितो भावो द्रव्यवद्भवती'ति ।

---

प्र०-सुबन्तविशेषणमतिक्रमहणम् । न चात्र सुबन्तं क्रियावाचि । प्रकृत्यर्थस्य ह्यत्र गुणीभावः । प्रत्ययार्थस्य कर्तुः प्राधान्यं, तस्य च द्रव्यरूपेण कृताभिधानम् । प्रधानेन च व्यपदेशो भवतीति 'द्रव्यवाची'त्युक्तम् । अत एव 'गत'शब्दस्य समासो न प्राप्नोति, तस्यानुपपदत्वात् । धातोश्च क्रियावाचित्वात्तदाश्रया प्रत्ययोत्पत्तिरविरुद्धा । धात्वर्थस्य प्रत्ययार्थेन संसृष्टत्वात्—पदान्तरेणैकार्थीभावासंभवात् समासस्य त्वप्रसङ्गः, धातोः सुबन्तत्वाभावाच्च ।

कारकस्य गतिरिति । गमनं गतिरिति भावे प्रत्ययविधानात्क्रियावाचित्वमस्तीति भावः । एतदपीति । धातुरत्र साध्यभूतां क्रियां प्रत्याययति । प्रत्ययस्तु तस्या एव क्रियाया उपसंहृतक्रमरूपां सत्त्वरूपतामाह, 'प्रत्ययार्थश्च प्रधान'मिति यत्सुबन्तं न तत्क्रियावाचि, यत्क्रियावाचि, न तत्सुबन्तमित्यर्थः । द्रव्यवदिति । यथा घटादेर्द्रव्यस्य लिङ्गसंख्यासाधनसंबन्धस्तथा कृदभिहितस्यापि भावस्येत्यर्थः ।

---

उ०-दुर्वार इति तद्व्यावृत्त्यर्थमक्रियाग्रहणमिति भावः ॥ इदानीमेव क्रियावाचित्वोपपादनायाह—सुबन्तेति । उपपदविशेषणमित्यर्थः । 'नैतत्क्रियावाची'ति भाष्यस्य—नैतत्प्राधान्येन क्रियावाचीत्यर्थः । नन्वेवमत्र समासो दुर्वारोऽत आह—अत एवेति । प्रत्ययोत्पत्तिनिमित्तमुपपदत्वं च न गतशब्दस्य, किं तु धातोरेवेत्याह—धातोश्चेति । अन्वयाभावेऽपि सामर्थ्यानुपपदत्वमित्यभिमानः । ननु प्रत्ययोत्पत्तिवत्समासोऽपि स्यादत आह—धात्वर्थस्येति । एवं च तन्मात्रस्यान्येनैकार्थीभावासम्भव इति भावः । वस्तुतस्तु 'नैतत् क्रियावाची'त्यनेनात्र 'तुमुन्ण्वुला'विति ण्वुलेव नेति बोध्यते । 'क्रियार्थाया'मिति स्त्रीलिङ्गनिर्देशेन क्रियार्थायाः क्रियाया एव लाभे पुनः क्रियाग्रहणेन प्राधान्येन साध्यमात्रावस्थक्रियाप्रतिपादकस्यैव ग्रहणात् । किं च क्रियाशब्देन क्रियावाचकशब्दस्य ग्रहणे क्रिया प्रधानभूता साध्यावस्थैवात्र गृह्यते इति 'गतिकारकोपपदा'दिति सूत्रेऽपि भाष्ये स्फुटम् । अर्थग्रहणे तु गुणीभूताया अपि ग्रहणमिति पाकादियोगे कारकविभक्तिकृत्वसुजादीनां साधुत्वं भवत्येवेत्याशयः । अन्यथा सिद्धान्ते 'कारको गत' इत्यत्र समासो दुर्वारः स्यात् । किं च क्रियावाचित्वाभावादत्राप्रत्युदाहरणत्वम्, तुमुन् न, ण्वुल्तु भवतीत्यस्यान्याय्यत्वात् कैयटोक्तरीतिस्त्वनुपसर्जनत्वेन विधिः 'समर्थः पदे'त्यादिसूत्रभाष्यविरुद्धा । तत्र हि निष्कृष्यैकार्थीभावं विनापि समासतद्धिताविप्रवृत्तेरङ्गीकारात् । न चैवमपि 'कारको व्रजतितरा'मित्यत्र समासाभावार्थं तदर्थप्रतिषेध आवश्यकः, अनभिधानेन तत्र तादृशप्रयोगाभावादिति भाष्याशयः । उपसंहृतक्रमरूपाम्—उपसंहृतक्रमत्वसमानाधिकरणवैजात्यविशेषरूपाम् । प्रधानमित्यति । प्रत्ययार्थवैजात्येन लिङ्गाद्यनन्वयरूपप्रकृत्यर्थवैजात्यकार्याभिभवात्तस्य प्राधान्यमिति भावः । एवं चात्रापि न ण्वुलिति तात्पर्यं भाष्यस्येति बोध्यम् ।

एवं तर्हि सिद्धे सति यदतिङिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो 'ऽनयोर्योगयोर्निवृत्तं* सुप्सुपे'ति। किमेतस्य ज्ञापने प्रयोजनम्? 'गतिकारको-

प्र०- अनयोरिति। नन्वत्रैव सूत्रेऽतिङ्ग्रहणात्सुपो निवृत्तिर्ज्ञाप्यतां पूर्वत्र कथं ज्ञाप्यते? एवं तर्हि योगविभागः क्रियते, तेन 'अति'ङिति सूत्रद्वयशेषो इत्यदोषः। अतिङ्ग्रहणेन च समासो योगद्वयविहितो विशेष्यते 'अतिङन्तः समासो भवती'ति। तेन 'सुपे'त्यस्यैव निवृत्तिर्ज्ञाप्यते। सुब्ग्रहणं तु पूर्वपदस्य पदकार्यार्थमनुवर्तत एव। भाष्येऽपि समुदायस्य निवृत्तिर्विवक्षिता, न तु केवलस्य 'सु'बित्यस्य। गतिकारकोपपदानामिति। एतत्सूत्रद्वये 'सुपे'त्यस्य निवृत्त्या गतीनामुपपदानां च उत्तरपदात्सुबुत्पत्तेः प्राक्समाससिद्धिः। कारकाणां तु 'कर्तृकरणे कृता बहुल'मिति समासः क्रियते। तत्र कृद्ग्रहणात्प्राक्सुबुत्पत्तेः समासः। तिङन्तेन तृतीयान्तस्य सुपेत्यस्यानुवर्तनात्समासाप्रसङ्गात्कृदन्तेनैव समासे सिद्धे कृद्ग्रहणं कृदन्तावस्थायामेवानुत्पन्ने सुपि समासार्थम्। अस्याश्च परिभाषायाः 'पुंयोगादाख्याया'मित्यत्र प्रयोजनानि वक्ष्यन्ते। यदि तदुत्तरपदात्सुब्नोत्पद्यते तदा दधिसेचावित्यादौ पदादित्वाभावात्षत्वप्रतिषेधो न प्राप्नोति। पदत्वाभावादुत्तरपदव्यपदेशश्च न, ततश्च तन्निबन्धनः स्वरो न सिद्ध्यति। नैष दोषः। निरुपपदात्सेचयतेः क्विपि कृते षष्ठीसमासः क्रियत इति षत्वनिषेधो भविष्यति। यद्वा 'सुपे'त्यस्य निवृत्तौ सत्यां यथेष्टं कार्यसिद्धये क्वचिदुत्पन्ने सुपि

उ०- भाष्ये—एवं तर्हि सिद्धे इति। तादृशप्रयोगाभावादतिप्रसङ्गनिरासे सिद्ध इत्यर्थः। एवं तर्हि योगविभाग इति। अत्र 'अति'ङिति, पूर्वसूत्रे 'गति'रिति चेत्यर्थः। अतिङ्ग्रहणेन चेति। 'अति'ङित्यस्य प्रथमान्ततया समास एव विशेष्यते। अतिङिति बहुव्रीहिः। 'प्रपचतितरा'मित्यादौ नित्यसमास इष्ट एव। 'तिङि चोदात्तवती'त्यनेन गतेर्निघातेऽन्तोदात्तत्वमेव। तत्र एतत्सिद्ध्यर्थमेवातिङ्ग्रहणं प्रत्याख्यातं भाष्ये। 'गतिकारके'ति स्वरस्य तु नात्र प्रवृत्तिः, कृद्ग्रहणात्। कृद्ग्रहणप्रत्याख्यानं तु न भाष्यारूढमिति तत्रैव वक्ष्यामः। एतेन "तत्र नित्यसमासवारणायातिङिति तद्घटितप्रतिषेधायावश्यकमिति कथं तत्र तन्निवृत्तिज्ञापकम्। 'प्रपचतितरा'मित्यादौ च 'गतिकारकोपपदा'दिति 'तिङि चोदात्तवती'ति सूत्रभाष्यप्रामाण्येनोदात्तवतेत्यादिवार्त्तिकोक्तो वैकल्पिकसमास एवेष्यते" इति परास्तम्। सुब्ग्रहणं त्विति। 'उपपद'मित्यन्वर्थसंज्ञया सुबन्तस्यैव पदत्वेनोपपदत्वाद् गतेः सुबन्तत्वाच्च 'राजयुध्वे'त्यादौ पूर्वपदे नलोपादिपदकार्यसिद्धेः 'तिङन्ताघटित' इति समासविशेषणेन 'कारको प्रजती'त्यादिव्यावृत्तिसिद्धेः प्रथमान्तसुबनुवृत्तेरपि फलाभावेन चिन्त्यमेतत्। कृदन्तावस्थायामेवेति। 'काष्ठैः पचतितरा'मित्यादिवारणाय कृद्ग्रहणस्यावश्यकत्वेन चिन्त्यमिदमिति कश्चित्, तन्न, बहुलग्रहणेन शानजन्तादिभिरिव तेनापि समासस्य वारयितुं शक्यत्वात्। परिभाषायाः प्रयोजनवत्त्वे अतिङ्ग्रहणं प्रयोजनवत्स्यादत आह—अस्याश्चेति। तन्निबन्धनः स्वर इति। 'गतिकारकोपपदात्कृ'दिति विहित इत्यर्थः। स्वरासिद्ध्यरुचेराह—यद्वेति। सुपेत्यस्य निवृत्ताविति। सुपैवेति नियमाभावाद्यथेष्टं समाससिद्धिरिति भावः। लक्ष्यानुसारेण च व्यवस्थेति बोध्यम्। तत्र

* कुगतिप्रादयः; उपपदमतिङ् २. २. १८; १९.

पपदानां कृद्भिः सह समासो भवती'त्येषा परिभाषा न कर्तव्या भवति । यद्ये-
तज्ज्ञाप्यते केनेदानीं समासो भविष्यति ? समर्थेन† ।

यद्येवं धातूपसर्गयोरपि समासः प्राप्नोति, पूर्वं धातुरुपसर्गेण युज्यते
पश्चात्साधनेनेति । नैतदस्ति । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण ।
साधनं हि क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टि । अभिनिर्वृत्तस्य चार्थ-
स्योपसर्गेण विशेषः शक्यो वक्तुम् ।

प्र०–समासः, कचित्प्राक्सुबुत्पत्तेः । एवं कारकस्य समासोऽपि बहुलग्रहणात्कचित्सुबुत्पत्ते-
र्भवतीति 'सा हि तस्य धनक्रीते'ति प्रयोग उपपन्नः । उत्तरपदशब्दः समासावयवविशे-
षस्य रूढिरिति तत्राप्यदोषः । यद्येतदिति । शब्देनोत्तरपदस्यानुपादानात् प्रश्नः ।
समर्थेनेति । सुबित्यस्यानुवृत्तौ सत्यां समासस्य पदविधित्वात्समर्थपरिभाषोपस्थानात् ।

यद्येवमिति । ततश्चैकस्वर्यादिप्रसङ्गः, शाकलप्रतिषेधप्रसङ्गश्च । पूर्वं धातुरुप-
सर्गेणेति । ततस्तयोः सामर्थ्यमस्ति, उपसर्गार्थविशिष्टायाः क्रियायाः साधनेन योगात् ।
पूर्वं धातुः साधनेनेति । ततश्च पूर्वं साधनाभिधायिप्रत्ययोत्पत्तिः, पश्चात् साधनसंसृष्ट
एव धातुरुपसर्गेण युज्यते न केवल इति धातूपसर्गयोः समासाभावः । तत्र कृदन्तेन
समासो भवत्येव, तिङन्तेन त्वतिङिति निषेधान्न भवति । यत्र तु तिङन्तेन समास इष्यते
स विषयो दर्शितः—उदात्तवतेति । अभिनिर्वृत्तस्येति । अनिष्पन्नस्य विशेषाकाङ्क्षाया

उ०–'सुबुत्पत्तेः प्रा'गित्युपलक्षण, लिङ्गबोधकप्रत्ययोत्पत्तेः प्रागपीति बोध्यम् । सुबुत्पत्तेर्भवतीति ।
सुबुत्पत्तेरनन्तरमित्यर्थः । धनक्रीतेति । सुप्टाबुत्पत्तेः पूर्वं समासे 'क्रीतात्करणे'ति ङीप् स्यात् ।
सुबन्तेन तु समासेऽन्तरङ्गत्वाट्टाप् सिद्ध्यतीति भावः । यत्र सुबुत्पत्तेः पूर्वं समासस्त त्रस्वराप्राप्ते-
राह–उत्तरपदशब्द इति । सुबित्यस्येति । तदननुवृत्तावपि प्रागुक्तरीत्या पदविधित्वं बोध्यम् ।

'सुपे'त्यस्याननुवृत्तावतिप्रसङ्गमाह भाष्ये—यद्येवमिति । कुगतीत्यनेनेति भावः । अति-
ङित्यनेन तिङन्तस्यैव प्रतिषेध इति तात्पर्यम् । ऐकस्वर्यादीति । आदिनैकपद्यम् । किं च
तयोः समासे प्रातिपदिकतया परत्वात्सुबुत्पत्तिरेव स्यान्न तिङित्यपि बोध्यम् । पूर्वं धातुरुप-
सर्गेणेति । तत्संज्ञकशब्देनेत्यर्थः । पूर्वं साधनेन योगेऽपि उपसर्गस्य क्रियाविशेषकत्वाद्विशेषा-
त्सामर्थ्यस्य दुर्वारत्वमित्यत आह—ततश्च पूर्वमिति । साधनसंसृष्ट एवोपसर्गेण युज्यत इति
केवलेन सामर्थ्याभाव इति भावः । न च 'निष्कृष्यैकार्थीभावो न समासादिप्रयोजक' इत्युक्तम्,
एवं च विशिष्टैकार्थीभावेऽवयवानामपि तत्सत्त्वात्स दुर्वार इति वाच्यं, तिङन्तैकार्थीभावा-
भावात्, अतिङिति निषेधात्, तदवयवेन तु प्रत्ययार्थासंसृष्टेन नैकार्थीभावः, साधनसंसृष्टार्थ-
स्यैवोपसर्गेण योगादित्यदोषात् । भाष्ये—साधनं हि क्रियां निर्वर्तयतीति । क्रियां—
तत्प्रतीतिं, साध्यत्वेन प्रतीतेः तत्संबन्धाधीनत्वात्, साध्यत्वेन प्रतीतार्थकयोगे च तेषामुप-
सर्गत्वादिति भावः । अभिनिर्वृत्तस्य । अभिनिर्वृत्तज्ञानविषयस्येत्यर्थः । अनिष्पन्नस्येति ।

† समर्थः पदविधिः २. १. १.

**षष्ठीसमासादुपपदसमासो विप्रतिषेधेन ॥ ३ ॥**

षष्ठीसमासादुपपदसमासो भवति विप्रतिषेधेन। षष्ठीसमासस्यावकाशः—राज्ञः पुरुषो राजपुरुषः*। उपपदसमासस्यावकाशः—स्तम्बेरमः कर्णेजपः। इहोभयं प्राप्नोति—कुम्भकारः नगरकारः। उपपदसमासो भवति विप्रतिषेधेन।

**न वा षष्ठीसमासस्याभावादुपपदसमासः ॥ ४ ॥**

न वार्थो विप्रतिषेधेन। किं कारणम्? षष्ठीसमासस्याभावादुपपदसमासो भविष्यति। कथम्? 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्ते'रिति [1]वचनात्।

प्र०—अभावात्, अनुभूयते सुखमुपास्यते गुरुरित्यादौ धातुरेव सकर्मिकां क्रियां वक्ति, उपसर्गस्तु द्योतक इति नास्ति कश्चिदस्मिन् पक्षे दोषः।

षष्ठीसमासादिति। नित्यत्वानित्यत्वाभ्यामनयोर्विरोधसद्भावः। कुम्भकार इति। पञ्चके प्रतिपदिकार्थे प्रातिपदिकेनैव कर्मण उक्तत्वात्तत्रैवोपपदेऽणा भाव्यम्। अपवादविषयत्वाद् द्वितीयानुत्पादात्। कृते चाणि कर्तृकर्मणोरिति षष्ठी भवतीत्यस्त्युभयप्रसङ्गः।

गतिकारकेति। ततश्चोत्तरपदे विभक्त्युत्पत्त्यनपेक्षणादन्तरङ्गत्वादुपपदसमासो भवतीत्यर्थः।

उ०—अज्ञातस्येत्यर्थः। नन्वेवमुपसर्गसम्बन्धात्प्रागेवकम्यादेः सकर्मकत्वाभावेन कर्मणि लकारो न स्युरत आह—अनुभूयते सुखमिति। धातुरेवेति। केवलधातुरेवेत्यर्थः। उपसर्गस्तु द्योतक इति। स च श्रोतृबोधाय पश्चादेव सम्बध्यते इति भावः। एतेनोपसर्गाणां द्योतकत्वेऽपि तद्द्योत्यार्थस्य साधनसम्बन्धात्पूर्वमेव धातुना बोधनावश्यकत्वेन धातूपसर्गयोः सामर्थ्यसत्त्वेन समासो दुर्वार इत्यपास्तम्। एतच्च 'सुट्का'दित्यत्र विस्तरेणोपपादयिष्यते। 'विपराभ्यां जे'रित्यादौ व्यादिद्योत्यार्थप्रतिपादकस्येत्यर्थः, विपराभ्यां परत्वयोगस्येत्यर्थो वा।

विरोधसद्भाव इति। 'इत्यभिमान' इति शेषः। अभिमानत्वं चास्याग्रे [illegible] स्फुटीकरिष्यते। ननु कर्मण्युपपदेऽण्, कर्मत्वं च विभक्त्या गम्यं, तत्राणुत्पत्तेः पूर्वं कृद्योगाभावात्षष्ठ्या अप्राप्तौ द्वितीययैव भाव्यमिति काले [illegible] तत्सिद्धौ प्रसङ्गाभाव इति कुतः षष्ठीसमासप्राप्तिरत आह—पञ्चके इति। प्रातिपदिकस्य पदत्वाभावादुपपदत्वं कथमिति चिन्त्यमेतत्। 'सुबन्तमेवोपपद'मिति 'तत्रोपपद'मितिसूत्रे भगवान्वक्ष्यति स्वयं च। किं च पञ्चकपक्षेऽपि [illegible] संक्षेपप्रकारेणैव प्रातिपदिकेऽभ्युपगते न तु विशिष्येति कर्मोपपदत्वप्रयुक्ताणोऽप्राप्तिः। अन्यथा करणत्वाद्युपपदेऽपि कर्मोपपदकाणः, [illegible] कर्मत्वसत्त्वेन कृद्युत्पत्तावपि भावितत्वं गृहीत्वा षष्ठीप्रवृत्तिरित्येव भाष्याशय उचितः।

* षष्ठी २. २. ८. १—'समासवचनात्' प्रा०।

अथवा विभाषा षष्ठीसमासः, यदा न षष्ठीसमासस्तदोपपदसमासो भविष्यति। अनेनैव यथा स्यात्तेन मा भूदिति। कश्चात्र विशेषस्तेन वा स्यादनेन वा? [ ¹अयमस्ति विशेषः। ] उपपदसमासो नित्यसमासः, षष्ठीसमासः पुनर्विभाषा। ननु च नित्यं यः समासः स नित्यसमासो यस्य विग्रहो नास्ति। 'ने'त्याह। नित्याधिकारे† यः समासः स नित्यसमासः। नैवं शक्यम्। अव्ययीभावस्य ह्यनित्यसमासता प्रसज्येत। तस्मान्नित्यः समासो नित्यसमासः, यस्य विग्रहो नास्ति ॥१९॥

प्र०— अथवेति। षष्ठीसमासेऽपि दोषाभाव इत्यर्थः। क्वचित्कार्ये दोषदर्शनादाह— अनेनेति। 'सिन्नित्यसमासयो'रित्यत्र नित्यसमासग्रहणेनास्य ग्रहणं यथा स्यात् 'अन्तोदात्तादुत्तरपदा'दित्यत्रानित्यसमासग्रहणेनास्य ग्रहणं मा भूदिति भावः। यस्य विग्रहो नास्तीति। अस्यापि विग्रहाभावः, षष्ठीसमासेन मुक्ते पक्षे उपपदसमाससद्भावात्। नित्याधिकार इति। नित्यशब्दस्य स्वरितत्वप्रतिज्ञानात्तदधिकारसंप्रत्ययः। नैवं शक्यमिति। नित्यशब्दस्य स्वरितत्वं दोषवत्त्वान्न प्रतिज्ञायत इत्यर्थः। तदेवं प्रयोजनाभावाद्विप्रतिषेधो न पठितव्यः ॥१९॥

उ०— अन्तरङ्गत्वादिति। 'षष्ठी'ति सूत्रे 'सुपे'ति तृतीयान्तस्य संबन्धादिति भावः। अत एव 'मातुः स्मरती'त्यादौ न षष्ठीसमासः। अत एव च षष्ठ्यन्तस्यानेकसुबन्तेन न समास इति बोध्यम्।

एतद्वार्त्तिकद्वयमपि प्रत्याचष्टे—अथवेति भाष्ये। 'विप्रतिषेधे पर'मित्यस्य तु युगपदुभयविहितत्पुरुषसमाससंज्ञयोः प्रवृत्तिसंभवेनासंभवरूपविप्रतिषेधाभावात्। 'उपपदसमासो भविष्यती'त्यस्योपपदमिति सूत्रविहितसमाससंज्ञा, तत्पुरुषसंज्ञा च स्यात्स्यतीत्यर्थः। अन्यादृशविरोधस्य तत्प्रवृत्तिनिमित्तत्वे न मानमिति तात्पर्यम्। न च नित्यत्वानित्यत्वज्ञानयोर्विरोधः, बोधे बाधज्ञानस्याप्रतिबन्धकत्वात्। एवं च षष्ठीसमासोऽपि नित्य एवैतद्विषये फलितः, तद्बोधिताभावांशस्यैतद्विरोधेनैतद्विषये त्यागात्, 'नित्यं क्रीडे'त्यादिविषये तस्य क्लृप्तबाधत्वात्। 'गतिकारकोपपदा'दित्यत्र प्रकृतपरिभाषायां च लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते इति षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव। स्वरश्च तत्रापि समासे इत्यन्तरङ्गत्वमेव नास्तीति भावः। परिभाषायां सामान्यतः कारकपदोपादानेन कारकविभक्त्यन्तसमासमात्रस्य सुबुत्पत्तेः प्राक् कृत्रिमत्वाभावादिति बोध्यम्। कैयटे 'सिन्नित्यसमासयो'रित्यादि'यथा स्या'-दित्यन्तोऽग्रन्थः, बहुषु पुस्तकेष्वनुपलम्भात्तत्र नित्यग्रहणप्रत्याख्यानाच्च। उत्तरपदेति। एवं चाग्निचित्येत्यादौ विभक्त्युदात्तत्वमपि स्यादिति भावः ॥१९॥

१-क्वचित्। † नित्यं क्रीडाजीविकयोः २. २. १७.

# अमैवाव्ययेन ॥ २ । २ । २० ॥

एवकारः किमर्थः ? नियमार्थः । नैतदस्ति प्रयोजनम् । सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकारं नियमार्थो भविष्यति ।

इष्टतोऽवधारणार्थस्तर्हि भविष्यति । यथैवं विज्ञायेत—'अमैवाव्ययेने'ति । मैवं विज्ञायि—'अमाव्ययेनैवे'ति । अस्ति चेदानीं कश्चिदनव्ययमम्शब्दो यदर्थो विधिः स्यात् ? अस्तीत्याह—खशयं* ब्राह्मणकुलमिति । नैतदस्ति प्रयोजनम् । अन्तरङ्गत्वादत्र समासो भविष्यति ।

इदं तर्हि प्रयोजनम् 'अमैव यत्तुल्यविधानमुपपदं तत्रैव यथा स्यादमा चान्येन च यत्तुल्यविधानमुपपदं तत्र मा भू'दिति† । अग्रे भोजम् । अग्रे भुक्त्वा ॥ अग्रादिष्वप्राप्तविधेः समासप्रतिषेधं चोदयिष्यति‡ स न वक्तव्यो भवति ॥२०॥

प्र०— अमैवाव्ययेन । यदर्थ इति । यन्निवृत्त्यर्थो नियमः स्यादित्यर्थः । खशयमिति । 'अधिकरणे शेते'रित्यच् । 'अतोऽ'मिति सोरम्भावः । अनेनानव्ययेनामा समासो मा भूदित्येवमर्थोऽयं नियमः स्यात् । अन्तरङ्गत्वादिति । अनुत्पन्न एव सावुपपदसमासेन भाव्यं, पश्चात् सुपत्ति समासविधानकालेऽनव्ययस्यामोऽसंभवान्नियमान्तरं च तस्य चरितार्थत्वाद्विपरीतनियमो न भविष्यतीत्यर्थः ।

अमैवेति । एवकारसामर्थ्यादमस्तस्यावृत्तिराश्रीयते । ततो येन वाक्येऽनामेव केवलो विधीयते न प्रत्ययान्तरसहितस्तेन वाक्येन यद्विधीयते उपपदं तत्र सप्तमीनिर्देशात्तदमा समस्यते नान्यदित्यर्थः । अग्रे भोजमिति । 'विभाषाऽग्रेप्रथमपूर्वेषु' इति द्वयोः क्त्वाणमुलोर्विधानादत्र समासो न भवति ॥ अग्रादिष्विति । यतोऽप्राप्तविभाषा ततः प्रत्ययोत्पत्तावग्रादीनां निमित्तत्वान्निमित्तस्योपपदत्वात्समासप्रसङ्गः । प्राप्तविभाषायां त्वग्रादीनां प्रत्ययोत्पत्तावनिमित्तत्वात्सन्निवृत्तावेव हेतुत्वात्तस्यानुपपदत्वमित्यर्थः ॥२०॥

उ०— अमैवा । नन्वेवं वचनवैयर्थ्यमतस्तत्सामर्थ्यात्सुबुत्पत्त्यनन्तरमपि समासो ज्ञाप्यते इत्यत आह—नियमान्तरे इति । वक्ष्यमाणे इत्यर्थः ।

अमेत्यस्यावृत्तिरिति । चिन्त्यमेतत् । आवृत्तौ मानाभावात् । अमैव तुल्यविधानं यदुपपदं तदमाव्ययेन समस्यते इत्यर्थे 'अग्रे भुक्त्वे'त्यत्र समासापत्तिरव्ययग्रहणवैयर्थ्यापत्तिश्च । किं च 'कालो भोक्तु'मित्यत्र समासापत्तिः । तस्मादमैव तुल्यविधानं यदुपपदं तदव्ययेनेति नियमेन सर्वेष्टसिद्धिः । अत एव भाष्ये'ऽग्रे भुक्त्वे'त्युदाहृतम्, 'अग्रादिष्वप्राप्ते'ति वार्तिकप्रत्याख्यानं च सङ्गच्छते इत्याहुः ॥ 'अप्राप्तविधे'रिति विकल्पव्याख्यामुपपादयति—प्राप्तविभाषायां त्विति । 'आभीक्ष्ण्य' इत्यनुवृत्त्या हि सा, तस्मिंश्च सत्येव प्रत्यय इत्याद्युक्तेः प्रत्ययोत्पत्तिसंनियोगेनैवोपपदसंज्ञास्वीकारादिति भावः ॥२०॥

---

* अधिकरणे शेतेः ३.२.१५; अतोऽम् ७.१ २४. † क्त्वा च णमुल् विभाषाग्रेप्रथमपूर्वेषु ३ ४.२१;२४. ‡ अग्रादिष्वप्राप्तविधेः समासप्रतिषेधः २.४.२४ वा० १.

## शेषो बहुव्रीहिः ॥ २ । २ । २३ ॥

'शेष' इत्युच्यते कः शेषो नाम ? येषां पदानामनुक्तः समासः स शेषः ।

**शेषवचनं पदतश्चेदभावात् ॥ १ ॥**

शेषवचनं पदतश्चेत्तन्न । किं कारणम् ? 'अभावात्' । न हि सन्ति तानि पदानि येषां पदानामनुक्तः समासः ।'

अर्थस्तर्हि शेषग्रहणम् । येष्वर्थेष्वनुक्तः समासः स शेषः ।

**अर्थतश्चेदविशिष्टम् ॥ २ ॥**

अर्थतश्चेदविशिष्टमेतद्भवति । कुतः ? पदतः । न हि सन्ति तेऽर्था येष्वर्थेष्वनुक्तः समासः ॥ त्रिकतस्तर्हि शेषग्रहणम् । यस्य त्रिकस्यानुक्तः समासः स शेषः । कस्य चानुक्तः ? प्रथमायाः ॥२३॥

श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

---

प्र०- शेषो बहुव्रीहिः । पदस्यार्थस्य च सर्वस्योपयुक्तत्वाच्छेषमसंभाव्य पृच्छति—शेष इति । पदतश्चेदिति । पदेन 'पदत' इत्याद्यादित्वात्तसिः । न हीति । सर्वेषां सामान्यविशेषरूपेणोपयुक्तत्वादित्यर्थः । न हि सन्ति तेऽर्था इति । पूर्वोत्तरान्यपदार्थेषु तत्पुरुषाव्ययीभावविधानात् । प्रथमाया इति । द्वितीयादीनां प्रतिपदं समासविधानात्प्रथमायाः शेषत्वम् । ततश्च प्रथमान्तानां पदानां बहुव्रीहिरित्यर्थात्समानाधिकरणानां भवति । 'कण्ठेकाल' इत्यादौ 'सप्तमीविशेषणे' इति पूर्वनिपातविधानाज्ज्ञापकाद्भवति ॥२३॥

इत्युपाध्यायजैय्यटपुत्रकैयटकृते भाष्यप्रदीपे द्वितीयस्याध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

---

उ०- शेषो बहु । उपयुक्तादन्यः शेषः । सामान्यम् । 'सह सुपे'त्यादिः । विशेषः—'द्वितीया-श्रिते'त्यादिः । पूर्वोत्तरेति । यद्यप्यन्यपदार्थवत् पूर्वोत्तरपदार्थयोस्तद्विधानं नास्त्यथापि तथाप्यव्ययीभावादिमहासंज्ञाबलेन पूर्वाचार्यपरिगृहीतार्थस्य निमित्तत्वमस्त्येवेत्यभिप्रायः । 'विशेषणं विशेष्येणे'त्यादौ प्रथमाया अप्युपयुक्तत्वमित्यत आह—द्वितीयादीनामिति । 'गतार्थे प्रथमये'त्यादि तु व्याख्यानमूलं, न स्वतन्त्रविधायकमिति भावः । यद्वा शेष इत्यस्य प्रथमान्तत्वात्प्रथमान्तगृहीतत्रिकस्य प्रतिपदमुच्चारितस्यैव ग्रहणमिति सर्वेष्टसिद्धिः ॥२३॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते द्वितीयस्याध्यायस्य
द्वितीये पादे प्रथममाह्निकम् ।

## अनेकमन्यपदार्थे ॥ २ । २ । २४ ॥

पदग्रहणं किमर्थम् ? 'अनेकमन्यार्थे' इतीयत्युच्यमाने वाक्यार्थेऽपि बहुव्रीहिः स्यात्—'यथा मे माता तथा मे पिता सुस्नातं भो' इति । पदग्रहणे पुनः क्रियमाणे न दोषो न भवति ।

अथान्यग्रहणं किमर्थम् ? 'अनेकं पदार्थे' इतीयत्युच्यमाने स्वपदार्थेऽपि

प्र०- अनेकम । अनेकग्रहणस्य वार्तिककारः प्रयोजनं वक्ष्यतीति भाष्यकारः पदग्रहणस्यान्यग्रहणस्य च प्रयोजनमाचष्टे । बहुवक्तव्यत्वाच्च पश्चादन्यग्रहणस्य विचारः । पदग्रहणमिति । 'अन्यार्थे' इत्युच्यमाने स्वपदार्थव्यतिरिक्तेऽर्थान्तर आश्रीयमाणेऽन्यपदार्थो लभ्यते । वर्तिपदानां च क्रियालक्षणे वाक्यार्थे वृत्त्यसंभवात्तन्निवृत्त्यर्थमपि पदग्रहणं नोपयुज्यत इति प्रश्नः । यथा मे मातेति । कश्चित्केनचित्पृष्टः 'कीदृशः कुलशीलादिना तव पिते'ति, स आह—'यथा मे माते'ति । एतानि पदानि 'तथा मे पिते'त्यन्यस्य वाक्यस्यार्थं गमयन्तीति, समासप्रसङ्गः । अथवा 'स्नाही'ति कश्चित्केनचिदुक्तस्तं प्रत्याह—'यथा मे माते'त्यादि । यथा शुद्धकुला मे माता तथा पितापीत्यभिजनशुद्धिरपि स्नानं, किं बाह्येन स्नानेनेत्यर्थः । ततः 'सुस्नातं भो' इत्येतद्वाक्यार्थे वर्तमानानां यथाप्रभृतीनां पदानां समासाभावार्थं पदग्रहणम् । अश्रुतवाक्यार्थे च पदानां वृत्तिर्दृश्यते, यथा नद्यां सिस्नासुः कश्चिदुच्यते—'नद्यां ग्राहाः सन्ती'ति । तस्मात्र 'मा स्नासी'रिति वाक्यार्थः प्रतीयते ।

अथान्यग्रहणमिति । अन्तरङ्गत्वात्स्वपदार्थे समासे सिद्धे पदार्थग्रहणसामर्थ्यादन्यपदार्थो लप्स्यत इति प्रश्नः । स्वपदार्थेऽपीति । अपिशब्दादन्यपदार्थेऽपीत्यर्थः । पदार्थग्रहणं व्याप्तिसमाश्रयणार्थं स्यादिति स्वपदार्थान्यपदार्थयोः समासः स्यात् ।

उ०- अनेकम । भाष्ये क्रमोल्लङ्घनेऽभिप्रायमाह—अनेकेति । अन्यपदार्थो लभ्यत इति । 'अन्यार्थे' इत्यस्य भिन्नेऽर्थे इत्यर्थः । भेदप्रतियोगी चोपस्थितः स्वपदार्थ एव । पर्युदासविषया च स पदार्थ एवेति भावः । वाक्यस्यार्थकत्वं युक्त्यन्तरमाह—वर्तीति । तेषां सुबन्तत्वादिस्वभिमानः । एतानि पदानीति । समानाधिकरणानामित्यनपेक्ष्येदम् । वस्तुतोऽर्थपरमेतत्, 'यथा मदीया माते'त्यत्र समासप्रसङ्ग इति बोध्यम् । 'सुस्नातं भो' इतिपाठे आह—अथवेति । अत्र सर्वत्रान्यार्थो व्यङ्ग्य इति बोध्यम् । 'अभिजनशुद्धिरपी'त्यपिरेवार्थे । भाष्ये 'वाक्य'शब्देन पदसमूहमात्रम् ।

व्याप्तिसमाश्रयणेति । पदार्थग्रहणसामर्थ्याद्व्याप्तिन्यायस्यैवानुसरणं, नान्तरङ्गन्यायस्येत्यर्थः । राजार्थं पुरुषमित्यर्थे सापेक्षत्वात्तत्पुरुषः, बहुव्रीहिरपि बहुपदके सापेक्ष इति प्रथमान्तपदद्वयेन विग्रहे परस्परान्यपदार्थेऽपि बहुव्रीहिः प्राप्नोतीति तद्व्यावृत्त्यर्थमन्यग्रहणम्,

बहुव्रीहिः स्यात्—राजपुरुषः तक्षपुरुष इति । नैतदस्ति प्रयोजनम् । तत्पुरुषः स्वपदार्थे बाधको भविष्यति । भवेदेकसंज्ञाधिकारे सिद्धम्, परंकार्यत्वे तु न सिध्यति । आरम्भसामर्थ्याच्च तत्पुरुषः, परंकार्यत्वाच्च बहुव्रीहिः प्राप्नोति ।

परंकार्यत्वे च न दोषः । शेष* इति वर्तते, अशेषत्वान्न भविष्यति ।

**शेषवचन उक्तम् ॥ १ ॥**

किमुक्तम् ? 'तत्र शेषवचनाद्दोषः संख्यासमानाधिकरणनञ्समासेषु बहुव्रीहि-प्रतिषेध' इति[†] ॥ अथैकसंज्ञाधिकारे नार्थोऽन्यग्रहणेन ? एकसंज्ञाधिकारे च कर्तव्यम् । अक्रियमाणे ह्यन्यग्रहणे यथैव तत्पुरुषः स्वपदार्थे बहुव्रीहिं बाधत एवमन्यपदार्थेऽपि बाधेत ।

अथानेकग्रहणं किमर्थम् ? 'अन्यपदार्थे' इतीयत्युच्यमान एकस्यापि पदस्य

प्र०–तत्पुरुष इति । बहुव्रीहेस्त्वन्यपदार्थोऽवकाशः । परंकार्यत्वाद्बाधेत । ततश्च संज्ञयोः समावेशात्स्वरसमासान्तप्रसङ्ग । शेषवचन इति । शेषग्रहणप्रत्याख्यानं स्मारयति । संख्येति । द्वीरावतीको वीरपुरुषकोऽब्राह्मणको देश इति समासविधावुपयोगादशेषत्वाद्बहुव्रीहिं प्राप्नोति, तस्माच्छेषग्रहणं न कर्तव्यम् । ततः स्वपदार्थे बहुव्रीहिनिवृत्त्यर्थमन्यग्रहणं कर्तव्यमिति स्थितम् ॥ अक्रियमाण इति । 'नीलोत्पलं सर' इत्यत्रापि विशेषानुपादानादन्यपदार्थेऽपि स्वपदार्थ इव तत्पुरुषो बहुव्रीहिं बाधेत, 'कण्ठेकाल' इत्यादिश्च व्यधिकरणपदो बहुव्रीहेरवकाशः स्यात् । अन्यग्रहणे तु सति स्वपदार्थे सावकाशं तत्पुरुषं परत्वाद्बहुव्रीहिर्बाधत इति न कश्चिद्दोषः ।

अथेति । एकनिवृत्त्यर्थं तावदनेकग्रहणं नोपपद्यते । पदविधित्वात्सामर्थ्ये सति

उ०–निश्चितश्चात्र शेष इति भावः । भाष्ये–एकदेश्याह—नैतदस्तीत्यादि । तत्पुरुषः,—समानाधिकरणतत्पुरुषः, राजपुरुष इत्यादिरपि कर्मधारय एव । इतर एकदेश्याह–भवेदित्यादि । स्वरसमासान्तेति । पर्यायेणेत्यर्थः । यद्वा कस्यचित्स्वरः, कस्यचित्समासान्त इत्यर्थः । भाष्ये—अशेषत्वान्न भविष्यतीति । यत्नोऽर्थतो वा शेष इत्यभिमानः । एतदर्थकं शेषग्रहणं प्रत्याख्यातमित्याह—प्रत्याख्यानमिति । आकडारसूत्रोक्तमित्यर्थः । यत्नतोऽर्थतश्च शेषे द्वीरावतीके दोषः, यत्नत एव शेषे वीरपुरुषकादौ दोषः । समासविधाविति । 'सप्तमी शौण्डैः', 'नदीभिश्च', 'अन्यपदार्थे च संज्ञायाम्', 'मयूरव्यंसकादयश्च', 'न'ञित्यत्रेति भावः । यत्नतोऽर्थतश्च शेषार्थकस्य तस्य प्रत्याख्याने 'परंकार्य'मिति पाठेऽन्यग्रहणमावश्यकमित्याह—तत इति ॥ नीलोत्पलं सर इति । इदमुपलक्षणं बहुपदकबहुव्रीहिः स्वपदार्थेऽपि स्यादित्यपि बोध्यम् । परिनिष्ठितविभक्त्या समासमजानतो भाष्ये–'अक्रियमाणे' इत्याद्युक्तिरिति बोध्यम् । कण्ठेकाल इत्यादिश्चेति । बहुपदके बहुव्रीहिविधानं सावकाशमिति वक्तुं युक्तम् ।

ततश्चेति । न चैकसंज्ञाधिकाराद्बहुव्रीहिसंज्ञया कर्मप्रवचनीयत्ववाधे यत्वं स्यात् । किं च

* शेषो बहुव्रीहिः २. २. २३. † १. ४. १ वा० १९.

## षष्ठी शेषे ॥ २ । ३ । ५० ॥

शेष इत्युच्यते कः शेषो नाम ? कर्मादिभ्यो येऽन्येऽर्थाः स शेषः । यद्येवं शेषो न प्रकल्पते । न हि कर्मादिभ्योऽन्येऽर्थाः सन्ति । इह तावद् 'राज्ञः पुरुष' इति राजा कर्ता पुरुषः संप्रदानम् । 'वृक्षस्य शाखे'ति वृक्षः शाखाया

प्र०— षष्ठी शेषे । कः शेष इति । किमप्रधानं शेषः, उतोपयुक्तादन्यः । पूर्वस्मिन् पक्षे सर्वेषां कारकाणां क्रियार्थत्वाच्छेषत्वमिति तत्रापि षष्ठीप्रसङ्गः । सर्वत्र कर्मादीनां सद्भावादुत्तरोऽपि शेषार्थो न प्रकल्पत इति प्रश्नः । कर्मादिभ्य इति । कर्माद्यनन्तरं शेषशब्द उच्चार्यमाणस्तेभ्योऽन्यमर्थं प्रतिपादयति । येऽन्येऽर्था इति । स्वस्वामिभावादयः संबन्धा इत्यर्थः । तदुक्तम्—

> संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।
> श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते ॥ इति ।

तत्राश्रुतायां क्रियायां 'राज्ञः पुरुष' इत्यादौ क्रियाकारकसंबन्धपूर्वकोऽन्य एव स्वस्वामिभावादिकः संबन्धः प्रतीयते । 'मातुः स्मरती'त्यादौ तु श्रूयमाणे क्रियाशब्दे सदपि कर्मत्वमविवक्षित्वा विशेषणभाव एव स्मरणं प्रति मातुः प्रतिपाद्यते—'मातृसंबन्धि स्मरण'मिति ।

अविदिताभिप्रायः पर आह—यद्येवमिति । क्रियामन्तरेण संबन्धाभावात्सर्वत्र तस्या अवश्यं भावात्तन्निमित्तस्य च कर्मादेरिति भावः । राजा कर्तेति । 'राजा पुरुषाय ददाती'त्यर्थसंप्रत्ययात् । वृक्ष इति । लोकप्रसिद्ध्यैतदुक्तम् । वैशेषिकप्रक्रियया

उ०— षष्ठी शेषे । किमप्रधानमिति । 'शिष्लृ विशेषणे' इत्यतो घञि 'शिष असर्वोपयोगे' इत्यतो वा घञि निष्पन्न इत्यर्थः । तत्रापि षष्ठीप्रसङ्ग इति । न चैतस्य कर्मत्वाद्यविवक्षायां चरितार्थ्यन क्रियाकारकभावेनान्वये तत्तद्विधिभिर्बाधात्क षष्ठ्यापत्तिः, अभिहितविषयेऽपि प्रथमया बाधादिति वाच्यं, 'ज्ञोऽविदर्थस्य करणे' इत्यादिषु शेष इत्यनुवृत्तेस्तद्विषये क्रियाकारकभावेनान्वयेऽपि परत्वात्षष्ठीप्रसङ्ग इति तदर्थास्य दोषः । शेषशब्दोऽन्यवाची, तस्य प्रतियोग्याकाङ्क्षायामुपस्थितकर्मादय एव प्रकरणाद् गृह्यन्त इत्याह—कर्माद्यनन्तरमिति । ननु कर्मादिव्यतिरिक्तार्थासंभव इत्यत आह—स्वस्वामीति । क्रियाकारकेति । स्वत्वहेतुदानादिक्रियाकारकत्वपूर्वक इत्यर्थः । यत एवंविधोऽतः कारकेभ्योऽन्य इत्यर्थः । विशेषणभाव एव स्मरणं प्रति मातुरिति । क्रियाकर्मत्वमूलकविशेष्यविशेषणभाव इत्यर्थः । एतेन क्रियाकारकभाव एव सम्बन्धत्वेन विवक्षित इत्यपास्तम् । षष्ठ्यर्थे च सांसर्गिक्येव विषयता । वक्ष्यति च भाष्यकारः—'राज्ञः पुरुष इत्यत्र राजा विशेषणं पुरुषो विशेष्य' इति ।

संबन्धाभावादिति । दानादिना स्वीकरणातिरिक्तसंबन्धाभावादित्यर्थः । 'सर्वत्र तस्यास्तन्निमित्तस्य च कर्मादेरवश्यंभावा'दित्यन्वयः । ननु 'राज्ञः पुरुष' इत्यत्र राजा पुरुषस्य किंचिद्ददातीति राजा कर्ता, पुरुषः संप्रदानं भवतु नाम, 'राज्ञो वचनम्' 'विप्रस्य गौः' 'विप्रस्य

अधिकरणम् । तथा तदेतत्स्वं नाम चतुर्भिरेतत्प्रकारैर्भवति क्रयणादपहरणाद् याच्ञाया विनिमयादिति । अत्र च सर्वत्र कर्मादयः सन्ति ।

एवं तर्हि कर्मादीनामविवक्षा शेषः । कथं पुनः सतो नामविवक्षा स्यात् ? सतोऽप्यविवक्षा भवति । तद्यथा—अलोमिकैडका । अनुदरा कन्येति । असतश्च विवक्षा भवति । तद्यथा—समुद्रः कुण्डिका । विन्ध्यो [1]वर्धितकमिति ।

किमर्थं पुनः शेषग्रहणम् ?

प्रत्ययावधारणाच्छेषवचनम् ॥ १ ॥

प्रत्ययावधारणाच्छेषग्रहणं कर्तव्यम् । प्रत्यया नियता अर्था अनियतास्तत्र षष्ठी प्राप्नोति । तत्र शेषग्रहणं कर्तव्यं षष्ठीनियमार्थम्—'शेष एव षष्ठी भवति नान्यत्रे'ति ।

प्र०–त्ववयवोऽयवविनोऽधिकरणम् । विनिमयादिति । परिवर्तनादित्यर्थः । एवं तर्हीति । क्रियाकारकसंबन्धोऽपि सर्वत्र वस्तुस्थित्यास्ति, तन्निमित्तश्च स्वस्वामिभावादिविवक्षायां सन्नपि क्रियाकारकसंबन्धो न विवक्ष्यते ।

अलोमिकेति । लोमकार्याकरणात्सतामपि लोम्नामविवक्षा । अनुदरेति । सदप्युदरं महत्त्वाभावप्रतिपादनाय न विवक्ष्यते । असतश्चेति । दृष्टान्तरूपेणेदमुपात्तम् । असतो यथा विवक्षा तथा सतोऽप्यविवक्षेत्यर्थः । समुद्रः कुण्डिकेति । कुण्डिकायां बहुपानीयसंभवप्रतिपादनाय समुद्रत्वमारोप्यते । विन्ध्यो वर्धितकमिति । 'वर्धितक'शब्देन मूले स्थूलमग्रे सूक्ष्मं विशिष्टसंस्थानयुक्तं भक्तमुच्यते । तस्य महत्त्वप्रतिपादनाय विन्ध्यत्वमसदारोप्यते । अर्थनियमपक्षे शेषग्रहणस्य प्रत्याख्यानाय विचारः क्रियते—किमर्थमिति ।

उ०–तिका' इत्यादौ तु तदसंभवाच्छेषत्वं भविष्यतीत्यत आह भाष्ये—एतत्स्वं नामेति । तत्र याच्ञाशब्देन तत्पूर्वकः प्रतिग्रहो लक्ष्यते । अपहरणादिति । यथा युद्धे क्षत्रियादीनाम् । क्रयविनिमययोर्भेदमाह—परिवर्तनादिति । न विवक्ष्यत इति । न हि यद्यद्वस्तुस्थित्यास्ति तत्तदभिधातव्यं यदेव विवक्षितं तदेव कार्यकृदिति भावः । वृक्षस्य शाखेत्यादावप्याधाराधेयभावमूलकोऽवयवावयविभाव इति बोध्यम् । असतो विवक्षायाः प्रकृते न सङ्गतिरत आह—दृष्टान्तेति ।

भाष्ये—तत्र षष्ठी प्राप्नोतीति । पर्यायेणेति भावः । 'परश्चे'ति नियमेन यौगपद्यासंभवात् । ननु स्वादिवाक्येन षष्ठ्यामपि पर्यायेण प्राप्तायां पुनः षष्ठीविधानमप्राप्तांशे विध्यर्थं

[1] ३. २. ११० सूत्रभाष्ये २६७ पृष्ठे टिप्पणी ४ द्रष्टव्या ।

## अर्थावधारणाद्वा ॥ २ ॥

अथवार्था नियताः प्रत्यया अनियतास्ते शेषेऽपि प्राप्नुवन्ति । तत्र शेषग्रहणं कर्तव्यं शेषनियमार्थम्—'शेषे षष्ठ्येव भवति नान्ये'ति ।

अर्थनियमे शेषग्रहणं शक्यमकर्तुम् । कथम् ? अर्था नियताः प्रत्यया अनियताः । ततो वक्ष्यामि 'षष्ठी भवती'ति । तन्नियमार्थं भविष्यति—'यत्र षष्ठी चान्या च प्राप्नोति षष्ठ्येव तत्र भवती'ति ।

## षष्ठी शेष इति चेद्विशेष्यस्य प्रतिषेधः ॥ ३ ॥

षष्ठी शेष इति चेद्विशेष्यस्य प्रतिषेधो वक्तव्यः । 'राज्ञः पुरुष' इत्यत्र राजा विशेषणं पुरुषो विशेष्यः । तत्र प्रातिपदिकार्थो व्यतिरिक्त इति कृत्वा प्रथमा* न प्राप्नोति । तत्र षष्ठी स्यात्तस्याः प्रतिषेधो वक्तव्यः ।

प्र०- तन्नियमार्थमिति । यथा 'समे देशे यजेते'ति समविषमयोः पर्यायेण प्रसक्ते विषमस्थाने समविधिर्विषमनिवारणफलत्वान्नियमः संपद्यते, तथा षष्ठीविधिर्द्वितीयादिनिवारणफलः ।

षष्ठी शेष इति चेदिति । अस्मिन्सूत्रन्यासे दोषः, संबन्धस्य द्विष्ठत्वात्प्रधानादपि षष्ठीप्रसङ्गः । व्याकरणान्तरे तु 'गुणे षष्ठी'ति वचनान्नास्ति दोषः ।

प्रतिषिद्धायामपि षष्ठ्यां प्रातिपदिकार्थमात्रे विधीयमानायाः प्रथमायाः संबन्ध-

उ०-न तु नियमार्थमित्यत आह—समे इति । एवं च मीमांसकमतसिद्धोऽयं नियम इति भावः । व्याकरणे तु परिसंख्यापि नियमपदेनोच्यते । अर्थनियमेऽपि उत्तरार्थं शेषग्रहणमावश्यकमिति बोध्यम् । 'शक्यमकर्तु'मित्यस्यात्राकर्तुं शक्यमित्यर्थः ।

ननु शेषग्रहणाभावेऽपि दोषसत्त्वेन न्यासान्तरस्य चाश्रयणेन 'इति चे'दित्यनुपपन्नमत आह—व्याकरणान्तरे त्विति । भाष्ये—'व्यतिरिक्त' इत्यस्य प्रातिपदिकार्थातिरिक्तया राजनिरूपितविशेष्यतया सहित इत्यर्थः । यत्तु षष्ठ्यर्थसंबन्धस्यांशेनोभयनिष्ठतया प्रतीतेस्तेन प्रातिपदिकार्थातिरिक्तेन सहित इत्यर्थं इति तन्न, 'पुरुषे स्वामिकृतं स्वत्वमपि षष्ठ्याभिहितमिति पुरुषशब्दात्षष्ठी ने'त्यग्रिमभाष्येण तस्य षष्ठ्यर्थत्वोक्त्या वाक्यार्थत्वकथनानुपपत्तेः ॥ भाष्ये—षष्ठी स्यादिति । कारकप्रातिपदिकार्थव्यतिरिक्तत्वात्षष्ठ्येव स्यादित्यर्थः ।

* प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २ ३. ४६.

## तत्र प्रथमाविधिः ॥ ४ ॥

तत्र षष्ठीं प्रतिषिध्य प्रथमा विधेया—राज्ञः पुरुष इति ।

## उक्तं पूर्वेण ॥ ५ ॥

किमुक्तम् ? 'न वा वाक्यार्थत्वा'दिति† । यदत्राधिक्यं वाक्यार्थः स ।

कुतो नु खल्वेतत् पुरुषे यदाधिक्यं स वाक्यार्थ इति, न पुना राजनि यदाधिक्यं स वाक्यार्थः स्यात् । अन्तरेणापि पुरुषशब्दप्रयोगं राजनि सोऽर्थो गम्यते न पुनरन्तरेण राजशब्दप्रयोगं पुरुषे सोऽर्थो गम्यते । अस्ति कारणं येनैतदेवं भवति । किं कारणम् ? राजशब्दाद्धि भवान् षष्ठीमुच्चारयति । अङ्ग हि भवान् पुरुषशब्दादप्युच्चारयतु गंस्यते सोऽर्थः ।

ननु च नैतेनैवं भवितव्यम् । न हि शब्दकृतेन नामार्थेन भवितव्यम् ।

प्र०–स्याधिकस्य भावादप्रसङ्ग इति मत्वाह–तत्र प्रथमेति । यदत्रेति । 'राज्ञ' इत्येतत्पद-संनिधाने पुरुषस्य संबन्धित्वं प्रतीयते नान्यथा । पुरुषप्रातिपदिकं तु स्वार्थमात्रे वर्तत इति प्रथमा सिद्ध्यतीत्यर्थः । कुतो न्विति । पुरुषपदसंनिधान एव राज्ञः संबन्धि-त्वावगमो नान्यथेति ततोऽपि प्रथमाप्रसङ्गः । अन्तरेणेति । 'राज्ञ' इति केवलेऽपि पद-उच्चार्यमाणे संबन्धित्वमनियतप्रतियोगि राज्ञो गम्यते । यस्माद्राजा परोपकारित्वेन विवक्षितो न स्वनिष्ठत्वेन ।

ननु च नैतेनेति । न हि शब्दस्य भावाभावाभ्यामर्थस्य भावाभावौ क्रियेते । किं तर्हि ? अर्थस्य प्रतिपिपादयिषया विषयीकरणाकरणाभ्यां शब्दस्योच्चारणानुच्चारण-

उ०– संबन्धस्य—विशेष्यविशेषणभावस्य । भाष्ये—यदत्राधिक्यमिति । उक्तरूपम् । पदान्तरसंनिधाने प्रतीयमानत्वाच्च वाक्यार्थत्वम् । सम्बन्धित्वम्—उक्तसंबन्धकृतं राज निरूपितं विशेष्यत्वम् । राज्ञः संबन्धित्वावगमः—सम्बन्धकृतो विशेषणत्वावगमः । एवञ्च विशेषणत्वस्य वाक्यार्थत्वे तन्नियामकसंबन्धोऽपि वाक्यार्थ एवास्तीति ततोऽपि प्रथमाप्रसङ्ग इत्यर्थः । संबन्धित्वं—विशेषणत्वम् । अनियतप्रतियोगीति । अनियतविशेष्यनिरूपित-मित्यर्थः । तदाह—राजा परोपकारित्वेनेति । विशेषणत्वेनेत्यर्थः । न स्वनिष्ठत्वेन—न स्वार्थनिरूपितविशेष्यतया । भाष्ये—पुरुषे सोऽर्थ इति । किंचिदन्यपदार्थनिरूपितं विशेष्यत्वम् ।

शब्दार्थयोर्नित्यत्वाच्छब्दकृतमर्थकृतमित्यनुपपन्नमत आह—किं तर्ह्यर्थस्येति । अर्थस्य शब्दोच्चारणप्रयोजकत्वाच्छब्देऽर्थकृतत्वमिवार्थे शब्दकृतत्वं नेति भावः । प्रतिपिपादयिषये-

† २. ३. ४६ वा० २.

अर्थकृतेन नाम शब्देन भवितव्यम् । तदेतदेवं दृश्यतामर्थरूपमेवैतदेवंजातीयकं येनात्रान्तरेणापि पुरुषशब्दप्रयोगं राजनि सोऽर्थो गम्यते । किं पुनस्तत् ? स्वामित्वम् । किं कृतं पुनस्तत् ? स्वकृतम् । तद्यथा—प्रातिपदिकार्थानां क्रिया-

प्र०–लक्षणौ भावाभावावित्यर्थः । तत्र परोपकारित्वेन राज्ञो विवक्षितत्वात्षष्ठी भवति, पुरुषस्य तूपकार्यतया स्वनिष्ठत्वेन विवक्षितत्वात्प्रथमा । तदुक्तं हरिणा—

'द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते' ॥ इति ।

स्वामित्वमिति । स्वस्वामिसंबन्ध इत्यर्थः । 'समासकृत्तद्धितेषु संबन्धाभिधान'-मिति वचनात् । स्वकृतमिति । ततश्चानियतं स्वमपेक्ष्य प्रथममेव संबन्धाश्रया षष्ठी उत्पाद्यते । पुरुषसन्निधौ तु स्वविशेषप्रतिपत्तिरित्यर्थः । तद्यथेति । प्रातिपदिकार्थाना-मित्यर्थः । क्वचित्तु 'प्रातिपदिकार्थाना'मित्येव पाठः । क्रियाकृता इति । क्रियाफला

उ०- त्यस्य 'विपर्यासकरणाभ्या'मित्यनेनान्वयः । तदाह—तत्रेति । परोपकारित्वेन—विशेषण-त्वेन । षष्ठी भवतीति । तस्य विशेषणतानियामकसंबन्धबोधिका तद्गतविशेषणताबोधिका च षष्ठी भवतीत्यर्थः । पुरुषस्य तूपकार्यतयेति । 'अविवक्षितत्वेने'ति शेषः । राजादिपदा-सन्निधाने तस्योपकार्यतयान्यनिरूपितविशेष्यतयाविवक्षितत्वेन, स्वनिष्ठतया—स्वार्थमात्र-निष्ठविशेष्यतया, विवक्षितत्वादन्तरङ्गत्वात्प्रथमेत्यर्थः । द्विष्ठ इति । असौ—संबन्धः । परार्थत्वात्—परं विशेषणत्वमर्थः प्रयोजनं यस्य तत्त्वात्—विशेषणतानियामकत्वादित्यर्थः । भेदे सति विशेषणतया विवक्षितस्य संबन्धं विना विशेषणत्वासंभवेन तदाकाङ्क्षितत्वात्तत्र संबन्धो व्यतिरिच्यते—उद्भूततया प्रतीयत इति तत्रैव षष्ठीत्यर्थः । विशेष्यस्य तु स्वनिष्ठ-त्वादेव न विशेष्यतानियामकसंबन्धाकाङ्क्षेति भावः । तत्र—विशेषणशब्देन षष्ठ्यादिना प्रतीयमानः । प्रधानेऽप्युपयुज्यते । तस्य द्विष्ठत्वस्वभावत्वाद्राजादिनिरूपितविशेष्यतायाः राजादिपदसंनिधाने प्रतीयमानाया उपकारको भवतीत्यर्थः ।

राजनि सोऽर्थ इति । विशेषणत्वं सम्बन्धश्चेत्यर्थः । किं पुनस्तदिति भाष्ये 'सोऽर्थ' इत्यत्र तच्छब्दार्थः कः ? किं विशेषणत्वमेवातोऽन्योऽपीति प्रश्नः । उत्तरम्—स्वामित्वमिति । स्वामित्वं तत्कृतं विशेषणत्वं चेत्यर्थः । स्वस्वामिसंबन्ध इति । तन्मूलकं विशेषणत्वं चेत्यपि बोध्यम् । स्वस्वामिनोः संबन्धः—स्वत्वस्वामित्वोभयरूपः, स चैकदेशेन स्वनिष्ठः स्वामि-निष्ठश्चेति बोध्यम् । समासेति । स्वशब्दादैश्वर्ये आमिनचि स्वामिन्शब्द इति भावः । भाष्ये—किं कृतमिति । स्वत्ववद्वाचकपदानुपादानादिति भावः ।

उत्तरयति—स्वकृतमिति । सामान्यतः स्वमात्रनिरूपितमित्यर्थः । नन्वेवं पुरुषशब्दो-पादानं व्यर्थमत आह—पुरुषेति । ननु स्वामित्वप्रतिपिपादयिषायां 'राजा स्वामी'ति प्रयुज्यतां किमिति षष्ठीप्रयोगः ? प्रयोगाप्रयोगयोर्विषयविभागश्च कः ? सामान्यनिरूपितं स्वामित्वं च कथमित्याशङ्क्य दृष्टान्तेनोपपादयति भाष्ये—तद्यथेति । क्रियाकृताः—क्रिया-

कृता विशेषा उपजायन्ते तत्कृताश्चाख्याः प्रादुर्भवन्ति कर्म करणमपादानं संप्रदानमधिकरणमिति । ताश्च पुनर्विभक्तीनामुत्पत्तौ कदाचिन्निमित्तत्वेनोपादीयन्ते कदाचिन्न । कदा च विभक्तीनामुत्पत्तौ निमित्तत्वेनोपादीयन्ते ? यदा व्यभिचरन्ति प्रातिपदिकार्थम् । यदा हि न व्यभिचरन्त्याख्याभूता एव तदा भवन्ति कर्म करणमपादानं संप्रदानमधिकरणमिति ।

---

प्र०-पेक्षया शक्तय आश्रीयन्त इत्यर्थः । तत्कृताश्चेति । शक्तिनिमित्ताः संज्ञा इत्यर्थः । कदाचिदिति । यदा क्रियां प्रति व्यापारावेशविवक्षा भवति—'दात्रेण लुनाती'ति । कदाचिन्नेति । यदा योग्यतामात्रविवक्षा भवति 'दात्रं लवने करण'मिति ।

व्यभिचरन्तीति । यदा प्रातिपदिकार्थस्य क्रियावेशविवक्षायां शक्तिलक्षणार्थातिरेको भवति तदा प्रातिपदिकार्थतां शक्तयो न प्रतिपद्यन्त इत्यर्थः । यदा हीति । अपरोपकारित्वेन स्वनिष्ठतया यदा प्रातिपदिकार्थो विवक्षित इत्यर्थः । तदेवं 'दात्रेणे'ति यथा क्रियापेक्षया भवति तथा 'राज्ञ' इति स्वापेक्षया । यथा च स्वनिष्ठत्वाश्रयेण 'दात्रं करण'मिति भवति तथा 'राजा स्वामी'त्युक्तं भवति । आख्याभूता इति । ताः शक्तयः संज्ञामेव प्राप्ताः, न तु विभक्त्युत्पत्तिं प्रयोजयन्तीत्यर्थः । तदुक्तम्—

> स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते ।
> विभक्त्यादिभिरेवासावुपकारः प्रतीयते' ॥ इति ।

---

उ०-सामान्यनिरूपिताः । उपजायन्ते-विवक्ष्यन्ते । तदेवाह-आश्रीयन्त इति । यदेत्यादि । उभयत्रापि 'भवती'त्यस्य 'तदे'ति शेषः ।

शक्तिलक्षणार्थातिरेक इति । अयं भावः—सर्वे पदार्थाः सर्वशक्तिमन्तः । शक्तिमिश्च धर्मिणां भेदाभेदौ । तत्र भेदविवक्षायां विभक्तयः । अभेदविवक्षायां तु कारणादिशब्दैरभिधानम् । भेदविवक्षा च क्रियासामान्ये क्रियाविशेषे वा विशेषणत्वेनान्वयविवक्षायामेव भवतीति । इयमेव च क्रियां प्रति व्यापारावेशविवक्षा, यत्तस्यां विशेषणत्वविवक्षा । प्रातिपदिकार्थतां—विभक्तिसमभिव्याहारं विनापि तदर्थताम् । अपरोपकारित्वेनेति । इतराविशेषणत्वेनेत्यर्थः । स्वनिष्ठतया—स्वार्थनिरूपितविशेष्यतया । दृष्टान्तमुपपाद्य दार्ष्टान्तिके योजयति—तदेवमिति । एवं च स्वप्रकृत्यर्थस्य विशेषणतापि विभक्त्यर्थ इति बोध्यम् । संज्ञामेवेति । संज्ञाव्यवहारः—करणत्वादिव्यवहारस्तमेवेत्यर्थः । विभक्त्यभावेन शास्त्रीयसंज्ञाया अनुपयोगात् । स धर्मः—शक्तिरूपः । नाभिधीयते—सामान्यतो विशेषतो वा पृथङ्नाभिधीयते । फलाश्रयत्वादिनैव ततो बोधादिति भावः । उपकारः—स्वप्रकृत्यर्थस्येतरविशेषणतानियामकः । कर्मादिपदेन संबन्धपदेन बोधकस्य न शक्तिरूपता नापि संबन्धरूपता । अत्र 'कर्मादिशब्दैर्नाभिधीयते' इत्युक्त्या कुदन्ते सर्वत्र तदनभिधानमिति लभ्यते । न हि कृतकर्मसम्बन्धयोः कश्चिद्विशेषः, उभयत्रापि कर्मणि प्रत्ययात् । विभक्त्यादिभिरित्यत्रादिशब्द आख्यातपरमिति बोध्यम् ।

यथैव तर्हि राजनि स्वकृतं स्वामित्वं तत्र [1]षष्ठ्येवं पुरुषेऽपि स्वामिकृतं स्वत्वं तत्र षष्ठी प्राप्नोति। राजशब्दादुत्पद्यमानया षष्ठ्याभिहितः सोऽर्थ इति कृत्वा पुरुषशब्दात्षष्ठी न भविष्यति।

न तर्हीदानीमिदं भवति पुरुषस्य राजेति? [2]भवति राजशब्दात्तु तदा प्रथमा॥ न तर्हीदानीमिदं भवति राज्ञः पुरुषस्येति? भवति बाह्यमर्थमभिसमीक्ष्य॥५०॥

प्र०- पुरुषोऽपीति। संबन्धस्य द्विष्ठत्वाद् द्वाभ्यां षष्ठी प्राप्नोतीत्यर्थः। शक्तिस्तु प्रातिपदिकार्थस्यैव न क्रियास्येति विशेषः।

राजशब्दादिति। गुणप्रधानभावेनार्थद्वयमवस्थितमित्युक्तमेवत्। तत्र संबन्धो गुणे पदं न्यस्य द्विष्ठत्वात्प्रधानमपि संस्पृशति। गुणश्च प्रधानोपकाराय प्रवृत्तो रूपान्तरमाश्रयति, प्रधानं तु स्वनिष्ठमेव न तु रूपान्तरं भजते। पुरुषस्येति षष्ठ्या नैव भाव्यमिति भ्रान्त्या चोदयति—न तर्हीति। भवतीति। यदा पुरुषस्य गुणभावो राज्ञस्तु विशेष्यत्वं तदा पुरुषस्य राजेति भवत्येवेत्यर्थः। भवति बाह्यमिति। एकस्यापि वस्तुनो भिन्नविषयो गुणप्रधानभावो न विरुध्यते॥५०॥

उ०- उक्तमाशयमजानानो 'यस्मादधिक'मिति सूत्रोक्तरीत्या 'अधि ब्रह्मदत्ते पञ्चालाः' इत्यत्रापि पञ्चालशब्दाद् द्वितीयेव प्रकृते पुरुषपदात्षष्ठी प्राप्नोतीति शङ्कते भाष्ये—यथैव तर्हीति। ननु षष्ठ्या उभयत्रापत्तिवद् द्वितीयादीनामप्युभयत्रापत्तिः कुतो न कृतेत्यत आह—शक्तिस्त्विति। संबन्धस्य तु स्वत्वस्वामित्वोभयरूपतयोभयवृत्तित्वमिति भावः। यद्यप्येवं क्रियाकारकभावसंबन्धोऽपि द्विष्ठ एव, तथापि 'कर्मणी'त्यादिशास्त्रबलादिह स्वामित्वस्येव तत्र शक्तेरपि तदर्थत्वान्न दोषः। क्रियावाचकस्याप्रातिपदिकत्वादपि न तदापत्तिरिति बोध्यम्।

षष्ठ्याभिहित इति—भाष्ये। अयं भावः—'कटं भीष्म'मित्यादौ प्रकारान्तरेण द्वितीयासाधनात्परिगणनमनावश्यकम्। राजपदोत्तरषष्ठ्या स्वामित्वस्योक्तावपि पुरुषे स्वत्वं विना पुरुषनिरूपितस्वामित्वाप्रत्ययेन तत्र तत्त्वमप्यर्थायातमिति। अन्वर्थलक्षेऽपि स्वामित्वे 'राज्ञः स्व'मित्यादौ षष्ठी दृश्यते। किं च वार्तिकमते इदं परिगणनेन विरुद्धमित्यतः पूर्वमुक्तमभिप्रायं स्मारयति—गुणप्रधानभावेनेति। रूपान्तरं—विशेषणतानियामकसंबन्धवत्त्वम्। पदान्तरासमभिव्याहारेऽपीति भावः। प्रधानं त्विति। 'पदान्तरासमभिव्याहारे' इति शेषः। रूपान्तरम्—अन्यनिरूपितविशेष्यतानियामकसम्बन्धम्। तथा एवाप्रतीत्येति भावः। अनया रीत्या पञ्चालशब्दाद् द्वितीयावारणमपि कर्तुं शक्यम्। तदा पुरुषस्य राजेति। पुरुषसंबन्धी राजेति तथा बोध इति भावः॥५०॥

[1]-'तत्र षष्ठी भवत्येवं' पा०। [2]-'भवति। राजशब्दात्तु' पा०।

# अधीगर्थदयेशां कर्मणि ॥ २ । ३ । ५२ ॥

## कर्मादिष्वकर्मकवद्वचनम् ॥ १ ॥

कर्मादिष्वकर्मकवद्भावो वक्तव्यः । किं प्रयोजनम् ? 'अकर्मकाणां भावे लो भवती'ति* भावे लो यथा स्यात्—मातुः स्मर्यते । पितुः स्मर्यते ।

अथ वत्करणं किमर्थम् ? स्वाश्रयमपि यथा स्यात्—माता स्मर्यते । पिता स्मर्यत इति* ।

प्र०- अधीगर्थ। मातुः स्मरतीति। मातृस्मरणयोरवस्थानादिक्रियानिमित्तः संबन्ध इति केचिदाहुः। अन्ये तु स्मरणस्य क्रियारूपत्वात् क्रियान्तरमन्तरमन्तरेणैव द्रव्येण संबन्धोपपत्तिमाहुः। यथा द्वयोः काष्ठयोर्जतुकृतः संश्लेषो जतुनस्तु काष्ठेन स्वत एव न जत्वन्तरकृतः। कर्मादिष्विति। आदिशब्दोऽत्राश्रयवाची यथा—

> 'विष्णुरादिः पृथासूनोर्भीष्मादिश्च सुयोधनः ।
> ते जयन्ति रणे शत्रून् येषां विष्णुः समाश्रयः' ॥ इति ।

तेन कर्माश्रया द्वितीयाविधिनिमित्तभावेनोपात्ताः सकर्मका अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्मादिशब्देनोच्यन्ते। अकर्मकाणामिति। तेन 'मातुः स्मर्यते' इति भावे लकृत्यक्तखलर्था भवन्ति, कर्मणि तु लादिषु विधीयमानेषु तैरभिहितत्वात्कर्मणः षष्ठ्या न भाव्यमिति प्रथमैव भवति—'माता स्मर्यते' इति।

वत्करणं किमर्थमिति। विनापि वतिनातिदेशः सिध्यति परार्थे शब्दप्रयोगात्। स्वाश्रयमपीति। नाप्राप्ते स्वाश्रये आरभ्यमाणोऽतिदेशस्तद्बाधेत।

उ०- अधीगर्थ। 'षष्ठी कर्मणि शेषत्वेन विवक्षिते षष्ठी'ति सिद्धान्ते सूत्रार्थः। कर्मादीनामविवक्षा च शेष इति बोध्यम्। ननु मातुः कर्मत्वाविवक्षायां किंनिमित्तेन सम्बन्धेन मात्रादेः स्मरणेऽन्वय इत्यत आह—मातुरिति। अवस्थाने—विषयत्वभवने, माता कर्त्री, स्मरणमधिकरणं, तन्निमित्तकं विषयत्वं सम्बन्ध इत्यर्थः। अन्ये त्विति। स्वकर्मत्वकृतो विषयविषयिभाव एव सम्बन्ध इति भावः। कर्मव्यतिरिक्तस्याभावादादिशब्दवैयर्थ्यमत आह—आदिशब्द इति। द्वितीयाविधिनिमित्तभावेनेति। द्वितीयापवादषष्ठीविधिनिमित्तभावेनेत्यर्थः। दिवृविषये 'विभाषोपसर्गे' 'द्वितीया ब्राह्मणे' इति सूत्रद्वयारम्भसामर्थ्येनात्र प्रकरणे शेषग्रहणानुवृत्तिर्नेति वार्तिकारम्भः। यदा भावे लस्तदैवानभिहितत्वात्षष्ठी, यदा कर्मणि तदाभिहितत्वात्प्रथमैव तदाह—कर्मणि त्विति। विनापीति। अप्रयुक्ते ब्रह्मदत्तशब्दप्रयोग इवेत्यर्थः। तदभावेऽसिद्धिमुपपादयति—नाप्राप्त इति। वस्तुतस्तु 'अयं क्षत्रियो ब्राह्मण' इत्यादौ लोके वतिं विनाप्यतिदेशविषये स्वाश्रयानिवृत्तिदर्शनादिदं चिन्त्यम्। किं तु वत्यभावेऽकर्मकसंज्ञैव स्यात्। तथा च स्वाश्रयं न स्यादिति भाष्यतात्पर्यम्।

* लः कर्मणि च भावे चाकर्मकेभ्यः ३. ४. ६९.

## कर्माभिधाने हि लिङ्गवचनानुपपत्तिः ॥ २ ॥

कर्माभिधाने हि सति लिङ्गवचनयोरनुपपत्तिः स्यात् । मातुः स्मृतम् । मात्रोः स्मृतम् । मातॄणां स्मृतमिति । मातुर्यल्लिङ्गं वचनं च तत्स्मृतशब्दस्यापि प्राप्नोति ।

## षष्ठीप्रसङ्गश्च ॥ ३ ॥

षष्ठी च प्राप्नोति । कुतः ? स्मृतशब्दात् । मातुः सामानाधिकरण्यात्षष्ठी प्राप्नोति । अपर आह—'षष्ठीप्रसङ्गश्च' षष्ठी च प्रसङ्क्तव्या । कुतः ? मातृशब्दात् । स्मृतशब्देनाभिहितं कर्मेति कृत्वा षष्ठी न प्राप्नोति ।

तर्हि वक्तव्यम् ? न वक्तव्यम् । अविवक्षिते कर्मणि षष्ठी भवति । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? शेषे† इति वर्तते । शेषश्च कः ? कर्मादीनामविवक्षा शेषः । यदा कर्म विवक्षितं भवति तदा षष्ठी न भवति । तद्यथा—स्मराम्यहं मातरम् । स्मराम्यहं पितरमिति ॥५२॥

प्र०— कर्माभिधाने हीति । यद्यकर्मकवद्भावो न विधीयते तदा लादिभिः कर्मैवाभिधातव्यं न भावः, ततस्तत्सामानाधिकरण्यात् क्तान्तादीनां तदीयलिङ्गसंख्याप्रसङ्गो यथा 'माता स्मृते'ति । भावे तूत्पत्तौ क्तादीनां नपुंसकत्वमेकवचनं च भवति । षष्ठीप्रसङ्गश्चेति । यदा स्मृतशब्दे कर्मणि क्तो विधीयते तदा मातृशब्दसामानाधिकरण्याद्द्वाद्यवस्थाद्यपेक्षया यथा मातृशब्दात् षष्ठी भवति तथा स्मृतशब्दादपि स्यादित्येके व्याचक्षते । अन्ये त्वाहुः—अनभिहिताधिकारानपेक्षणेन यथा मातृशब्दात्कर्मणि षष्ठी भवत्येवं स्मृतशब्दादपि स्यादिति । ननु विद्यमानोऽप्यनभिहिताधिकारः कथं नापेक्षते इत्याशङ्क्याह—अपर आहेति ।

प्रसङ्क्तव्येति । प्रापणीयेत्यर्थः । शेष इतीति । प्रकरणं चेदं समासप्रतिषेधार्थमिति समासप्रकरणे व्याख्यातम् । तेन 'मातुः स्मृत'मिति षष्ठीसमासो न भवति । उक्तं च हरिणा—

'साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये' ॥ इति ॥५२॥

उ०— भाष्येऽकर्मकवद्भावस्य फलान्तरमाह—कर्माभिधाने हीति । हिश्चार्थे ॥ इत्येके इति । तत्रेष्टापत्तिरित्यस्वारसिकः । भाष्ये—अविवक्षिते कर्मणीति । एवं चाविवक्षितकर्मकत्वेनाकर्मकत्वाभावे लादयः सिद्धा इति भावः । नन्वेवं शेषषष्ठ्यैव सिद्धे प्रकरणमिदं व्यर्थमत आह—प्रकरणं चेति । मण्डूकानुवृत्तेरयुक्तत्वात् पूर्वसूत्रेऽपि 'शेष' इत्यस्य संबन्धो बोध्यः । साधनैरिति । करणकर्मकारकैर्व्यपदिष्टे—विगतोपदेशे विगतव्यवहारे, शेषत्वेन विवक्षित इति यावत् । श्रूयमाणक्रिये इति स्वरूपकथनम् । न च शेषत्वाविवक्षायां कृद्योगषष्ठ्या समासस्य दुर्वारत्वेनेदं व्यर्थम्, आदिकर्मणि कर्तरि क्तप्रत्ययान्तस्मृतादिभिः समासवारणार्थत्वात् । न हि तत्र कृद्योगलक्षणा षष्ठी, 'न लोके'ति निषेधादिति बोध्यम् ॥५२॥

† षष्ठी शेषे २ ३. ५०.

## रुजार्थानां भाववचनानामज्वरेः ॥ २ । ३ । ५४ ॥

[1]अज्वरिसंताप्योरिति वक्तव्यम् । इहापि यथा स्यात्—चौरं सन्तापयति । वृषलं सन्तापयति ।

अथ किमर्थं भाववचनानामित्युच्यते यावता रुजार्था भाववचना एव भवन्ति ? भावकर्तृकाद्यथा स्यात् । इह मा भूत्–नदी कूलानि रुजतीति ॥५४॥

## द्वितीया [2]ब्राह्मणे ॥ २ । ३ । ६० ॥

किमुदाहरणम् ? गां घ्नन्ति गां प्रदीव्यन्ति गां सभासद्भ्य उपहरन्ति ।

प्र०– रुजार्थानाम् । यावतेति । धातूनां भाववाचित्वाव्यभिचारात् । भावकर्तृकादिति । ल्यब्लोपे कर्मणि पञ्चमी । भावकर्तृकमाश्रित्येत्यर्थः । अथवा भावकर्तृकधात्वर्थकर्म चौरादिकं भावकर्तृकशब्देनोक्तम् । कथं पुनर्भाववचनानामित्यस्य भावकर्तृकाणामित्यर्थो भवति ? उच्यते—भावशब्देन घञादिवाच्यः सिद्धरूपोऽर्थोऽभिधीयते न तु साध्यरूपस्तस्य कर्तृत्वासंभवात् । वचनशब्देऽपि प्रत्ययार्थः कर्ता विवक्षितः कर्तरि ल्युटो विधानात् । प्रकृत्यर्थस्तु वचनक्रिया न विवक्ष्यते । तेन भावो वचनः कर्ता येषां ते भाववचनाः—भावकर्तृका इत्यर्थः संपद्यते ।

अन्ये त्वाहुः—भावे वचनं येषां ते भाववचनाः । सति भावे कर्तरि येषां वचनमुच्चारणम् । भावकर्तृकधात्वर्थप्रतिपादनाय येषामभिधानमित्यर्थः । नदी कूलानीति । 'रुजा'शब्दो व्याधौ रूढ इत्यत्र प्रसङ्ग एव नास्ति । तस्माद्रुजार्थानामिति धातुमात्रनिर्देशाश्रयमिदं प्रत्युदाहरणम् । रुजाशब्दनिर्देशे तु 'श्लेष्मा पुरुषं रुजती'ति प्रत्युदाहार्यमित्याहुः ॥५४॥

द्वितीया । किमुदाहरणमिति । पूर्वसूत्रे व्यवस्थितविभाषाविज्ञानात्सोपसर्गस्य

उ०– रुजार्थानाम् । कर्मणि षष्ठीविधानेन 'भावकर्तृका'दित्यनुपपन्नमत आह—ल्यब्लोप इति । तत्रास्याख्यानपक्षेऽप्याह—अथवेति । कर्तृत्वासंभवादिति । असत्त्वभूतस्य भवत्यर्थातिरिक्ते कर्तृत्वासंभवादिति भावः । कर्तरीति । बहुलवचनादित्यर्थः ।

अन्ये त्विति । बाहुलकाद्व्यधिकरणबहुव्रीह्याश्रयणं वरमित्यभिमानः । रुजाशब्द इति । अन्यथा 'रुजार्थाना'मिति निर्देशोऽनुपपन्न इति भावः । धातुमात्रेति । धात्वर्थमात्रेत्यर्थः । अकार उच्चारणार्थ इति निर्देशोपपत्तिरिति भावः । तदुक्तं प्रत्युदाहरणं वार्तिकमते, शेषग्रहणानुवृत्तेस्तन्मतेऽभावात् ॥५४॥

द्वितीया ब्राह्मणे । भाष्ये—पूर्वेणापीति । 'विभाषोपसर्गे' इत्यनेनेत्यर्थः । 'दिव'

---

१–'अज्वरिसन्ताप्योः' इति वार्तिकं क्वचित् ।

२–'ब्राह्मणशब्दः शतपथस्याख्या' इत्यत्र न्यासकारः । पृ० ४३० ।

नैतदस्ति । पूर्वेणाप्येतत्सिद्धम्* ।

इदं तर्हि—ग्रामस्य तदहः सभायां दीव्येयुः ॥६०॥

## प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ॥ २ । ३ । ६१ ॥

### हविषोऽप्रस्थितस्य ॥ १ ॥

हविषोऽप्रस्थितस्येति वक्तव्यम् । इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य ॥६१॥

प्र०—दीव्यतेः कर्मणि छन्दसि द्वितीयैव भविष्यति 'गां प्रदीव्यन्ती'त्यादाविति प्रश्नः । ग्रामस्येति । अत्र 'दिवस्तदर्थस्ये'ति नित्यं षष्ठी प्राप्नोति । अत्र च शेष इति नानुवर्तत इति एतत्सूत्रारम्भात्पूर्वसूत्रारम्भाच्च ज्ञायते ॥६०॥

प्रेष्यब्रुवोः । हविषोऽप्रस्थितस्येति । यदा प्रस्थितत्वेन हविर्विशेष्यते तदा षष्ठी न भवतीत्यर्थः ॥६१॥

उ०—इति सूत्रे शेषग्रहणानुवृत्त्या शेषषष्ठी, तत्त्वाविवक्षायां द्वितीयेतीदमपि सिद्धमत आह—अत्र च शेष इति । 'दिवस्तदर्थस्ये'ति सूत्रे इत्यर्थः । अत्र 'शेष' इत्यस्य संबन्धे 'विभाषोपसर्गे' इति सूत्रं समासविकल्पफलकं वाच्यम् । तथा च 'नोपसर्गे' इति पूर्वसूत्रनिषेधे शेषषष्ठ्या समासविकल्पेन रूपद्वयस्य सिद्धतया विभाषाग्रहणं व्यर्थं स्यात् । 'विभाषोपसर्गे' इत्यत्र 'शेष' इत्यस्यासंबन्धे तु वेदेऽपि तेनैव कर्मणि द्वितीयायाः सोपसर्गे सिद्धत्वेन आपाद्यरूपाभावेन निरुपसर्गेऽपि कर्मत्वाविवक्षायां 'दिव' इत्यस्याप्रवृत्त्या 'कर्मणि द्वितीये'त्येव सिद्धतया 'द्वितीया ब्राह्मणे' इत्यस्य वैयर्थ्यापत्तिः । कृति त्विदं न प्रवर्तत इति पुनर्विधानं समासाभावायेत्यपि न वाच्यमिति भावः । परे तु 'दिव' इति सूत्रे 'शेष' इत्यस्य निवृत्तिर्व्याख्यानादेव । 'नोपसर्गे' इत्यत्र 'विभाषोपसर्गे' इत्यतः पदलाघवाभावात्तिकन्ते रूपद्वयार्थं विभाषाग्रहणस्यावश्यकत्वाच्च कृति तु 'प्रतिपदविधाने'ति निषेधात् षष्ठीसमासाभाव एव । अत एव तद्भाष्यकृता न प्रत्याख्यातमित्याहुः ।

परे तु 'दिव' इति सूत्रे शेष इति संबध्यत एव । 'कर्मादिवदकर्मकवद्भवत'मिति वार्तिकरीत्या 'शतस्य दीव्यते' इति भावे इष्टः प्रयोगः सिध्यति । अत एव 'सकर्मका अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्मादित्वेनोच्यते' इति कैयटः । 'शेष' इत्यनुवृत्त्या वार्तिकप्रत्याख्याने तु एतत्सूत्रद्वयप्रत्याख्याने एव भाष्यतात्पर्यम् । 'अत्र चे'ति कैयटस्यापि—अत्र प्रकरणे इत्यर्थः । एवं चात्रत्यं भाष्यं वार्तिकरीत्या । एवं च 'ज्ञोऽविदर्थस्य' 'कृत्वोर्थे'ति सूत्रे च न शेषपदसंबन्धो मानाभावात् । अत्र च मण्डूकानुवृत्तिः । अत एव 'यदा कर्म विवक्षित मित्येवोक्तम् । अन्यथा 'कर्मादि विवक्षित'मिति वदेदित्याहुः ॥६०॥

प्रेष्यब्रुवोः । हविषः प्रस्थानासंभवादाह—यदेति ॥६१॥

* विभाषोपसर्गे २. ३. ५९.

# चतुर्थ्यर्थे बहुलं छन्दसि ॥ २ । ३ । ६२ ॥

## षष्ठ्यर्थे चतुर्थीवचनम् ॥ १ ॥

षष्ठ्यर्थे चतुर्थी वक्तव्या । या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीः† । 'तस्या' इति प्राप्ते । यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै हीतमुख्यपगल्भो या स्नाति तस्या अप्सु मारुको याभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्य क्लीबो या रज्जुं सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको जायते* । अहल्यायै जारः । मनाय्यै तन्तुः ।

प्र०— चतुर्थ्यर्थे । या खर्वेणेति । रजस्वलायाः खर्वपानादिनिषेधार्थोऽयमर्थवादः ।

उ०— चतुर्थ्यर्थे । खर्वेण—अग्निदग्धशरावेण । अञ्जलिरपक्वशरावो वा विहित इति बोध्यम् । खर्वो—वामनः रजस्वलाप्रस्तावे तैत्तिरीयश्रुतौ—'न सहासीत नास्या अन्नमद्याद् ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्तेऽथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्य'दित्युपक्रम्य 'यां मलवद्वाससं'मित्यादि । मलवद्वाससं—रजस्वलां, संभवन्ति—गर्भाधानार्थमुपगच्छन्ति । ततो जातोऽभिशस्तः मिथ्यारोपितपातकः । अरण्ये इति । 'संभवती'त्यनुवर्तते । स्तेनः—चौरः । पराचीं—लज्जादिना पराग्वलितवदनामभ्यपित्सां वा । तस्या हीतमुखी—लज्जावनतवदनः, तस्यैव व्याख्या—अपगल्भः । अप्रगल्भ इत्यर्थः । मारुको—मरणशीलः । अभ्यङ्क्ते—'तैलादिने'ति शेषः । दुश्चर्मा—कुष्ठी । प्रलिखते—चित्रादि लिखति । खलतिः—अकेशशिराः । अपमारी—अपमृत्युयुक्तः । अञ्जनं—नेत्रयोः कज्जलदानम् । श्यावदन्—मलिनदन्तः । या कृणत्ति—ओषध्यादीन् छिनत्ति । उद्बन्धुकः—गले रज्जुं बद्ध्वा मरणशीलः । उन्मादुकः—उन्मत्तशीलः ।

---

१—अस्य स्थाने "खर्वो जायते यां मलवद्वाससं सम्भवन्ति यस्ततो" पा० ।
† तै० सं० २. ५. १ ७ * तैत्तिरीयसंहिता २ ५ . १ . ६-७

"रजस्वला धर्म—रजस्वला स्त्रियों के शौच के विशेष नियम थे, जिनका पालन उन्हें प्रतिमास तीन दिन तक करना पड़ता था ।……तैत्ति० सं० में रजस्वला स्त्रियो के लिये तेरह निर्देश दिये गये हैं । उनके साथ संभोग, अरण्य में संगति तथा स्नान के बाद भी उसकी अनिच्छा होने पर उससे यौन सम्बन्ध वर्जित है । रजस्वला को तीन दिन तक स्नान, शरीर में अभ्यञ्जन ( तेल लगाना ), कंघे से बाल बनाना, अंजन लगाना, दन्तधावन करना, नख काटना या चारा काटना, सूत कातना, रस्सी बांटना, पलाश-द्रोण से अथवा पकाये हुये पात्र से

तर्हि वक्तव्यम्? न वक्तव्यम्। योगविभागात् सिद्धम्। 'चतुर्थी'। ततोऽर्थे बहुलं छन्दसी'ति ॥६२॥

## कर्तृकर्मणोः कृतिः ॥ २ । ३ । ६५ ॥

कृद्ग्रहणं किमर्थम्? इह मा भूत्—पचत्योदनं देवदत्त इति।

**कर्तृकर्मणोः षष्ठीविधाने कृद्ग्रहणानर्थक्यं लप्रतिषेधात् ॥ १ ॥**

कर्तृकर्मणोः षष्ठीविधाने कृद्ग्रहणमनर्थकम्। किं कारणम्? 'लप्रतिषेधात्'। प्रतिषिध्यते तत्र षष्ठी 'लप्रयोगे ने'ति†।

तस्य कर्मकर्त्रर्थं तर्हि कृद्ग्रहणं कर्तव्यम्। कृतो ये कर्तृकर्मणी तत्र यथा

प्र०-चतुर्थीति। षष्ठीप्रकरणात्षष्ठ्यर्थं चतुर्थी भवतीत्येको वाक्यार्थः। 'चतुर्थ्यर्थे षष्ठी'ति द्वितीयः ॥६२॥

कर्तृकर्मणोः। तस्य कर्मकर्त्रर्थमिति। कर्तृकर्मविशेषणार्थं कृद्ग्रहणमित्यर्थः।

उ०- एतदग्रे श्रुतौ—'या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेत्, अञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथायाहल्यायै जार मनाय्यै तन्तुरिति तस्मात् तिस्रो रात्रिर्व्रतं चरेत्। अहल्याया जारेत्यर्थेऽहल्यायै जारेत्यादि ॥६२॥

कर्तृकर्मणोः। यथोक्तेति। 'तस्य कर्मकर्त्रर्थं'मित्यस्याप्रार्थान्तरं वक्तुं पूर्वोक्तार्थकत्वं निरस्यतीति भावः। ननु कर्तृकर्मत्वे क्रियापेक्षे न धात्वपेक्षे इति 'धातो'रित्ययुक्तमत आह—

जल पीना आदि क्रियाओं से विरत रहना चाहिये। जो ये क्रियायें करती है, उसकी सन्तान को उसके दोषों का फल भोगना पड़ता है। उदाहरणार्थ, रजःकाल में उपभुक्ता की सन्तान अभिशस्त (संदिग्धचरित्रा या पापदोषमयी), अरण्यसंगता की स्तेन, पराची (इच्छा के विरुद्ध संगता) की शर्मीली (ह्रीतमुखी) बड़ी अधीर, असाहसी (अप्रगल्भ), स्नान करनेवाली की जल में डूब कर मरनेवाली, तेल लगानेवाली की दुश्चर्मा या कुष्ठी, कंघी करनेवाली की गजी और अपमारी (दुर्मरणयुक्त, दुर्बल), काजल लगानेवाली की कानी, दातून करनेवाली की काले दाँतोंवाली, नाखून काटनेवाली की कुनखी, धागा काटनेवाली या चर्खा चलानेवाली की नपुंसक, रस्सी बांटनेवाली की बन्धुक (स्वैराचार या फांसी लगाकर मरनेवाली) द्रोण या पर्णमात्र से पीनेवाली की उन्मादुक (पागल) होती है।"
(पतञ्जलिकालीन भारत पृ० ५८३ प्र० द० अग्निहोत्री)।

† न लोकाव्ययनिष्ठाखलर्थतृनाम् २ ३. ६९.

स्यादन्यस्य ये कर्तृकर्मणी तत्र मा भूदिति। नैतदस्ति प्रयोजनम्। धातोर्हि द्वये प्रत्यया विधीयन्ते तिङश्च कृतश्च। तत्र कृत्प्रयोग इष्यते, तिङ्प्रयोगे प्रतिषिध्यते।

न ब्रूम इहार्थं तस्य कर्मकर्त्रर्थं कृद्ग्रहणं कर्तव्यमिति। किं तर्हि? उत्तरार्थम्। "[1]अव्ययप्रयोगे ने'ति षष्ठ्याः प्रतिषेधं वक्ष्यति* स कृतोऽव्ययस्य ये कर्तृकर्मणी तत्र यथा स्यादकृतोऽव्ययस्य ये कर्तृकर्मणी तत्र मा भूत्[2]—उच्चैः कटानां स्रष्टेति।

**तस्य कर्मकर्त्रर्थमिति चेत्प्रतिषेधेऽपि तदन्त[3]कर्मकर्तृत्वात्सिद्धम् ॥२॥**

प्र०-नैतदस्तीति। यथोक्तप्रयोजनं कृद्ग्रहणमिह तावन्नोपयुज्यत इति दर्शयति। पश्चादुत्तरत्रानुपयोगं दर्शयिष्यति। इह कर्तृकर्मसंनिधानात् क्रिया संनिधीयते। क्रियाया हि कारकं भवति। सा च वाचकं धातुं प्रत्ययसहितमाक्षिपतीति मत्वाह—धातोर्हीति।

तदेवं व्यावर्त्यासंभवादिहार्थं कृद्ग्रहणं कर्तृकर्मविशेषणार्थं नोपयुज्यत इति दर्शितम्। इदानीमुत्तरार्थत्वमाशङ्क्य निराकरोति—न ब्रूम इति। 'न लोकाव्यये'त्यत्राव्ययं कृद्ग्रहणेन विशेष्यते, कृतोऽव्ययस्य ये कर्तृकर्मणी तत्र षष्ठीप्रतिषेधो यथा स्यात्कटं कृत्वेत्यादौ। अकृतस्त्वव्ययस्य कर्तृकर्मणोः षष्ठीनिषेधो मा भूदुच्चैः कटानां स्रष्टेति।

प्रतिषेध इति। 'न लोकाव्यये'ति सूत्रे अव्ययग्रहणेन कर्तृकर्मणी विशेष्येते—'अव्ययस्य ये कर्तृकर्मणी तयोः षष्ठी न भवती'ति। न च कृदन्तादव्ययादन्यस्याव्ययस्य

---

उ०-इहेति। वाचकं धातुमिति। न च स्ववाचकाक्षेपेऽपि धात्वाक्षेपे मानाभावः, 'खनती'त्याद्यर्थे जायमानानां तद्धितानामपि क्रियोपसर्जनद्रव्यवाचकत्वेन क्रियावाचकत्वात्। तदर्थाश्रयादिष्वपि कर्तृत्वादिप्रयुक्तकार्यदर्शनाच्च। अयमेव 'तस्य कर्मकर्त्रर्थ'मिति वक्तुराशय इति वाच्यम्, एतद्भाष्यप्रामाण्येन कारकान्वययोग्यक्रिया धातुवाच्यैव न तु तद्धितादिवाच्येति निर्णयेनादोषात्। एवं च 'देवदत्तेन खात्योऽस्य' 'आखिको भूमि'मित्यादयोऽपप्रयोगा एव। अत एव हितगार्दियोगे न द्वितीयादयः। न चाधिका खारी द्रोणेनेत्यमापत्तिः। तत्र प्रकृत्यादित्वाद्धेतौ वा तृतीयायाः सत्त्वेनादोषादिति पञ्चमे निरूपयिष्यामः।

भाष्ये—अकृतोऽव्ययस्य ये इति। अकृतोऽव्ययस्य प्रयोगे यत्किंचित्क्रियानिरूपिते ये कर्तृकर्मणी इत्यर्थः। सूत्रस्यापि अव्ययप्रयोगे नेत्येवार्थः।

तदन्तकर्मकर्तृत्वादिति। कृदन्तकर्तृत्वकर्मत्वमेवैतयोर्नाव्ययकर्तृत्वकर्मत्वमेतयोरित्यर्थः। तदुपपादयति—न लोकेति। अन्यथेति। सन्देहे तत्पुरुषस्यैव न्याय्यत्वम्।

---

१–'अव्यययोगे' पा०। * न लोकाव्ययनिष्ठाखलर्थतृनाम् २. ३. ६९.

२–'भूदिति' पा०। ३–'कृदन्त'।

कृत एते कर्तृकर्मणी नाव्ययस्य । अधिकरणमत्राव्ययम् ।

इदं तर्हि प्रयोजनम् । उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधं वक्ष्यति† स कृतो ये कर्तृकर्मणी तत्र यथा स्यात् कृतोर्ये कर्तृकर्मणी तत्र मा भूदिति । आश्चर्यमिदं वृत्तमोदनस्य च नाम पाको ब्राह्मणानां च प्रादुर्भाव इति । अथ क्रियमाणेऽपि कृद्ग्रहणे कस्मादेवात्र न भवति ? 'उभयप्राप्ता'विति नैवं विज्ञायत उभयोः प्राप्तिरुभयप्राप्तिः उभयप्राप्ताविति । कथं तर्हि ? उभयोः प्राप्तिर्यस्मिन्कृति सोऽयमुभयप्राप्तिः कृत् उभयप्राप्ताविति ।

अथवा कृतो ये कर्तृकर्मणी तत्र यथा स्यात् तद्धितस्य ये कर्तृकर्मणी तत्र मा भूदिति । कृतपूर्वी कटम्, भुक्तपूर्वी ओदनमिति‡ ।

ननु च वाक्येनैवानेन न भवितव्यम् । [ तत्र[1] ] द्वितीयया तावन्न-भवितव्यम् । किं कारणम् ? क्तेनाभिहितं कर्मेति कृत्वा । इनिप्रत्ययेन चापि

प्र०-कर्तृकर्मणी संभवत इति सामर्थ्यलभ्यं तत्रापि कृद्ग्रहणमित्यर्थः । कृत इति । 'स्रष्टे'त्यस्य । नाव्ययस्येति । नोच्चैःशब्दस्येत्यर्थः । तस्याक्रियावाचित्वात् । तदेवाह—अधिकरणमिति । उच्चैःस्थाने स्थितानां कटानां स्रष्टेत्यर्थः । कृतो य इति । एकस्यैव कृतो न तु भिन्नयोः कृतोरित्यर्थः । कृद्ग्रहणे हि क्रियमाणे शब्दप्रतिपादितत्वादन्य-पदार्थस्योभयप्राप्ताविति बहुव्रीहिर्लभ्यते । अन्यथान्तरङ्गत्वात्तत्पुरुषः स्यात् । अथेति । 'कृती'त्येकत्वस्याविवक्षां जातिविवक्षां वा तत्पुरुषं च मत्वा चोदयति । कृत्यन्यपदार्थे बहुव्रीहिराश्रीयत इति परिहारः । तेनाश्चर्यो गवां दोहोऽगोपालकेनेत्यादावेव नियमः प्रवर्तते ।

यद्येवमुत्तरत्रैव कृद्ग्रहणं कर्तव्यम्, अथवा व्याख्यानाद्बहुव्रीहिराश्रयिष्यते इत्याशङ्क्याह—अथवेति । कृतपूर्वीति । कृतं पूर्वमनेनेति 'सुप्सुपे'ति समासः । 'पूर्वादिनिः' 'सपूर्वाच्चे'तीनिप्रत्ययः । कर्तात्र तद्धितेनोक्त इति ततः षष्ठीप्रसङ्गाभावः । कटात्तु कर्मणः षष्ठी मा भूदित्येवमर्थं कृद्ग्रहणम् । ननु चेति । कृतपूर्वी कटमित्यनेने-त्यर्थः । द्वितीययेति । तस्याश्चाप्राप्तौ तदपवादः षष्ठ्यपि न प्राप्नोति, इहाप्यनभिहिता-

उ०-कृत्पदोपादाने तु अन्यपदार्थस्य स्पष्टत्वाद्बहुव्रीहिरेवेति भावः । भाष्ये—'प्रतिषेध'शब्दो नियमशास्त्राणां निषेधे पर्यवसानमभिप्रेत्येत्याहुः । एकत्वस्याविवक्षायामिति । बहुत्वनिमित्त-मतत्वादिति भावः । भाष्ये—कृतो ये इति । कृदन्तवाच्यग्रहसहकारेणोपस्थितायाः क्रियाया ये इत्यर्थः । तद्धितस्येति । तद्धितान्तवाच्यग्रहसहकारेणैवोपस्थितक्रियाया ये इत्यर्थः । एत-

† उभयप्राप्तौ कर्मणि २. ३. ६६. ‡ सपूर्वाच्च ५. २ ८७. १—क्वचिन्न ।

नोत्पत्तव्यम्। किं कारणम्? असामर्थ्यात्। कथमसामर्थ्यम्? सापेक्षमसमर्थं भवतीति।

यत्तावदुच्यते 'द्वितीयया तावन्न भवितव्यम्। किं कारणम्? केनाभिहितं कर्मेति कृत्वे'ति। योऽसौ कृतकटयोरभिसंबन्धः स उत्पन्ने प्रत्यये निवर्तते। अस्ति च करोतेः कटेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यति। यदप्युच्यत 'इनिप्रत्ययेन चापि नोत्पत्तव्यम्। किं कारणम्? असामर्थ्यात्। कथमसामर्थ्यम्? सापेक्षमसमर्थं भवती'ति। नेदमुभयं युगपद्भवति वाक्यं च प्रत्ययश्च। यदा वाक्यं न तदा प्रत्ययः। यदा प्रत्ययः सामान्येन तदा वृत्तिस्तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः। कृतपूर्वी। किम्? [1]कटम्। भुक्तपूर्वी। किम्? ओदनमिति।

प्र०–धिकारात्। सापेक्षमिति। कृतः पूर्वं कटोऽनेनेति विवक्षायां कटापेक्षत्वात्तद्धितेन न भाव्यमित्यर्थः।

योऽसाविति। कृतः कटोऽनेनेति वाक्ये कृतकटयोः सामानाधिकरण्यम्। अस्मिंश्चार्थविशेषे न भाव्यं वृत्त्या तस्याः सामान्यविषयत्वात्। तस्मात्कर्मसामान्ये भावे वा क्त उत्पद्यते। तत्र कृतं पूर्वमनेनेत्यस्मिन्नर्थे कृतपूर्वीशब्दो वर्तते तेन पूर्वं कृतवानित्यर्थः संपद्यते। तत्र करोतिवाच्यक्रियापेक्षमस्ति कटस्य कर्मत्वम्। तथाह हरिः—

उ०–द्वितीयाभवनाभावे हेतुमाह–तत्र द्वितीययेति। कटापेक्षत्वादिति। 'कृत' इत्यस्य विशेष्यतया कटसापेक्षत्वादित्यर्थः। अन्यथा क्रियायाः कारकांशे नित्यसापेक्षतयासङ्गतिः स्पष्टैवेति बोध्यम्। नित्यसापेक्षस्थलेऽपि क्वचिदेव समासो न सर्वत्रेत्याशयमन्ये।

भाष्ये–योऽसौ कृतकटयोरिति। यः कृतकटयोः सामानाधिकरण्यरूपः सम्बन्धो वाक्ये दृष्टः स उत्पन्ने प्रत्यये दृष्टे प्रत्यये इनौ निवर्तते—'निवृत्त' इति बुद्धिविषयो भवति, भावविषयकृतशब्देन वृत्तिसत्त्वात्तत्राप्यादर्शनात्तद्धितार्थैकार्थीभूतस्य कृतस्य कटेन सम्बन्धाभावादिति भावः। ननु विशेषातिरिक्तसामान्यसद्भावे मानाभावात्कृधात्वर्थफलाश्रयः केनाभिहित इति ज्ञानकाले तदर्थफलेऽन्वितस्य कटस्यानभिहिततया वक्तुमशक्यत्वाच्च 'कर्मसामान्ये' इत्यसङ्गतमत आह भावे वेति। अविवक्षितकर्मतया अकर्मकत्वम्। फलांशे प्रागाश्रयविशेषान्वयाविवक्षैवात्र कर्माविवक्षेत्याहुः। कृतं पूर्वमनेनेति। अर्थप्रदर्शनमात्रमेतन्नत्वयं प्रयोगः साधुः। प्रत्ययोत्पत्त्यनन्तरं भाष्ये सामानाधिकरण्यनिवृत्त्युक्तेर्वाक्ये कृतकटयोः सामानाधिकरण्येन प्रयोगस्यैव साधुत्वात्। कर्मत्वमिति। अस्त्यनभिहितं कटस्य कर्मत्वमित्यर्थः।

१–'कटमिति' पा०।

अथवेदं प्रयोजनं कर्तृभूतपूर्वमात्रादपि षष्ठी यथा स्यात्—भेदिका* देव-

---

प्र०— 'विशेषकर्मसंबन्धे निर्भुक्तेऽपि कृतादिभिः।
विशेषनिरपेक्षोऽन्यः कृतशब्दः प्रवर्तते ॥
अकर्मकत्वे सत्येवं क्तान्ते भावाभिधायिनि।
ततः क्रियावता कर्त्रा योगो भवति कर्मणाम् ॥
अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः।
क्रिया संबध्यते तद्वत्कृतपूर्व्यादिषु स्थिता' ॥ इति।

कर्तृभूतपूर्वमात्रादिति। करोतीति कृदिति कर्ताभिधीयते, तत्र कर्तरि पुनः षष्ठीविधानाद् गुणभूतेऽपि भवति। एवं तु तद्धितनिवृत्तिर्न कृता स्यात्। भेदिकेति। भिदेर्ण्यन्तात्पर्यायादिषु ण्वुच्। अत्र प्रयोजकः कर्ता ण्यर्थस्य प्राधान्यात् प्रधानम्। प्रयोज्यकर्ता तु प्रकृत्यर्थस्याप्राधान्यादप्रधानम्। तत्र प्रधानाप्रधानसंनिधौ प्रधानादेव षष्ठी स्यान्नाप्रधानात्, कृद्ग्रहणात्तु भवति। अथ 'कर्तृभूतपूर्वा'दिति कथमुच्यते? न हि प्रयोजकसन्निधौ प्रयोज्यस्य कर्तृत्वमपैति। गत्यादिसूत्रनियमात्कर्मत्वाभवात्कर्तृत्व-

---

उ०— विशेषकर्मेति। कृत. कटोऽनेनेत्यस्यामवस्थायां कृतशब्देन विशेषकर्मकटादिसम्बन्धे निर्भुक्तेऽपि—अनुभूतेऽपि तस्यामवस्थायामसामर्थ्येन वृत्तिविरहात्—विशेषनिरपेक्षो भाववचनोऽन्य एव कृतशब्दः प्रवर्तते—वृत्तिं लभत इत्यर्थः। तदेवोपपादयत्यविवक्षितकर्मकतया भावे क्त इत्याह—अकर्मकत्व इति। एवं—विशेषनिरपेक्षत्वे, विशेषरहितसामान्यस्याभावादित्यर्थः। अत्र 'क्तान्तं भावाभिधायि त'दिति क्वचित्पाठः स युक्ततरः। सप्तम्यन्तपाठे—भावाभिधायिनि। 'सति समासे तद्धितोत्पत्ति'रिति शेषः। एवं सति तद्धितोत्पत्तौ यथा सामर्थ्यं न भवति तथा दर्शयति—ततः क्रियावतेति। कर्मणां—क्रियावत्कर्त्रर्थकेविना तदन्तोपस्थाप्यक्रियया योगो भवतीत्यर्थः। तत्रोपपत्तिमाह—अविग्रहेति। विशिष्य प्राधान्येन ग्रहो ग्रहणं, तद्रहिता—अप्राधान्येन गृह्यमाणापीत्यर्थः। गुणभूतक्रिययापि कारकाणां सम्बन्धदर्शनादिति भावः।

तदुक्तं भाष्ये-अस्ति च करोतेः कटेन सामर्थ्यमिति। सामान्येन तदा वृत्तिरिति। अविवक्षितकर्मतया धात्वर्थमात्रवृत्तिना भावक्तान्तेनेत्यर्थः। विशेषार्थिनेति। कर्मविशेषजिज्ञासानिवर्तकत्वमपतेत्यर्थः। एषा च विवक्षा प्रयोगानुसारात्क्वचिदेव। तेन 'घटं क्रियते' 'घटं कृत'मित्यादि नापादनीयम्। कृद्ग्रहणे कृते तु न दोषः। कर्मणः कृदन्तमात्रोपस्थाप्यक्रियान्वयाभावात्। स चाप्योत्तरीत्या न क्वापि पृथक्प्रयोग इति तन्मात्रस्य शक्तिग्रहाभावात्। अत एव 'तण्डुलानां पाचकपुत्रः' 'पाचकतर' इत्यादौ न दोषः। निषेधसूत्रेऽपि क्वादिसाहचर्याच्छिष्टाकोऽपि तथार्थ इति न निषेधप्रवृत्तिः। 'कटं कृतवत्पुत्र' इत्यादौ च निषेधप्रवृत्तिः। अत एव भाष्ये—'करोतेः कटेन सामर्थ्य'मित्युक्तं न तु 'कृतशब्दस्य कटेने'त्युक्तम्। एवं च

---

* पर्यायार्हर्णोत्पत्तिषु ण्वुच् ३. ३. १११.

दत्तस्य यज्ञदत्तस्य काष्ठानादिति ॥६५॥

## उभयप्राप्तौ कर्मणि ॥ २ । ३ । ६६ ॥

**उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेधः ॥ १ ॥**

उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगे प्रतिषेधो न भवतीति वक्तव्यम् । भेदिका देवदत्तस्य काष्ठानाम् । चिकीर्षा विष्णुमित्रस्य कटस्य ।

अपर आह–'अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यं शेषे विभाषा'। शोभना खलु पाणिनेः सूत्रस्य कृतिः । शोभना खलु पाणिनिना सूत्रस्य कृतिः । शोभना खलु दाक्षायणस्य संग्रहस्य कृतिः । शोभना खलु दाक्षायणेन संग्रहस्य कृतिरिति ॥६६॥

---

प्र०–स्यैवावस्थानात् । एवं तर्हि प्राधान्यस्यात्र भूतपूर्वत्वं विवक्षितम् । प्रधानत्वात्कर्तु-रित्यर्थः । एतच्च विशेषापेक्षायां प्रयोजनमुक्तम् । यदा तृतीयावत् कर्तृमात्रे षष्ठीत्याश्रीयते तदा भिन्नशब्दवाच्ययोः प्रधानाप्रधानयोः कर्त्रोरेकशब्दवाच्यताया अभावाद्विरोधाभावात् षष्ठी सिध्यतीति नेदं कृद्ग्रहणस्य प्रयोजनम् । तद्धितनिवृत्तिस्तु प्रयोजनमेव ॥६५॥

उभयप्राप्तौ । षष्ठ्याः प्रतिषेध इति । नियमेनानेन कर्तुः षष्ठी प्रतिषिध्यत इत्यभिप्रेत्यैतदुक्तम् । भेदिकेति । पर्यायादौ ण्वुच् । शेषे विभाषेति । अकाकारव्यतिरिक्तस्त्रीप्रत्यय एव नान्यस्मिन्निति केचिदाहुः । अपरे तु प्रत्ययमात्रेऽकाकारवर्जिते विकल्पमिच्छन्ति, 'शब्दानामनुशासनमाचार्यस्य, आचार्येणे'ति वा ॥६६॥

---

उ०–सकर्मकधातावीदृशविवक्षया भावे क्तप्रत्यय ईदृशसमासविषय एव नान्यत्रेति भाष्यस्वरसाल्लभ्यते । '[1]भ्रान्तं देश'मित्यादौ तु 'गत्यर्थाकर्मके'ति भावे क्तो बोध्यः । एतच्च विशेषापेक्षायामिति । अत्रैव प्रधानन्यायो न तृतीयादिविधाविति विशेषापेक्षायामित्यर्थः । विरोधाभावे हेतुरेकशब्दवाच्यत्वाभावः । तदुपपादकं—भिन्नशब्दवाच्ययोरित्यादीति बोध्यम् ॥६५॥

उभयप्राप्तौ । नियमेनानेनेति । नियमशास्त्राणां निषेधे तात्पर्यात्, अन्यथानुवादवैयर्थ्यापत्तिरिति भावः । स्त्रीप्रत्यय एवेति । भाष्ये अकाकारयोर्भेदिका चिकीर्षेति कृतिरिति च स्त्रीप्रत्यय एवोदाहरणदानादिति तदाशयः । अपरे त्विति । नोदाहरणमादरणीयमिति तद्भावः ॥६६॥

---

1–'भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलम्' ( भर्तृ० वैराग्यशतके २ )

# क्तस्य च वर्तमाने ॥ २ । ३ । ६७ ॥

## क्तस्य च वर्तमाने नपुंसके भाव उपसंख्यानम् ॥ १ ॥

क्तस्य च वर्तमाने नपुंसके भाव† उपसंख्यानं कर्तव्यम् । छात्रस्य हसितम् । नटस्य भुक्तम् । मयूरस्य नृत्तम् । कोकिलस्य व्याहृतमिति ।

[¹तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।]

## शेषविज्ञानात्सिद्धम् ॥ २ ॥

शेषलक्षणात्र षष्ठी‡ भविष्यति । शेष इत्युच्यते कश्च शेषः ? कर्मादीनामविवक्षा शेषः । कथं पुनः सतो नामाविवक्षा स्याद् यदा छात्रो हसति, नटो भुङ्क्ते, मयूरो नृत्यति, कोकिलो व्याहरति ? सतोऽप्यविवक्षा भवति । तद्यथा—अलोमिकैडका । अनुदरा कन्येति । असतश्च विवक्षा—समुद्रः कुण्डिका । विन्ध्यो[3] वर्धितकमिति ।

यद्येवमुत्तरत्र* चातुःशब्द्यं प्राप्नोति इदमहेः सृप्तम्** । इहाहिना सृप्तम् ।

प्र०— क्तस्य च । छात्रस्य हसितमिति । हासो हसितमिति नपुंसके भावे क्तः । तत्र च्छात्रस्य कर्तृत्वात्तृतीयाप्रसङ्गे षष्ठीविधानार्थं वचनम् । शेषश्च क इति । कर्तृत्वसद्भावान्नास्ति शेषत्वमिति प्रश्नः । कर्मादीनामिति । सदपि छात्रस्य कर्तृत्वमविवक्षयापाक्रियते । संबन्धित्वमात्रं ह्यत्र विवक्षितम् । छात्रस्य संबन्धि हसितमित्यर्थः । उत्तरत्रेति । 'अधिकरणवाचिनश्च'त्यत्र । इदमिति । अत्राधिकरणे क्तः । तेनाभिहित-

उ०— क्तस्य च । नपुंसके भाव इति । इदं वार्तिकं 'लक्षणप्रतिपदोक्त'परिभाषया काक्कोदासीन—'नपुंसके भावे क्त' इतिसूत्रविहितक्तयोग एव । तेन भूते भावे क्तेन योगे तृतीयैवेति वार्तिकमतम् । यद्यपि शेषत्वविवक्षयापि सिद्धं तथापि कर्तृत्वप्रकारके बोधे षष्ठ्यर्थमिदमिति वार्तिकाशयः । भाष्यकारस्तु तादृश एवार्थे साधुत्वमङ्गीकृत्य प्रत्याचख्यौ ।

भाष्ये—यद्येवमिति । एवं—शेषत्वविवक्षया षष्ठ्यङ्गीकारे । अधिकरणवाचिनश्चेत्यत्रेति । एतत्सूत्रोदाहरणविषयीभूतगत्यर्थे इत्यर्थः । तत्र हि 'क्तोऽधिकरणे च ध्रौव्यगती'ति ! विशेषविधानान्नपुंसके भावे क्त इत्यस्याप्रवृत्तिरेवेति वार्तिकमते वार्तिकेन षष्ठी न प्राप्नोति । शेषत्वविवक्षायाश्च भावविषयेऽभाव एवेति वार्तिकमते त्रैशब्द्यम् । प्रत्याख्यातृमते च शेषे षष्ठी स्यादिति चातुःशब्द्यमित्यर्थः । तदेवाह—तत्र शेषेति । कर्माविवक्षयाकर्मकत्वे

† नपुंसक भावे क्तः ३. ३ ११४ १-क्वाचित्कोऽयं पाठः ।
२-इदं भाष्यमिति P. S. Subrahmanya Shastri. ‡ षष्ठी शेषे २. ३ ५०.
३-३ २ ११० सूत्रभाष्ये २६७ पृष्ठे ४ टिप्पणी द्रष्टव्या । * अधिकरणवाचिनश्च २.३.६८.
**क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ३. ४. ७६.

इहाहिः सुप्तः । इहाहेः सुप्तं ग्रामस्य पार्श्वे ग्रामस्य मध्य इति । इष्यत एव चातुःशब्द्यम् ॥६७॥

## न लोकाऽव्ययनिष्ठाखलर्थतृनाम् ॥ २ । ३ । ६९ ॥

### लादेशे सल्लिङ्ग्रहणं किकिनोः प्रतिषेधार्थम् ॥ १ ॥

लादेशे सलिङ्ग्रहणं कर्तव्यम् । सलिटोः प्रयोगे नेति वक्तव्यम् । किं प्रयोजनम् ? किकिनोः प्रतिषेधार्थम् । किकिनोरपि प्रयोगे प्रतिषेधो यथा स्यात्—'पपिः सोमं ददिर्गाः'* ॥ किं पुनः कारणं न सिध्यति ?

### तयोरलादेशत्वात् ॥ २ ॥

न हि तौ लादेशौ ॥ अथ तौ लादेशौ स्यातां स्यात्प्रतिषेधः ? बाढं

प्र०-मधिकरणमिति इदंशब्दात्प्रथमा कृवा, अहिशब्दात्त्वधिकरणवाचिनश्चेति षष्ठी। इहाहिना सुप्तमिति । अत्र भावे क्तः । इहाहिः सुप्त इति । तत्र कर्तरि क्तः । इहाहेः सुप्तमिति । भाव एव क्तः । तत्र शेषविवक्षायां षष्ठी स्यादिति चोद्यम् । इष्यत एवेत-परिहारः । 'ग्रामस्य पार्श्वे' इति सप्तमीप्रयोगेण नायमधिकरणे क्तः कृतः, किं तर्हि भाव इति दर्शयति ॥६७॥

न लोकाव्यय । लादेश इति । लग्रहणमपनीय सल्लिङ्ग्रहणं कर्तव्यम् । तत्र सद्ग्रहणेन शतृशानचौ गृह्येते । लिङ्ग्रहणेन च कानच्क्वसू , लिट्संज्ञाविधानात्किकिनौ च । लग्रहणे तु किकिनोरलादेशत्वाद् ग्रहणाप्रसङ्गः । अथ ताविति । लिट्कार्याति-देशाल्लादेशतुल्यावित्यर्थो विवक्षितः । परस्तु यथोक्तमभिप्रायमप्रतिपद्य लादेशत्वमेवा-नयोर्विप्रतिपन्नमिति मत्वाह—बाढं स्यादिति । वक्ष्यामीति । व्याख्यास्यामीत्यर्थः ।

उ०-इमानि चत्वारि रूपाणि, सकर्मकत्वे तु अहिना सुप्तो ग्राम इति पञ्चममपि बोध्यमिति केचित् । सप्तमीप्रयोगेणेति । इहेति सप्तमीप्रयोगेणैवेदं दर्शितम् । इहपदार्थस्यैव चेदं विव-रणं भाष्ये इति बोध्यम् । किं तर्हि भाव इति । 'इदमिहाहिः सुप्त' इत्युदाहरणे कर्तरि-क्तस्योपलक्षणम् ॥६७॥

न लोकाव्यय । अपनीयेति । सल्लिङ्ग्रहणे लस्य फलाभावादित्यर्थः । लग्रहणेनैव शत्रादिकानच्क्वसूनां सिद्धत्वात्किं सल्लिङ्ग्रहणेनेत्यत आह—किकिनौ चेति । 'के'त्यस्य लादेश-योग इत्येवार्थः । प्रयोग इति तु न शङ्क्यम् । आदेशे लत्वस्याविधित्वेन स्थानिवत्त्वा-योगात् । लिट्कार्यातिदेशादिति । लिड्वद्विधानेनैव सिद्धौ तद्वदतिदेशाल्लादेशतुल्यावित्यर्थ इति भावः । व्याख्यास्यामीति । संज्ञां न व्याख्यास्यामि किं त्वतिदेशं व्याख्यास्यामीत्यर्थः ।

* ऋ० सं० ६. २३. ४.

स्यात् । लादेशौ तर्हि भविष्यतः । तत्कथम् ? 'आदृगमहनजनः किकिनौ लिट च' [ ३. २. १७१ ] इति 'लिड्व'दिति वक्ष्यामि । स तर्हि वतिनिर्देशः कर्तव्यो न ह्यन्तरेण वतिमतिदेशो गम्यते । अन्तरेणापि वतिमतिदेशो गम्यते । तद्यथा—एष ब्रह्मदत्तः । अब्रह्मदत्तं ब्रह्मदत्त इत्याह ते मन्यामहे ब्रह्मदत्तवदयं भवती'ति । एवमिहाप्यलिटं लिडित्याह लिट्वदिति विज्ञास्यते ।

उकारप्रयोगे नेति वक्तव्यम् । कटं चिकीर्षुः । ओदनं बुभुक्षुः ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । उकारोऽप्यत्र निर्दिश्यते । कथम् ? प्रश्लिष्टनिर्देशोऽयम्—उ उक ऊक, ल ऊक लोकेति ।

**उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः ॥ ३ ॥**

उकप्रतिषेधे कमेर्भाषायां प्रतिषेधो न भवतीति वक्तव्यम् । दास्याः कामुकः । वृषल्याः कामुकः ।

**अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः ॥ ४ ॥**

अव्ययप्रतिषेधे तोसुन्कसुनोः प्रतिषेधो न भवतीति वक्तव्यम् । पुरा सूर्यस्योदेतोराधेयः† । पुरा वत्सानामपाकर्तोः । पुरा क्रूरस्य विसृपो विरप्शिन्‡ ।

प्र०–परस्त्वपूर्वो वतिनिर्देशः कर्तव्यत्वेनानेन चोदित इति मत्वाह–स तर्हीति । विशेषातिदेशे च सामान्यातिदेशः प्रवर्तत एव, विशेषस्य सामान्याव्यभिचारात् । तेन लमात्रनिबन्धनः षष्ठीप्रतिषेधः किकिनोः प्रवर्तते, यदत्र लिट्संज्ञा किकिनोर्विधीयत इति मत्वा वार्तिकारम्भः । कार्यातिदेशाश्रयेण तत्प्रत्याख्यानम् ।

उकारप्रयोग इति । उकारान्तप्रत्ययप्रयोगे इत्यर्थः । उप्रत्ययोऽपि चान्तवत्त्वाद् गृह्यते । उकारोऽपीति । उश्चोकश्चेति द्वयोर्द्वन्द्वः पूर्वं क्रियते ततोऽन्येषाम् । अन्यथा

उ०–ननु लिड्वदतिदेशोऽपि कथं लमात्राश्रयषष्ठीनिषेधोऽत आह–विशेषेति । संज्ञाप्रकरणाभावादिति मत्वेत्युक्तम् ।

भाष्ये–उकारेति । कारप्रयोगेण वर्णग्रहणमिति ध्वनितम् । तत्फलमाह–उकारान्तेति । शब्दरूपं विशेष्यमादाय तदन्तविधिः । स च प्रत्यय एव साहचर्यादिति भावः । तेन 'कम्यामकङ्करिष्णु'रित्यादि सिद्धम् । 'प्रत्ययाप्रत्यययो'रिति तु वर्णग्रहणे न प्रवर्तत इति बोध्यम् ।

† काठक सं० ८ । ३.

‡ यजु० वा० सं० १. २८. काठक० १. ९. मैत्रा० १. १. १०. तै० १. १. ९. ३.

## शानंश्चानश्शतृणामुपसंख्यानम् ॥ ५ ॥

शानंश्चानश्शतृणामुपसंख्यानं कर्तव्यम् । सोमं पवमानः । [१]नडमाघ्नानः । अधीयन् पारायणम्* । 'लप्रयोगे ने'ति प्रतिषेधो न प्राप्नोति । मा भूदेवं तृनित्येवं भविष्यति । कथम् ? 'तृ'निति नेदं प्रत्ययग्रहणम् । किं तर्हि ? प्रत्याहारग्रहणम् । क संनिविष्टानां प्रत्याहारः ? 'लटः शत्रि'त्यतः प्रभृत्यातृनो नकारात्† ।

यदि प्रत्याहारग्रहणं 'चौरस्य द्विषन्' 'वृषलस्य द्विषन्' अत्रापि प्राप्नोति‡ ।

## द्विषः शतुर्वावचनम् ॥ ६ ॥

द्विषः शतुर्वेति वक्तव्यम् । तच्चावश्यं वक्तव्यं प्रत्ययग्रहणे सति प्रतिषेधार्थम् । तदेव प्रत्याहारग्रहणे सति विध्यर्थं भविष्यति ॥६६॥

# अकेनोर्भविष्यदाधमर्ण्ययोः ॥ २ । ३ । ७० ॥

## अकस्य भविष्यति ॥ १ ॥

अकस्य भविष्यतीति वक्तव्यम् । यवाल्लावको व्रजति । ओदनं भोजको व्रजति । सक्तून्पायको व्रजति†† ।

प्र०-'लवुके'ति स्यात् । लप्रयोगे नेति । एतेषां चालादेशत्वात् ॥६९॥

अकेनोः । यथासंख्यापवादार्थं वचनम्—अकस्येति । स्वरितत्वाप्रतिज्ञानाद्यथासंख्याभावव्याख्यानं चेदमित्याहुः । अकस्य त्वाधमर्ण्ये नास्ति विधानमिति भविष्य-

उ०- एतेषां चेति । पूङ्यजोः शानन्नित्यादीनामित्यर्थः । भाष्ये—प्रतिषेधार्थमिति । षष्ठ्या. सिद्धत्वेन प्रतिषेधमात्रफलकं वार्तिकमिति भावः । तदेव विध्यर्थमिति । नित्यं प्रतिषेधे प्राप्ते पक्षे षष्ठीविध्यर्थमित्यर्थः ॥६९॥

अकेनो । स्वरितत्वेति । 'यथासंख्य'सूत्रे 'स्वरितेने'त्यनुवृत्तेरिति भावः । भविष्यद्-

१—'नडस्तु धमनः पोटगलः' इत्यमरः । 'नरसल' 'नरकट' 'नरई' इति भाषायाम् । ६. १. ३२ वा० ६ पृ० ३४३ भाष्ये टिप्पणी द्रष्टव्या । 'नटमाघ्नानः' पा० ।

* पूङ्यजोः शानन्; ताच्छील्यवयोवचनशक्तिषु चानश्; इङ्धार्योः शत्रकृच्छ्रिणि ३. २. १२८-१३०. † लटः शतृशानचाव० ३.२ १२४ इत्यारभ्य तृन् ३.२.१३५ पर्यन्तम् ।

‡ द्विषोऽमित्रे ३. २. १३१. †† तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३. ३ १०.

### इन आधमर्ण्ये च ॥ २ ॥

तत इन आधमर्ण्ये च भविष्यति चेति वक्तव्यम् । शतं दायी । सहस्रं दायी** । ग्रामं गमी[†] ॥७०॥

## कृत्यानां कर्तरि वा ॥ २ । ३ । ७१ ॥

कर्तृग्रहणं किमर्थम् ?[1] कर्मणि भूदिति । नैतदस्ति प्रयोजनम् । भावकर्मणोः कृत्या विधीयन्ते[‡] तत्र कृत्यैरभिहितत्वात्कर्मणि षष्ठी न भविष्यति ।

अत उत्तरं पठति—

### भव्यादीनां कर्मणोऽनभिधानात्कृत्यानां कर्तृग्रहणम् ॥ १ ॥

भव्यादीनां* कर्म कृत्यैरनभिहितम् । गेयो माणवकः साम्नाम् । भव्यादीनां कर्मणोऽनभिधानात्कृत्यानां कर्तृग्रहणं क्रियते ॥ किमुच्यते 'भव्यादीनां कर्म कृत्यैरनभिहित'मिति । नेहाप्यनभिहितं भवति—आक्रष्टव्या ग्रामं शाखेति ।

प्र०–दधिकारविहितस्यैव तस्य ग्रहणम् । शतं दायीति । 'आवश्यकाधमर्ण्ययोर्णिनि'रिति णिनिः । ग्रामं गमीति । 'भविष्यति गम्यादय' इति वचनाद्भविष्यति गमेरिनिः । 'गत्यर्थकर्मणी'त्यत्र चतुर्थी वेत्येव पक्षे द्वितीयायां सिद्धायां द्वितीयाग्रहणमपवादविषयेऽपि विधानार्थं 'ग्रामं गन्ते'ति यत्कैश्चिदुक्तं तद्भाष्यकारस्य नाभिमतमिति ग्रामं गमीत्युदाहरणोपपत्तिः ॥७०॥

कृत्यानां । नेहापीति । काका तत्प्रयोगादिहाप्यनभिधानमित्यर्थः । आक्रष्टव्येति ।

उ०–धिकारेति । इदं च 'तुमुन्ण्वुलौ'वित्यत्र भाष्ये स्पष्टम् । भविष्यदर्थकस्यापि ग्रहणमिति पक्षान्तरमपि तत्र स्पष्टम् ॥७०॥

कृत्यानां । भाष्ये—भावकर्मणोरिति । तत्र भावेऽकर्मकाद्विधानेन कर्मणोऽभाव एव, कर्मणि तु सकर्मकाद्विधानेऽपि तस्याभिधानमेवेति भावः । न च 'कर्तव्यपूर्वी कट'मित्याद्यविवक्षितकर्मतया भावे तव्ये पश्चात्कर्मसन्निधाने भावेऽपि संभव इति वाच्यम् । भाष्यप्रामाण्येन कृत्यविषये तथा विवक्षाया अभावादित्याहुः ।

भव्यादीनामिति । तत्र हि कर्तरि कृत्यः, 'गेयो माणवकः साम्ना'मित्यत्र कर्मणि

---

**आवश्यकाधमर्ण्ययोर्णिनिः ३. ३ १७०.   † भविष्यति गम्यादयः ३. ३. ३.

१–[ किं प्रयोजनम् ? संख्यातानुदेशो मा भूदिति । ] इत्यधिकं क्वचित् ।

‡ तयोरेव कृत्यक्तखलर्थाः ३. ४ ७०.

* भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ३. ४. ६८.

एवं तर्हि योगविभागः करिष्यते—'कृत्यानाम्' । कृत्यानां प्रयोगे षष्ठी न भवतीति । किमुदाहरणम् ? ग्राममाकष्टव्या शाखा । ततः 'कर्तरि वे'ति ।

इहापि तर्हि प्राप्नोति—गेयो माणवकः साम्नामिति । 'उभयप्राप्ता'विति* वर्तते । ननु चोभयप्राप्तिरेवैषा[1]—गेयो माणवकः साम्नामिति च, गेयानि माणवकेन सामानीति च भवति । उभयप्राप्तिर्नाम सा भवति यत्रोभयस्य युगपत्प्रसङ्गोऽत्र च यदा कर्मणि न तदा कर्तरि, यदा कर्तरि न तदा कर्मणीति ॥७१॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये द्वितीयस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम् ॥ पादश्च समाप्तः ।

प्र०—कृषेर्द्विकर्मकत्वात्प्रधानकर्मणः कृत्येनाभिधानं न त्वप्रधानकर्मण इति तन्निवृत्त्यर्थमपि कर्तृग्रहणं कस्मान्न भवतीति भावः । एवं तर्हीति । 'कृत्याना'मित्येतावत्सूत्रं क्रियते । तत्र चो'भयप्राप्ता'विति 'ने'ति च वर्तते । तेन कर्तृकर्मणोर्द्वयोरप्युभयप्राप्तौ कृत्ये षष्ठी प्रतिषिध्यते । उभयप्राप्तिरेवैषेति । पर्यायेणेति मन्यते । उभयप्राप्तिर्नामेति । बहुव्रीहिसमासाश्रयणाद्यत्र कृत्ये युगपदुभयोः प्राप्तिस्तत्रैव षष्ठी निषिध्यत इत्यर्थः ॥७१॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटविरचिते भाष्यप्रदीपे द्वितीयस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम् ॥ समाप्तश्चायं तृतीयः पादः ।

उ०—विकल्पाभावायेत्यर्थः । तन्निवृत्त्यर्थमपीति । 'कृत्यानां प्रयोगे कर्तर्येव षष्ठी न कर्मणि, सा च वे'ति कस्मान्न व्याख्यायत इत्यर्थः । यद्यप्येवं व्याख्याने 'गेयो माणवकः साम्ना'मिति न सिध्यति, तथापि उभयप्राप्तावित्यनुवर्त्यं तत्र दोषाभाव इति भावः । अत्र पक्षे विधिसम्भवे नियमानुपपत्तिमनुभयप्राप्तिविषये 'भवतः कटः कर्तव्यः' 'भवता कटः कर्तव्य' इत्याद्यसिद्धिं च मनसि निधाय भाष्ये उक्तम्—एवं तर्हीति । कर्तृकर्मणोर्द्वयोरपीति । विकल्पस्त्वनुभयप्राप्तिविषयः, 'आकृष्टव्या ग्रामं शाखा देवदत्तेने'त्यस्यैवेष्टत्वादित्याशयः । वृत्तिस्वरसोऽप्येवमेव । भाष्ये 'ग्राममाकृष्टव्ये'त्यस्य 'देवदत्तेने'ति शेषः । 'उभयप्राप्ता'वित्यस्य सम्बन्धाज्ज्ञानेन वा कर्मकमुदाहृतम् । 'देवदत्तस्य देवदत्तेन वा कर्तव्य'मिति 'कर्तरि वे'त्यस्योदाहरणम् । ननु चोभयप्राप्तिरिति । उभयप्राप्तावित्ति तत्पुरुष इति भावः । बहुव्रीहिरित्युत्तरम् । पर्यायेणेति । कर्तरि भव्यादीनां विकल्पेन विधानादित्यर्थः । बहुव्रीहीति । कदाचित्कर्तरि कदाचित्कर्मणि कृत्यस्मरणेन कृत्यप्रत्ययभेदादेकत्र कृत्ये युगपदुभयप्राप्तिर्नास्तीति भावः । अनेन भाष्येण यत्रोभयोः प्रयोगस्तत्रैवोभयप्राप्तिरिति सूचितम् ॥७१॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्द्योते द्वितीयस्याध्यायस्य तृतीये पादे तृतीयमाह्निकम् ॥ पादश्च समाप्तः ।

* उभयप्राप्तौ कर्मणि २. ३. ६६. १—'प्राप्तिरेषा' पा० ।

